श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ यस्मिन्ज्ञानंसुपूर्णंसुखमपिसुमहद्वीर्यमौदार्यशौर्यैकां तिर्दांतिर्विरक्तिर्धृतिरतिमहतीतेजओजोबलंच ॥ रूपंसौंदर्यमत्युज्ज्वलविभवदयापूर्वसद्धर्मसंघस्सोऽव्यादाध्यादिहारीविधिभवग रुडेंद्रादिवंद्योमुकुंदः ॥ १ ॥ अनंतकल्याणगुणैकदेहंसमस्तदोषोज्झितमप्रमेयं । निरंतराबाध्यजगद्विभिन्नंनमामिनारायणमाद रेण ॥ २ ॥ पीयूषधामसच्छायकायंहेयविवर्जितं । ध्येयंहयास्यंकविभिर्गेयंवेदगणैर्नुमः ॥ ३ ॥ वादिराजमुखांभोजनिस्सृतावाक्स रस्वती । अश्वग्रीवयशोगङ्गासङ्गास्मान्पावयत्वलं ॥ ४ ॥ व्यासंमध्वंतथामध्वशिष्याञ्जयमुनीनपि । वादिराजगुरून्नत्वाव्याकु

**श्रीमद्धनुमद्भीममध्वांतर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवायनमः ॥ भक्त्यास्तुत्याविरक्त्या भजदमलजनौन्नत्यभूत्यर्पकायक्षित्यामत्यल्पभृत्येष्वपिकुजनकृतौद्धत्यभूत्याजकाय ॥ कर्त्रेधर्त्रेथहर्त्रेहय मुखहरयेऽमुत्रपात्रेनमस्तेतस्मैकस्मैचिदस्मन्मनसिधृतकथाविस्मृतौस्मारकाय ॥ १ ॥**

र्वेयुक्तिमल्लिकां ॥ ५ ॥ श्रीवादिराजयतिराजकृतप्रबंधव्याख्यानकर्मणिसुरोत्तमयोगिवर्याः । दक्षावयंतुतदुदीरणशिक्षितार्थास्त च्छ्लोक्यवाक्यचयलेखनतःकृतार्थाः ॥ ६ ॥ अबोधाद्वाप्रमादाद्वाऽयुक्तंचेल्लिखितंयदि । परिशोध्यतदस्मासुदयांकुर्वंतुसूरयः ॥ ७ ॥ श्रीमध्वाचार्यमतोक्तयुक्तिमवलंब्ययुक्तिरसिकतयायुक्तिमल्लिकाख्यग्रंथंकरिष्यमा(णस्तत्रभवा)णोभगवान्वादिराजमु निश्चिकीर्षितस्यग्रंथस्याविघ्नपरिसमाप्त्यर्थंशिष्टाचारपरंपरा(प्रमाणकं)प्राप्तंस्वेष्टदेवताप्रणामरूपंमंगलमादावाचरति ॥ भक्त्येति ॥

भक्त्यास्तुत्याविरक्त्याच भक्तिरहितस्तुत्यादेरप्रयोजकत्वात् भक्त्यास्तुत्या भक्त्याविरक्त्येतिवा । भजंतःयेअमलजनाः मात्सर्यादिदोषरहिताः निर्व्याजभक्तावा तेषांऔन्नत्यंचभूतिश्चऔन्नत्यभूती तदर्पकाय । अनेनेष्टप्रदत्वमुक्तंभवति । अत्यल्प भृत्येष्वित्यनेनातिशयितभक्त्यभावोदर्शितः । कुजनैःकृतंक्रियमाणंचयदौद्धत्यं तस्यभूस्स्थानं संपदादिनिमित्तमितियावत् तत्त्याजकाय । अनेनानिष्टनिवर्तकत्वमुक्तं । अपिपदेन अल्पभक्तेषुदयांकरोतिकिल किंमहाभृत्येष्वितिकैमुत्यंद्योत्यते । एतद्द्वयंकथंहरावित्यतःकर्त्रइत्यादिहेतुत्रयमुक्तं । जगतइतिशेषः । धर्त्रेपोषकाय । अनेनहरेःपालकत्वप्रसिद्धावपिकर्तृत्वसंहर्तृत्वयोरन्यत्रप्रसिद्धत्वात्तयोस्तेइतिशंकापरास्ता । तयोस्तत्रनिमित्तमात्रत्वेनतत्प्रसिद्धिसद्भावेपिस्वातंत्र्येणकर्तृत्वादेरसंभवात् । तथाचोक्तं भागवते । निमित्तमात्रमीशस्येत्यादि । हयमुखहरयइत्यनेनापिहरेर्विरिंचाद्युत्तमत्वंसूचितं । हयग्रीवावतारस्यविरिंचादीनांवेदोपदेशार्थत्वात् । आमुष्मिकबंधुत्वेनापिहरेर्नतिरितिभावेनोक्तं, **अमुत्रपात्रइति** ॥ अमुत्रपरलोके । ननुहरिःप्रसिद्धोनवा, आद्येतस्यचैत्रवत्साकल्येननिर्देशस्स्यात् । द्वितीये, नत्ययोगइत्यतउक्तं, **तस्मैकस्मैचिदिति** ॥ सकश्चिद्देवइतिप्रसिद्धिसद्भावेपि कृत्स्नविशेषयुक्ततयातदभावाच्चैत्रवत्साकल्येननिर्देशायोगः । अतिप्रसिद्ध्यभावेपिकिंचित्प्रसिद्धिसद्भावाद्युक्तातन्नतिरितिभावः । अस्मन्मनसिधृता अनुभूता यास्वकथा तद्भिस्मृतौसत्यांस्मारकायेत्यनेनैतद्ग्रंथोपयुक्तप्रमेयस्मारकत्वेनापितन्नतिरित्युक्तं । ऐहिकामुष्मिकसकलपुरुषार्थप्रदत्वादनिष्टनिवर्तकत्वा त्समस्तजगज्जन्मादिकारणत्वेनानंतगुणपूर्णतयासर्वोत्तमत्वा द्विरिंचादीनामपिवेदोपदेष्टृत्वा दयमेवनमस्कार्योनान्यइतिसमुदायार्थः । अस्मिन्पद्येऽतिमपादोग्रंथकर्तुस्स्वाप्नः पादत्रयंतुतदनुसारेणग्रंथकृ

॥ २ ॥

ताकृतमितिबोध्यं ॥ १ ॥ इदानींसूत्रकृतंस्मरति ॥ **पारमिति** ॥ भवाख्यजलधेःपारं, पारदं । पारदेपारव्यपदेशः अन्नदेअन्नव्यपदेशवत् । भवाख्यजलधेस्स्वभृत्यान्पारयतिसंतारयतीतिवा । संसारनिवर्तकमित्यर्थः । आरंजितामरजनं महामेरौवेदव्याख्यानादिनाआरंजितब्रह्मादिदेवगणं । सत्यवतीकुमारत्वोक्त्या तत्कुमारांतरचित्रांगदादिवत्प्राकृतविग्रहवत्त्वशंकामपाकरोति ॥ **सुखचिच्छरीरमिति** ॥२॥ इदानींभाष्यकृतंस्तौति ॥ **यत्पूर्वमिति** ॥ पूर्वंहनूमदवतारे प्रादक्षिण्येनपूर्वव्यतिरिक्त

**पारंभवाख्यजलधेर्भुवनैकसारंस्वैरंकृतोरुविधवेदपथप्रचारं ॥ आरंजितामरजनंसुखचिच्छरीरंधीरंस्मरामिहृदिसत्यवतीकुमारं ॥ २ ॥ यत्पूर्वत्वमपूर्वसिंधुमतरस्सद्वंद्य मध्वा चलादुद्यातश्शतयोजनंपरमदश्शंसंतिसंतःक्षितौ ॥ चित्रंजैत्रभवचरित्रमधुनायद्वेदवार्धितरन्नित्यंकोटिसहस्रयोजनमपित्वंराजवद्राजसे ॥ ३ ॥**

सिंधुःदक्षिणसिंधुःअपूर्वसिंधुः तमतरइतियत् अदइतिसंबंधः । अदस्तत्सिंधुतरणं शतयोजनं शतयोजनसंख्याकंशंसंति । अधुना मध्वावतारे । कोटिसहस्रयोजनं कोटिसहस्रसंख्याकवाक्ययोजनावंतमित्यर्थः । एतादृशंवेदवार्धिनित्यंतरन् त्वंराजवद्राजसइतिसंबंधः । वेदवार्धितरणंनामतद्व्याख्यानकरणं । पूर्वसिंधुतरणंशतयोजनंअधुनावेदवार्धितरणंकोटिसहस्रयोजनमितिध्वनिः । अतश्चित्रमिति । राजवदित्यनेनतदवतारकार्यादप्यत्रातिशयितकार्यकरणेबहुप्रयत्नाभावस्सूचितः ॥ ३ ॥ अधुनासूत्र

भाष्यकारयोर्वेदार्थनिर्णयेसहैवप्रवृत्तत्वात्तौयौगपद्येनप्रणमति ॥ व्यासायेति ॥ ४ ॥ श्रीशस्तेसुश्रियदद्यादित्यनेनैतद्ग्रंथस्य श्रोतुःप्रवक्तुश्चआशीर्दानरूपंमंगलमकारि । वायुर्मुख्यवायुः तत्सुतःहनूमान् तस्यप्रियोरामः । अनेनवायुश्श्वासनियामकः तत्सुतोमृतसंजीवनादिनेता तत्प्रियोविभीषणायुर्दातेतित्रेधाप्यायुर्दानसामर्थ्यंध्वनयति । अनेनश्रोतृप्रवक्तृणांसंपदायुःप्रतिष्ठादुरितनिवृत्तीनामाशंसनंकृतमितिज्ञेयं ॥ ५ ॥ नवित्तैरिति ॥ नवित्तैरुन्मत्ताइत्यनेनवित्तादिसंपत्त्याविदुषस्संपाद्यनकृतोयंग्रंथः

व्यासायभवनाशायश्रीशायगुणराशये ॥ हृद्यायशुद्धविद्यायमध्वायचनमोनमः ॥ ४ ॥ श्रीशस्तेसुश्रियंदद्यादायुर्वायुसुतप्रियः ॥ भूमिंतेवामनोदद्यादरीन्हंतुनृकेसरी ॥ ५ ॥ नवित्तैरुन्मत्तानचकुहकदुर्मंत्रबलिनोनवामिश्रैर्मिश्रानचकुजनसाचिव्यसहिताः ॥ नदुश्शास्त्रंशस्त्रंविरसमुपजीव्योद्धतधियोहयग्रीवंदेवंवयमिममुपास्यैवकृतिनः ॥ ६ ॥ हयग्रीवस्यमध्वस्य(विद्यानिधिगुरोर्गुरोः)वाण्याविद्यागुरोर्गुरोः ॥ कृपयावादिराजोहंरचयेयुक्तिमल्लिकां ॥ ७ ॥

किंतुस्वेष्टदेवताकृपयैवकृतइतिसूचयति । दुश्शास्त्रं दुश्शास्त्राख्यं शस्त्रमित्यनेनकेवलकंठशोषणहेतुतयादुश्शास्त्रस्यदुःखदत्वं ध्वनयति ॥ ६ ॥ इदानींस्वोपकारिणस्सर्वानेतान्स्वप्रयोजनसाधनेएकाग्रमनसःकर्तुमेकेनैवपद्येनसंगृह्यतत्कृपांप्रार्थयमानश्चिकीर्षितं प्रतिजानीते ॥ हयग्रीवस्येति ॥ विद्यागुरोःविद्यानिधिमुन्यादेः गुरोःवागीशमुनेः । स्वस्यवादिराजत्वमपितेषांकृपयेतिसूच ॥ ३ ॥

यितुंकृपयेत्येतत् कृपयावादिराजोहं कृपया युक्तिमल्लिकांरचय इत्युभयत्रापिसंबध्यते । युक्तयएवमल्लिकाःमल्लिकाकुसुमानि यस्यांकृतौ सायुक्तिमल्लिका । अथवा युक्तयएवमल्लिकायुक्तिमल्लिका । मल्लिकाकुसुमानांकस्तूरीमल्लिकात्वाद्यवांतरजातिभेदेपि मल्लिकात्वजातेरेकत्वाज्जात्येकवचनं । अतएवसौरभभेदः । अनेनस्वकृतेस्सकलमनोरंजकयुक्तिबाहुल्यंध्वनयति ॥ ७ ॥ ननुमतांतरंपरित्यज्यमध्वमतावलंबनेनयुक्तिमल्लिकाख्यग्रंथकरणेकिंनिमित्तमित्यतस्तद्वक्तुमुपोद्घातमाह ॥ बौद्धजैनागमाविति ॥ ८ ॥ पूर्वःपूर्वागमः । पूर्वश्चासौपक्षश्चेतिपूर्वपक्षः । अनेनतेषांपूर्वपक्षता शब्दलभ्येतिध्वनयति । पूर्वपूर्वमतस्यैवसामीचीन्ये

बौद्धजैनागमौपूर्वपक्षौसर्वागमस्यहि ॥ ततःपरस्ताज्जातेषुमतेषुचयथाक्रमं ॥ पूर्वःपूर्वःपूर्वपक्षोयावन्मध्वमतोदयः ॥ ८ ॥ अंतेसिद्धस्तुसिद्धांतोमध्वस्यागमएवहि ॥ निर्णेतुंशक्यतेयुक्तायुक्तपक्षविमर्शिभिः ॥ ९ ॥

उत्तरोत्तरमतप्रवृत्तेरेवायोगादर्थदोषवत्त्वाच्चपूर्वःपूर्वःपूर्वपक्षइतिग्रंथकृतोहृदयं । अंतेसर्वागमप्रवृत्तेरवसाने सिद्ध स्साधकप्रमाणत्रयसहिततयानिष्पन्नः । अनेनैतद्ग्रंथादप्युपरितनपरिहासकभाष्यकारवाक्यप्रबंधस्याऽऽभिमानिकप्रामाण्यकवाक्यप्रबंधस्यच सिद्धांतत्वंनिवारयति । मध्वस्यागमएवसिद्धांतइतिनिर्णेतुंशक्यतइतिसंबंधः । आहिताग्निरित्यादिवदुत्तरपदस्यपूर्वनिपातेनअंतेसिद्धस्सिद्धांतइतिव्युत्पत्त्यानिष्पन्नसिद्धांतपदार्थस्यमध्वमतएवयुक्तियुक्तत्वात् । अतएवयुक्तायुक्तपक्षविमर्शिभिरित्युक्तं । यद्यपिसिद्धांतलक्षणमन्यथापिवर्णयंति । तथापितस्याभासानाभाससाधारणतयासंकेतितस्यामुख्यत्वात् अंतेसिद्धस्सिद्धांतइति

पदयोगलभ्यत्वेनास्यैवमुख्यत्वमितिज्ञातव्यं ॥ ९ ॥ अस्मान्मध्वागमात् । उत्तरपक्षःब्रह्मसूत्रभाष्यात्मकमतांतरं । सकलागमानामुपरिकृतमध्वभाष्यादनंतरमद्यापिभाष्यांतराप्रवृत्तेरितिभावः । यदर्थमुपोद्धातस्तदिदानीमाह ॥ **तस्मादिति** ॥ तस्मात्सर्वागमांतेसिद्धत्वात् ॥ १० ॥ इत्थंपूर्वोक्तप्रकारेण युक्तिरुचिनामयेतिसंबंधः । अनेनयस्यग्रंथकृतःमतांतरंविहायैकमतावलंबनेपियुक्त्यनुसरणं किमुतस्यस्वग्रंथेतत्रतत्रवक्ष्यमाणप्रमेयेषुतदनुसरणमितिसूचितं । अतएवयुक्तिमल्लिकाक्रियतइत्युक्तं ॥ ११॥

**अ(त)स्मादुत्तरपक्षोन्योयस्मान्नाद्यापिदृश्यते ॥ तस्मात्सएवसिद्धांतइतिनिश्चित्यचेतसा ॥ १० ॥ अवलंब्य मतंसर्वोन्नतंश्रुतिपुरस्कृतं ॥ मयेत्थंयुक्तिरुचिनाक्रियतेयुक्तिमल्लिका ॥११॥ त्वंचंडालःपशुर्म्लेच्छश्चोरोजारः खरःकपिः ॥ कुंडोगोलकइत्याद्यायानिंदालोकसंमताः ॥ तास्सर्वास्सर्वजीवैक्यवादेस्युर्हिपरात्मनि ॥ १२ ॥ ब्रह्मैवहीनयोनीस्ताःप्राप्यस्वेनैवपाप्मना ॥ संसरेच्चेदियंसर्वागालीकस्यगलेवद ॥१३॥ अंधश्चबधिरोमूकःपंगुः पंडोविनासिकः ॥ इत्याद्याव्यंगताहेतोर्यानिंदालोकसंमताः ॥ तास्सर्वाश्चनिराकारवादेकिंनस्युरीश्वरे ॥ १४ ॥**

अधुनामायावादिमतानवलंबनेअसाधारणंप्रबलंदोषांतरंचाह ॥ **त्वंचंडालइत्यादिना** ॥ १२ ॥ १३ ॥ ब्रह्मणोजीवैक्यवादात्प्राप्तांगालीमुक्त्वानिराकारत्वोक्त्यालब्धांतामाह ॥ **अंधश्चेति** ॥ निराकारेत्युपलक्षणं । साकारत्वेपिछिन्नकर्णनासादीनांचोराणांजात्यंधबधिरादीनांचब्रह्मरूपत्वेनतत्रैवगालीनांपर्यवसानात् । एतेनैवव्यावहारिकदेहवत्त्वान्नगालीत्यपिनिरस्तं । पारमार्थि

कदशायांयुगपदेवापाताच्च ॥ १४ ॥ निर्गुणत्वोक्त्यालब्धांतामाह ॥ **विद्येति** ॥ उपलक्षणमेतत् । गुणहीननानापुरुषरूपत्वो
क्त्याचोक्तदोषापत्तिरितिज्ञेयं ॥ १५ ॥ १६ ॥ जगन्मिथ्यात्वोक्तिलब्धांगालीमाह ॥ **याचेति** ॥ १७ ॥ मायाश्रयतोक्तितः
अज्ञानाश्रयत्वोक्तेः अज्ञोसीतितुयानिंदासाभगवत्युच्यतइतिसंबंधः । ब्रह्मैवाज्ञानवशात्संसरतीत्युक्तत्वात्ब्रह्मणएवकर्मबद्धत्वो

**विद्याविनयहीनस्त्वंनिर्दयोनिर्व्रतोशुचिः ॥ औदार्यधैर्यशौर्याद्यैर्हीनइत्यादिकाश्रयाः
॥ १५ ॥ सद्गुणाभावतोनिंदास्तास्तुनैर्गुण्यवादिनां ॥ मतेस्युर्ब्रह्मणिपरेसर्वास्सर्वस्य
संमताः ॥ १६ ॥ याचग्रामतटाकादेरारामादेःकृतस्यहि ॥ मिथ्यात्वकथनान्निंदामत्सर
ग्रस्तचेतसां ॥ सासर्वासर्वमिथ्यात्ववादेस्यादेवमाधवे ॥ १७ ॥ अज्ञोसीतितुयानिं
दासामायाश्रयतोक्तितः ॥ भगवत्युच्यतेकर्मबद्धत्वोक्त्याचपापिता ॥ १८ ॥ इत्थं
विचार्यमाणेभूयस्मान्मायाविनांमतं ॥ सर्वंचलोकसंमत्याभगवन्निंदनात्मकं ॥ १९ ॥
अतोमायावादमतान्नाम्नैवातिजुगुप्सितात् ॥ भीतोहमभजंतत्त्ववादिनामेवपद्धतिं ॥ २० ॥**

क्तिरितिज्ञातव्यं ॥ १८ ॥ मायाविनांसर्वं, मायावादशास्त्रोक्तपरापरप्रमेयं ॥ १९ ॥ उपसंहरन्दोषांतरमाह ॥ **अतइति** ॥ ना
म्नामायावादइतिप्रसिद्धनाम्नाभीतः निंदांभगवतश्शृण्वंस्तत्परस्यजनस्यवा । ततोनापैतियस्सोपियात्यधस्सुकृताच्च्युतइत्यादि

वचनार्थपर्यालोचनयाभीतः ॥२०॥ रीत्यंतरेणमध्वमतस्योत्तमत्वंसाधयति ॥ **परस्मादिति** ॥ परस्माद्विकृत्यादेः पूर्वस्यप्रकृत्या
दे दौर्बल्यइत्यर्थः । पौर्वापर्येपूर्वदौर्बल्यंप्रकृतिविकृतिरितिसूत्रात् । निषेधान्निषेधरूपनिर्गुणवाक्यात् विधिबाधने विधायकसगुण
श्रुतिबाधने तेषांमायिनां सर्वेषांविदुषांभट्टादीनामित्यर्थः ॥२१॥ वादिद्वयरीत्याप्राप्तंमध्वमतोत्तमत्वंसंकलय्याह ॥ **तत्पूर्वेति** ॥
तत्तस्मात् । परेपश्चात्तने ॥ २२ ॥ अधुनामध्वमतस्योत्तमत्वेबौद्धजैनागमावित्यादिनोक्तंहेतुपंचकंसंगृह्णाति ॥ **तदिति** ॥ त
त्तस्मात् परत्वात् सर्वराद्धांतपश्चात्तनत्वात् । निषेद्धृत्वात् सर्वराद्धांतनिषेद्धृत्वात् । अंतेसिद्धेरित्यनेनअंतेसिद्धस्सिद्धांतइ

**परस्मात्पूर्वदौर्बल्येनिषेधाद्विधि(च्छ्रुति)बाधने ॥ यतोमहाग्रहस्तेषांसर्वेषांविदुषामपि ॥ २१ ॥**
**तत्पूर्वसर्वराद्धांतसिद्धार्थानांनिषेद्धरि ॥ परेचतत्ववादेस्मिन्गरीयसिभरोमम ॥ २२ ॥ तत्पर**
**त्वान्निषेद्धृत्वादंतेसिद्धेःप्रभुस्तुतेः ॥ नाम्नाचात्युल्लसंत्यासीद्वल्लीतेयुक्तिमल्लिके ॥ २३ ॥**

तिसिद्धांतपदलभ्यार्थवत्तांमध्वमतेदर्शयति । प्रभुस्तुतेः प्रभोर्नारायणस्यसगुणत्वादिवर्णनेनस्तुतिरूपत्वादित्यर्थः । नाम्नाच,
तत्ववादइतिप्रसिद्धनाम्नाच । युक्तिमल्लिकायाःपुष्पत्वेनतदुत्पत्तिहेतुभूतामध्वमताख्यवल्लीत्यर्थः । हेयुक्तिमल्लिके तेवल्ली पर
त्वादेर्हेतुपंचकादत्युल्लसंत्यासीदिति युक्तिमल्लिकाख्यग्रंथंप्रतिग्रंथकर्तुर्वचनं । तच्चस्थानादस्मात्सरसनिचुलादुत्पतोदङ्मुखःखमिति
काव्यकारशैलीमनुसृत्येतिज्ञातव्यं । कालिदासेनकृतमेघसंदेशाख्यग्रंथंप्रतिवचनपरतयापितट्टीकायांव्याख्यानात् ॥ २३ ॥ ॥ ५ ॥

स्नेहात्स्वमतस्नेहात् , विस्नेहात्परमतद्वेषादित्यर्थः । युक्त्याकृष्टेनमयेतिशेषः । केवलंयतःकृतासि ततततइतिसंबंधः ॥ २४ ॥
हृद्यपद्यरसस्निग्धामित्यनेननकेवलंयुक्तियुक्तत्वमस्यग्रंथस्य । अपितुकाव्यवद्वर्णानुप्रासादिरसयुक्तत्वमप्यस्तीत्याह ॥ २५ ॥ स्व
ग्रंथस्ययुक्तियुक्तत्वेपिमत्सरग्रस्तैराधुनिकविद्वद्भिरपरिग्रहेप्रचयोनस्यादित्यतोऽन्यापदेशेनपरिहरति ॥ अधुनेति ॥ विधुस्थानी
योमत्सरग्रस्तविद्वान् । विधोःकलंकित्वात् । मधुस्थानीयमेतद्ग्रंथार्थज्ञानं । मधुव्रतस्थानीयएतद्ग्रंथंश्रोतुकामः । अदितेर्विदिते

**नस्नेहान्नचविस्नेहाद्युक्त्याकृष्टेनकेवलं ॥ यतःकृतासितत्तर्करसिकानांमुदेभव ॥ २४ ॥ हृद्यप**
**द्यरसस्निग्धांसद्योहृद्रोचनोद्यतां ॥ विद्यामद्यानवद्यांमेकोद्वेष्टयुद्धतपद्धतिः ॥ २५ ॥ अधुनावि**
**धुनारुद्धंमधुनासीन्मधुव्रत ॥ उदितेमुदितेऽब्जेस्याददितेर्विदितेसुते ॥ २६ ॥ तार्णेवौकसिपा**
**र्णेवातापसोभूपसोवसत् ॥ तिथौतेतिथिरेतद्धद्विद्वान्काागण्यपुण्यदः ॥ २७ ॥**

सुते, आदित्यइतिनाम्नाप्रसिद्धेसूर्ये । निर्मत्सररसग्राहिविद्वत्स्थानीयोयं । अब्जेमुदितेसति, स्यान्मधिवतिपूर्वाबृत्त्यायोज्यं ।
यद्यपिरात्रौविधुनाविकसनरोधात्पद्मरसाभाववदिदानींतनमत्सरग्रस्तविद्वद्भिरपरिग्रहादर्थबोधाभावः । तथापिसूर्यवत्कस्मिंश्चि
द्विदुषिअर्थप्रदर्शकेसतिबोधःस्यादितिभावः ॥ २६ ॥ जैनाद्यागमदुराग्रहग्रस्तराजपीडायांसत्यांतंप्रतिवक्तव्यंपद्यमाह ॥ ता
र्णइति ॥ तार्णेतृणमये पार्णेपर्णमये ओकसिगृहे तापसःएतद्ग्रंथस्यकर्ताश्रोताच । भूपेतिदुराग्रहग्रस्तंराजानंप्रतिसंबुद्धिः ।

अवसदावासमकरोत् । तथाचत्वत्पीडयानकाचित्तस्यक्षतिरितिभावः । किंतुतवैवैतादृशस्तापसोदुर्लभइत्याह ॥ तिथाविति ॥ तिथौपुण्यतिथौ । एतद्वद्गण्यपुण्यदोविद्वानतिथिःक्वेतिसंबंधः । तथाचतवैवतदपेक्षेतिभावः ॥ २७ ॥ आभासविद्वत्कृताभास ग्रंथसाम्यंस्वग्रंथस्यपरिहर्तुमन्यापदेशमाह ॥ तुलयेति ॥ मलयाद्युत्थचंदनेनमलयजेनचंदनेनेत्यर्थः । तेनसहयःकश्चित्खलः इंधनंतुलाभागयोर्निक्षिप्य समंतात्समंकुरुतान्नाम तथापि चंदनग्रंथाविव ग्रंथौइंधनग्रंथौ गंधंकःकरोति (तु) नकोपीत्यनेल चंदनेंधनयोस्समत्वाभाववन्निर्युक्तिकसयुक्तिकयोर्ग्रंथयोर्नसाम्यमितिभावः ॥ २८ ॥ तथाचसयुक्तिकत्वाद्युक्तिमल्लिका विदुषां

तुलयामलयाद्युत्थचंदनेनेंधनंखलः ॥ समंसमंतात्कुरुताद्ग्रंथौगंधंकरो(तु)तिकः ॥ २८ ॥ सूक्तिर
त्नस्वभावाभापूज्यात्याज्यानकोविदैः ॥ गुणेमणेर्हिमात्सर्यंकार्यंनार्यैःकदाचन ॥ २९ ॥ विदु
षोऽविदुषोपीष्टाकंजनंरंजयेन्नगीः ॥ भ्रमरैरमरैश्चार्थ्यंकुसुमं(कः पु)कोऽसुमांस्त्यजेत् ॥ ३० ॥

ग्राह्येत्याह ॥ सूक्तीति ॥ सूक्तयएवरत्नानि तेषांस्वभावाभा स्वाभाविककांतिरित्यनेनबलात्कारयुक्तिर्नास्तीतिसूचयति । पूज्या, कोविदैर्नत्याज्येत्यत्रार्थांतरन्यासंकरोति ॥ गुणइति ॥ मणेर्गुणेप्रकाशइत्यर्थः । कदाचनकदापि ॥ २९ ॥ युक्तिसाहित्ये नरससाहित्येनचमान्येयंविद्येत्याह ॥ विदुषइति ॥ युक्तिसाहित्याद्विदुषःरससाहित्यादविदुषोपीष्टेत्यर्थः । कंजनंनरंजयेत् सर्वमपिजनंरंजयेदेव । अस्मिन्नर्थेऽर्थांतरन्यासः ॥ भ्रमरैरिति ॥ अविद्वत्स्थानीयाभ्रमराः विद्वत्स्थानीयाअमराः कुसुमस्था

नीयाविद्येतिज्ञातव्यं ॥ ३० ॥ अधुनाविद्वदविद्वत्परिग्रहयोर्विद्वत्परिग्रहएवज्यायान् विदुषएवमान्यत्वादितिभावेनाह ॥ विद्येति ॥ विद्यासद्विद्या अविद्यातद्विरोधिनी । एतद्विभागंजानातीतिसतथोक्तः । अज्ञः प्राज्ञवद्विद्याऽविद्याविभागज्ञो भवेत्किमितिसंबंधः । तत्रार्थांतरंन्यस्यति ॥ अंधस्येति ॥ यथांधस्येंदूदयेपिपदार्थादर्शनलक्षणमांध्यं तथांधकारोदयेप्यांध्यंदृष्टंहि । तद्वदज्ञस्सर्वदाऽज्ञएवेतिभावः ॥ ३१ ॥ इदानींयुक्तिपारवश्येनसकृदेतद्ग्रंथार्थपरिग्रहेपिपश्चाद्विस्मरतोदोषमाह ॥ गृहीतमिति ॥ योगृहीतमर्थंपश्चान्नजहातिनविस्मरति समहान्वाइत्यत्रार्थांतरन्यासः ॥ तृणग्राहीति ॥ पौर्णमासीविधुश्शशी

विद्याऽविद्याविभागज्ञःकिमज्ञःप्राज्ञवद्भवेत् ॥ अंधस्येंदूदयेप्यांध्यमंधकारोदयेपिहि ॥ ३१ ॥
गृहीतमर्थंयःपश्चान्नजहातिसवैमहान् ॥ तृणग्राहीमणिर्मान्यःपौर्णमासीविधुश्शशी ॥ ३२ ॥
गृह्णीयात्तिंत्रिणीशाखांशिग्रुशाखाग्रहेणकिं॥जगृहुस्तद्विदोवेदंवादिवाक्यान्यकोविदाः॥ ३३ ॥

त्यनेनगृहीतशशापरित्यागंविधोस्सूचयति । तथाचगृहीतार्थाविस्मर्तैवमान्यइतिभावः ॥ ३२ ॥ अधुनाशिष्यमनस्समाधानाय परमतनिराकरणात्मकसमयपादोक्तमपिसमयनिराकरणंप्राक्प्रस्ताव्य पुनःसमन्वयाध्यायप्रतिपाद्यंसर्वगुणपूर्णत्वंगुणसौरभसर्वस्वेनमनःप्रियंकुर्वन् तदनंतरमविरोधाध्यायप्रतिपाद्यंनिर्दोषत्वंशुद्धिसौरभसर्वस्वेनरंजयन् पुनरेतदध्यायद्वयेपिसूत्रेसूत्रेप्रतिपादितं जीवेश्वरभेदंभेदसौरभसर्वस्वेनप्रतिपादयन् तदनुजन्माद्यस्ययतइतिसूत्रप्रतिपादितजगज्जन्मादिकारणत्वलक्षणपरिरक्षणायविश्व

सौरभसर्वस्वेनजगतस्सत्यतासंस्थापयन् पुनस्साधनफलाध्यायप्रतिपाद्यंसाधनंफलंचफलसौरभसर्वस्वेनसंगृह्णन् प्रमाणाधीनाप्रमेयसिद्धिरितिन्यायेन पंचसौरभोक्तप्रमेयस्यापिप्रमाणसापेक्षत्वात्प्रमाणेषुच प्राबल्यमागमस्यैवजात्यातेषुत्रिषुस्मृतमितिवचनादलौकिकेऽर्थेप्रबलप्रमाणभूतवेदस्य नविलक्षणत्वादस्यतथात्वंचशब्दादितिसूत्रे नित्यतयाप्रतिपादितंस्वतःप्रामाण्यंसमर्थयितुंवेदापौरुषेयतांतावदादौसाधयितुमुपक्रमते ॥ गृह्णीयादिति ॥ सूत्रकृत्तुनिश्चितवेदप्रामाण्यान्ब्रह्मादीन्स्वशिष्यान्प्रतिनेदमादावसाधयत् । परनिराकरणप्रस्तावेप्रास्तावयच्च । अयंतुग्रंथकृद्भाष्यदिशामंदोपकारायप्रवृत्तस्तदेवादौसाधयतीति(ज्ञे)हृद

एकस्यवादिनोवाक्याद्धर्माधर्मव्यवस्थितौ ॥ तद्व्यत्यासःकुतोनस्याद्वाक्यै
स्तत्प्रतिवादिनां ॥ बहुत्वेनबलीयांसिवचनानीतिमेमतिः ॥ ३४ ॥

यं । तत्तस्माद्दृढादृढयोर्मध्येदृढस्यैवग्राह्यत्वात् । विदोज्ञानिनः वेदंवेदमेवजगृहुरितिसंबंधः । वादिवाक्यानि तत्तदाचार्यवाक्यानि । अकोविदाःजैनादयः ॥ ३३ ॥ ननुवेदंविहायधर्मसिद्ध्यर्थंतत्तदाचार्यवाक्यग्रहणेकोदोषइत्यतआह ॥ एकस्येति ॥ तद्व्यत्यासः तेनैकेनोक्तधर्माधर्मव्यत्यासःवैपरीत्यं । तत्प्रतिवादिनांतदाचार्यप्रतिवादिभूतानामितरेषामाचार्याणां । तर्हिकिंसाम्यं नेत्याह ॥ बहुत्वेनेति ॥ तत्प्रतिवादिनामित्यस्यावृत्तिः । बहुत्वेन बहुसंबंधित्वेन बहुसंख्याकत्वेनवा । अयंधर्मइतिवचनस्यएकाचार्यवचनत्वात्तदपेक्षयासधर्मोनभवतीतिवक्तृणांबहुत्वेनतद्वचनानांप्रबलत्वात् एकाचार्योक्तधर्मवैपरीत्यनिर्णय ॥ ७ ॥

एवसुशकइतिभावः ॥ ३४ ॥ तदेवविशदयति । तैस्तैः तत्तदाचार्यशिष्यैः । एकःआचार्यः ॥ ३५ ॥ एवं एकवादिनोक्तस्वाभिमतधर्मनिर्णायकवाक्यवत् । स्वस्वागमोक्तधर्मनिर्णायकासर्वज्ञतत्तदाचार्यवचांसि तत्वज्ञानस्य तत्वमवबुध्यवदंति अनवबुध्यवावदंतीतिशंकया निर्णयायनालमितियोजना । एकेनोक्तधर्मप्रतिषेधमात्रेबहूनांसंमतावपिस्वस्वागमोक्तधर्मविषयेसंमत्यभावादितिभावः । ननुजिनस्सर्वज्ञः तद्वचसास्माकंनिर्णयोभवतीत्यतआह ॥ तेष्विति ॥ तेष्वाचार्येष्वेकस्यजिनादेरन्यस्येव

शुष्कतर्कशतो(द्रिक्तां)दर्कांस्तैस्तैराप्ततयादृतान् ॥ अनेकदर्शनाचार्यान्कथमेकोनिवारयेत् ॥ ३५ ॥ असर्वज्ञ
वचांस्यैवंविरुद्धानिपरस्परं ॥ नधर्मनिर्णयायालंतत्वज्ञानस्यशंकया ॥ तेष्वेकस्यनसार्वज्ञमन्यस्येवप्रसिद्ध्य
ति ॥ ३६ ॥ क्षित्यादिकर्तासर्वज्ञोनसर्वस्यापिसंमतः ॥ यस्यासौसंमतस्तंचबुद्धोयुद्धेजिगीषति ॥ ३७ ॥
दैत्यान्सविप्रलिप्सुश्चेद्देवांश्चानुजिघृक्षति ॥ अधर्ममपितत्तृप्त्यैधर्मंवक्तीतिसंशयात् ॥ ३८ ॥

तद्विपरीतभिन्नतार्किकाचार्यादेरिव ॥ ३६ ॥ ननुक्षित्यादिकंसकर्तृकंकार्यत्वादित्यनेन क्षित्यादिकर्तृसिद्धावुपादानगोचरापरोक्षज्ञानवतएवकर्तृत्वेनतस्यसार्वज्ञमपिसिद्ध्यति । तथाच सर्वज्ञेश्वरवचसाधर्मादिनिर्णयोभवतीत्यतआह ॥ क्षित्यादीति ॥ सर्वस्यापिजैनादेः । यस्यतार्किकस्य । असौसर्वज्ञेश्वरः । तमीश्वरं । बुद्धस्यापीश्वरावतारत्वेनसर्वज्ञत्वात्तेनचतदुक्तविपरीतधर्मस्यैवोक्तत्वात्यज्ञादेरीश्वरोक्तमार्गेणनधर्मत्वनिर्णयोभवतीतिभावः ॥ ३७ ॥ ननुदैत्यमोहनार्थंबुद्धस्यावतीर्णत्वेन नतद्वचसिविश्वास

इत्यतआह ॥ दैत्यानिति ॥ अनुजिघृक्षतिअनुग्रहंकर्तुमिच्छति । ईश्वरइतिशेषः । तत्तृस्यैतेषांदेवानांतृस्यै ॥ ३८ ॥ तदुक्तिमा त्रात् तस्येश्वरस्योक्तिमात्रात् । ऋत्वादेर्यज्ञादेः । उक्तमर्थमुपसंहरति ॥ अतइति ॥ पुंवाक्यतःईश्वरादिपुरुषवाक्यतः ॥३९॥ ननुमास्तुवचनं युक्त्यैवधर्मनिर्णयोभवतीत्यतआह ॥ यस्त्विति ॥ शुद्ध्यैसकृदाचमनोदकंपिबेदित्यन्वयः ॥ ४० ॥ मंत्रावृत्तिं मंत्रस्यपौनःपुन्येनकथनरूपजपमित्यर्थः ॥ ४१ ॥ देहबंधाद्देहाख्यबंधनात् । जीवान्बहिःकुर्यात् शिरश्छित्वादेहाद्बहिर्निस्सा

कथंतदुक्तिमात्राचऋत्वादेस्स्यात्प्रवर्तनं ॥ अतःपुंवाक्यतोधर्मःकथंनिर्णीयतेवद ॥ ३९ ॥ यस्तु युक्त्यैवधर्मस्यनिर्णयंवर्णयेद्बुधः ॥ लाघवात्ससकृच्छुद्ध्यैपिबेदाचमनोदकं ॥ ४० ॥ पुनरुक्तत्वयु क्त्याचमंत्रावृत्तिंपरित्यजेत् ॥ परोपकारयुक्त्याचगच्छेत्कामातुरांगनां ॥ ४१ ॥ देहबंधाद्बहि र्जीवान्कुर्यात्कारागृहादिव ॥ अनादिनित्यावाग्वाच्याधर्मसिद्ध्यैततोखिलैः ॥ ४२ ॥ अस्मदा दिकृतंकार्यंव्यर्थंसार्थमनर्थकृत् ॥ दृश्यतेगेहकुड्यादि केनापिनकृतातुया ॥ ४३ ॥

रयेदित्यर्थः । कारागृहादिवेतितत्रदृष्टांतः । तथाचदेहबंधध्वंसरूपहिंसापिपुण्यसाधनंस्यादितिभावः ॥ परिशेषसिद्धमर्थमाह ॥ अनादीति ॥ ततःपुरुषवचनयुक्तिप्रत्यक्षाणामतींद्रियधर्मानिश्चायकत्वात् ॥४२॥ अनादिनित्यवाचाधर्मसिद्धिःसुशकेत्याह ॥ अस्मदादिकृतमित्यादिना ॥ किंचिद्व्यर्थं किंचित्सार्थं किंचिदनर्थकृच्चदृश्यतइतिसंबंधः । महताप्रयत्नेनकृतगेहादेराजा

दिभिर्निष्कासितेसतिव्यर्थं तदभावेसुखेनावस्थानात्सार्थं तुलाभित्तिपातादिनाक्वचित्स्वस्यैवनाशाच्चानर्थकृदितिभावः ॥ ४३ ॥ सावाक् । कर्तृदोषपदमज्ञानविपरीतज्ञानादिकर्तृदोषनिमित्ताबोधकत्वविपरीतबोधकत्वरूपवाक्यदोषोपलक्षणं । कर्तुर्निमित्ता त्प्राप्तदोषःकर्तृदोषइतिवाअस्मिन्नर्थेऽर्थांतरन्यासः किमिति । अवकाशदानंह्याकाशसाध्योर्थः । तद्व्यभिचारस्तुनित्याकाशेयथा नास्ति तथानित्यवचस्यप्यर्थव्यभिचारोनास्तीतिभावः ॥ ४४ ॥ ननुसानित्यवाग्जिनादिवागन्यतमाकिंनस्यादित्यतआह ॥ साचेति ॥ श्रौतवादिप्रवादतः श्रौतवादिनोवैदिकाः । तेषांप्रवादः वेदोऽनादिरितिपारंपर्येणागताकथाजिनादिवाचांजिनादि

अनादितःपूर्वपूर्वसंप्रदायबलागता ॥ सातुनार्थंव्यभिचरेत्कर्तृदोषविवर्जिता ॥ किंक्वचिन्नावकाशोस्तिनि त्याकाशेशरीरिणां ॥ ४४ ॥ साचश्रुतिर्भवेदेषाश्रौतवादिप्रवादतः ॥ श्रुतिनाम्नाचसर्वैश्चश्रुतायासैवहि श्रुतिः ॥ ४५ ॥ नषड्भिर्दर्शनाचार्यैःकृतोवेदोविचारणे ॥ द्वयोरसंमतत्वेनचतुर्णामपिसंमतेः ॥ ४६ ॥

कृतवाक्यत्वेनैवलोकप्रसिद्धेरितिभावः ॥ ४५ ॥ कर्तुरप्रसिद्धेरपिवेदोनित्यइतिवक्तुंसंभावितकर्तृनिषेधंकरोति ॥ नषड्भिरिति ॥ षड्भिर्लोकायतादिभिः तत्रहेतुमाह ॥ द्वयोरिति ॥ द्वयोर्बौद्धलोकायतयोरसंमतेर्वेदस्यप्रमाणत्वेनासंमतेरित्यर्थः । नहिवेदोऽप्र माणमित्यंगीकुर्वातेतत्कर्तारौचेतियुज्यते । चतुर्णांतार्किकमीमांसकसांख्यवेदांतिनां । नहितन्मध्येएकैकाचार्यकृतत्वेतद्विरोधि नामन्येषामाचार्याणांतत्प्रामाण्येसंमतिर्भवति । तत्तत्कृतभाष्यादौतददर्शनात् । अस्तिचतुर्णामाचार्याणांवेदप्रामाण्येसंमतिः ।

तस्मान्नैकैकाचार्यकृतोवेदइतिभावः । यातुजैनबौद्धकणादानांरीत्याकालासुराष्टकचतुर्मुखकृतत्वोक्तिः सापितेषामेवान्योन्यंविप्रतिपत्त्यानैककर्तृकत्वस्यापिसाधिका यावद्विशेषबाधेसामान्यस्यापिबाधान्नकृतत्वसामान्यसाधिकाच। विस्तृतमेतत्कल्पलतायां ॥ ४६ ॥ नन्वीश्वरकृतोवेदइत्यतआह ॥ **नापीति** ॥ भाट्टाद्यैरप्यपौरुषेयत्वांगीकारात् । येनैकेननैयायिकेनोच्यतेवेदईश्वरकृतइति । युक्तिमार्गतःकथंमुच्यतइत्यतआह ॥ **अशरीरइति** ॥ अशरीरःअशरीरत्वेनांगीकृतः । तदीशस्तार्किकाणामीश्वरः ।

नापीश्वरकृतोवेदोभाट्टाद्यैस्त्रिभिरुच्यते ॥ येनैकेनोच्यतेतेनमुच्य
तेयुक्तिमार्गतः ॥ अशरीरस्तदीशस्तांनैववक्तिकदाचन ॥ ४७ ॥
तत्कर्तृताकथंतस्यनह्यणोश्चोदनादिना ॥ नभोगुणस्यास्यजन्मकिं
तूच्चारणतस्तव ॥ ४८ ॥

तांवेदवाचं ॥ ४७ ॥ तत्कर्तृतावेदकर्तृता । नन्वीश्वरस्याशरीरत्वेपिपरमाणुनोदनादिनाद्व्यणुकाद्युत्पत्तिवदीश्वराद्वेदस्यजन्मभवतीत्यतआह ॥ **नहीति** ॥ अस्यवर्णात्मकस्यवेदस्य । नभोगुणस्येतिहेतुगर्भविशेषणं । वेदस्यवर्णात्मकशब्दत्वेनतन्मतेनभोगुणत्वात् । नहिनित्यद्रव्यस्यगुणेपरमाणुनोदनादेःप्राप्तिस्तन्मते । किंतुद्व्यणुकादिकार्योत्पत्तावेवतस्योपयोगः । नतुगुणोत्पत्तौ । ॥ ९ ॥
कारणगुणादेवकार्येगुणोत्पत्त्यंगीकारात् । नित्यद्रव्यगुणेतुनेयमपिप्रक्रियासंभवति । तर्हितन्मतेवेदस्यकथंजन्मेत्याशंकते ॥ **किंत्विति** ॥ उत्तरमाह ॥ **उच्चारणतइति** ॥४८॥ उक्तमेवार्थंविशदयति॥ **उत्पत्तयइति** ॥ ४९ ॥ नन्वीश्वरस्यापितैरवतारेलीलाविग्रहस्वीकाराच्छरीरमस्तीत्यतआह ॥ **सृष्ट्यादाविति** ॥ भौतिकइतिहेतुगर्भविशेषणं। भूतानांपृथिव्यादीनांपश्चादुत्पन्नत्वेन सृष्टेःपूर्वंभौतिकदेहाभावात् । तस्माद्यज्ञात्सर्वहुतऋचस्सामानिजज्ञिरइति भूतेभ्योप्यादौवेदसृष्टेरुक्तत्वादवतारेकथंचिद्देहांगीकारेपिमूलरूपेतदनंगीकाराच्चेतिभावः । किंचवेदस्येशकृतत्वंतवप्रत्यक्षेणसिद्धंउतानुमानेनआगमेनवेत्याशंक्यत्रितयमपिक्र

उत्पत्तयेव्यक्तयेवाशब्दानांसर्ववादिभिः ॥ वाच्यैवकिलताल्वोष्ठपुटव्यापारमूलता॥ ४९ ॥
सृष्ट्यादौनिगमस्रष्टुर्नहिदेहोस्तिभौतिकः ॥ किंचेशमूलतामादौश्रुतीनांनददर्शसः ॥ ५० ॥
संदिग्धाकार्यतानादौततोपीशकृतानसा ॥ गुणत्वमिववाक्यत्वंनानित्यत्वप्रयोजकं ॥ ५१ ॥
सुष्टुतिंनित्ययावाचाचोदस्वेत्यृग्यतोब्रवीत् ॥ प्रादुर्भावजनेस्तस्मादृचस्सामानिजज्ञिरे ॥ ५२ ॥

मेणनिराकरोति ॥ **किंचेति** ॥ सइत्यनेनाधुनिकत्वंद्योतयति ॥५०॥ अनादौ श्रुतिस्मृतिभ्यांवादिभिश्चअनादित्वेनवर्णिते। कार्यत्वंनामअभूत्वाभावित्वं। वेदस्यसृष्टेःपूर्वमभवनंआदिकालेभवनंचआधुनिकेनभवताद्रष्टुमशक्यमितिहेतोर्वादिविप्रतिपत्तेश्चकार्यत्वं संदिग्धमितिभावः । नापिवाक्यत्वमनित्यत्वसाधकमित्याह ॥ **गुणत्वमिति** ॥ अनित्यत्वमत्रोत्पत्तिविनाशवत्त्वंविवक्षितं । यथागुणत्वंनानित्यत्वप्रयोजकंएवंवाक्यत्वमपिवेदानित्यत्वप्रयोजकंनभवतीतिभावः ॥५१॥ नाप्यागमेनानित्यत्वसिद्धिरित्याह ॥

सुष्टुतिमिति ॥ तस्मैनूनमभिद्यवेवाचाविरूपनित्यया । वृष्णेचोदस्वसुष्टुतिमित्यृचमर्थतोगृह्णाति । हेविरूप विरूपाख्यऋषे अभिद्यवेअभितोद्योतनशीलाय वृष्णे भक्ताभीष्टवर्षित्रे तस्मैपरमेश्वराय नित्ययानित्यभूतया वाचा वेदवाचा सुष्टुतिंशोभनांस्तुतिं चोदस्वप्रेरय कुर्विति। मंत्रेयस्माद्वेदस्यनित्यत्वमुक्तं तस्मात्प्रादुर्भावजनेरेव ऋचस्सामानिजज्ञिरइत्युक्तिः नतूत्पत्तिविवक्षयेत्यर्थः ॥ ५२ ॥ किंचऋचस्सामानिजज्ञिरइतिऋगाद्युत्पत्तिःपश्चादुक्ता । तेनदेवाअयजंतेतिदेवानांयज्ञकरणंततः प्रागुक्तं। तथाचवेदस्यपश्चादुत्पत्तौपूर्वंमंत्राभावाद्यज्ञकरणंनस्यादित्याह ॥ ऋक्सामादेरिति ॥ पूर्वा ऋचःसामानिजज्ञिरइति

ऋक्सामादेरभावेप्राग्यज्ञस्सोज्ञकुतोभवत् ॥ देवास्तेनायजंतेतिपूर्वांश्रुतिमनुस्मर ॥ ५३ ॥
आदिसर्गेप्युपाध्यायःपुत्रेध्येतरिकेशवः ॥ नकर्तोक्तप्रकारेणयज्ञभोक्तृत्वविघ्नवित् ॥ ५४ ॥
निद्राविद्रावणेयस्यछंदांसिकिलबंदिनः ॥ तंवेदंसकथंकुर्याद्दुर्गास्यात्प्राग्विनिर्गतं ॥ ५५ ॥

वाक्यात्पूर्वा। तथाचमंत्राभावेयज्ञासंभवात्तदंगमंत्राअपिपूर्वंसंतीतिहेतोऋचस्सामानिजज्ञिरइतिवाक्यस्यवेदाविर्भावएवत्वयाप्यर्थोवक्तव्यइतिभावः ॥५३॥ तस्मादादिसर्गेपिपुत्रेब्रह्मणिअध्येतरिसतिकेशवउपाध्यायएवनकर्तेत्यत्रैवहेत्वंतरसूचनं उक्तप्रकारेणयज्ञभोक्तृत्वविघ्नविदिति ॥ वेदोत्पत्तेःप्राग्यज्ञस्योक्तत्वात्तत्समयेवेदाभावेदेवयज्ञभोक्तृत्वंममनस्यादित्यत्रैवोक्तरीत्या देवाननुजिघृक्षतीत्यादिन्यायेनसकलयज्ञभोक्तृत्वंचनस्यादितिप्रागुक्तरीत्याचविघ्नविदित्यर्थः ॥५४॥ युक्त्यंतरेणाप्यादिकालेवेद

स्यसत्त्वंसाधयति॥ निद्रेति॥ प्रलयेखलुपरमात्मनोयोगनिद्रा तदुद्बोधनार्थंदुर्गा वेदैरस्तौषीदितिपौराणिकीप्रसिद्धिः तदंतेबोधयां चक्रुस्सम्राजमिववंदिनइत्यादौ। जडानांवेदानांबंदित्वकथनंतदभिमानिदेवताभिप्रायेणेतिज्ञातव्यं। अतएवाह॥ दुर्गास्यादिति॥ प्राक्सृष्टिकर्तुर्नारायणस्यप्रबोधात्प्राक् ॥ ५५ ॥ इदानींहयग्रीवेणस्वहस्तेपुस्तकधारणात्पुस्तकस्थैवविद्यामयोपदिश्यते नतुनूतनत याकृत्वेतिहयास्यभावविरोधादपिवेदोत्पत्तिकथनमयुक्तमित्याह ॥ यस्येति(पश्येति)॥ विधेर्गुरोरित्यनेनपुत्रेऽध्येतरीतिसामान्ये नोक्तंस्पष्टीकृतमितिज्ञातव्यं। देवस्यैषस्वभावोयमितिश्रुतेस्स्वबुद्धिस्वभावादेववेदस्थवर्णपौर्वापर्यंघटयेन्नतुस्वसर्वज्ञत्वशक्त्यास्वा

यस्या(पश्या)स्तिपुस्तकंहस्तेहयास्यस्यविधेर्गुरोः॥ सचवक्ताऽनादिनित्यसिद्धबु
द्धिक्रमात्क्रमं ॥ वर्णानांक्रमशून्यानामपिपश्येद्धिसर्वदा ॥५६॥ नित्येशबुद्ध्युपा
धेस्तद्वर्णेष्वौपाधिकःक्रमः॥ मठाकाशघटाकाशक्रमवत्स्यादनादितः ॥ ५७॥

तंत्र्येणदृष्टमपितंतमर्थमनेनवाक्येनवदामीत्याशया। अतोनरागादिदोषमूलत्वशंका। अर्थयाथार्थ्यत्वपवादकदोषाभावेप्रामाण्य-स्यस्वतस्त्वादेवेतिज्ञेयं। ननुनित्यानांसर्वगतानांवर्णानांकथंपौर्वापर्यरूपःक्रमइत्यतआह ॥ सचेति ॥ वक्ता वेदानामितिशेषः। नित्यानामपीश्वरबुद्धीनांतच्छक्तिविशेषात्क्रमोस्त्येव अतोबुद्धिक्रमादित्युक्तं। क्रमशून्यानां स्वतःक्रमशून्यानां। पश्येत्क्रम-मितिसंबंधः ॥५६॥ नित्यानामप्यौपाधिकत्वेक्रमवत्त्वेचदृष्टांतः मठाकाशघटाकाशक्रमवदिति ॥ यथानित्यस्यैवाकाशप्र-

देशस्यमठावच्छिन्नत्वेनमठाकाशत्वं मठांतर्गतघटावच्छिन्नत्वेनमठाकाशादपिसूक्ष्मतरघटाकाशत्वंपूर्वंघटाकाशावच्छेदकघटस्याभावान्मठाकाशादपिघटाकाशस्यपश्चाद्भाविताच तद्वदनादिष्वपिवर्णेषुअनादित्वंपौर्वापर्यलक्षणःक्रमश्चस्यादितिपिंडितार्थः। घटमठादीनांतत्संयोगस्यचोत्पन्नत्वेपितदवच्छिन्नाकाशस्यदेहावच्छिन्नात्मवदनुत्पत्तेरपरिहारादुपाधेरेवनित्यत्वेक्रमिकत्वेचकिमुवक्तव्यमौपाधिकस्यनित्यत्वादिकमितिभावः॥५७॥ नित्येशबुद्ध्युपाधिकवर्णक्रमस्यनित्यत्वमेवयुक्तमित्याह॥उपाधीति॥ तत्रदृष्टांतः

उपाधिनित्यतायांतुनित्यताप्यस्यशोभते ॥ अनाद्यज्ञानतोनादियथासंसारबंधनं ॥ यथावाप्रतिबिंबात्माजीवोनादिश्श्रुतौश्रुतः ॥५८॥ पूर्वंबुद्ध्याग्रहणतःपूर्वत्वंवर्णगंहितत् ॥ पश्चाद्बुद्ध्याग्रहणतःपरत्वंतच्चवर्णगं ॥५९॥ पूर्वंबुद्ध्यापूर्वतैवकाचिद्वर्णेस्त्युपाहिता ॥ पश्चाद्बुद्ध्यापरत्वंचवर्णेष्वस्तिनसंशयः ॥६०॥ नचेन्नदीदीनशब्दौभिन्नभिन्नार्थकौकथं॥ कथंचस्यात्पूर्ववर्णात्पूर्वइत्यादिकंवचः॥६१॥

अनादीति॥ यथावेतिदृष्टांतांतरं। बिंबस्येश्वरस्यानादिनित्यत्वात्तत्प्रतिबिंबरूपोजीवोयथाअनादिः तद्वत्क्रमोपिस्वोपाधेरीश्वरबुद्धेर्नित्यत्वान्नित्यइतिभावः॥५८॥ ननुनित्येषुसर्वगतेषुवर्णेषुअयंपूर्ववर्णः अयमुत्तरवर्णइतिकथंघटतइत्यतआह॥ पूर्वमिति॥ ५९॥ तदेवविशदयति पूर्वंबुद्ध्यापूर्वतैवेत्यादिना॥६०॥ तदनंगीकारेबाधकमाह॥ नचेदिति॥ नदीशब्देनकारस्यपूर्वत्वाभावेदीकारस्यपरत्वाभावेदीनशब्देतद्वैपरीत्यस्यचाभावे नदीदीनशब्दौनदीदुःखितलक्षणभिन्नभिन्नार्थकौकथंस्यातामित्यर्थः। ॥ ११ ॥

अस्तिचभिन्नभिन्नार्थबोधः।तस्माद्वर्णेषूपाधिनिमित्तकंपौर्वापर्यंचास्तीतिभावः। बाधकांतरंचाह॥ कथंचस्यादिति॥ प्राचामितिशेषः॥६१॥ नित्येष्वपिपौर्वापर्यंविस्पष्टदृष्टांतमुखेनपुनरप्युपपादयति॥ यथैकस्यामिति॥ नचेशबुद्धौपौर्वापर्यंनास्तीतिवाच्यं। नित्येष्वेवेश्वरज्ञानेच्छाप्रयत्नेषुपौर्वापर्यदर्शनाद्बुद्धीनामपिपौर्वापर्यस्यन्यायप्राप्तत्वात्। उपधेरीश्वरबुद्धिलक्षणोपाधेरित्यर्थः॥ ६२॥ उदाहरणांतरंचाह॥ त्वयापीति॥ महतीत्युपलक्षणं। नित्येचेत्यपिग्राह्यं। कार्यं यामात्पूर्वंनभुंजीतयामयुग्मंनलं

यथैकस्यामीशबुद्धौपौर्वापर्यंविशेषतः॥ वर्णेषुतद्वत्स्वीकार्यंपौर्वापर्यंसदोपधेः॥ ६२॥ त्वयापिकालेमहतियामादीनामुपाधिजं॥ पौर्वापर्यंकथंवार्यंकार्यंकुर्युर्यतोखिलं ॥ ६३ ॥ तवापिताल्वोष्ठपुटमध्यस्थाकाशएवहि॥ वर्णोत्पत्तिस्ततःकोवापूर्वःकश्चापरोवद॥ ६४॥

घयेदित्यादिकार्यमित्यर्थः। अर्थक्रियाकारित्वेनौपाधिकस्यनभ्रांतिकल्पितत्वमितिदर्शयितुमुदाहरणांतरमितिज्ञेयं। अस्माभिःकालस्यनित्यानित्यत्वांगीकारात्त्वयेत्युक्तं॥ ६३॥ अनित्यत्ववादिनापिगत्यंतराभावात् पूर्वकालोत्पन्नत्वात्पू(त्वंपू)र्वत्वंअपरकालोत्पन्न(त्वम)त्वादपरत्वंयथावर्णेषुकथ्यतेतथावर्णनित्यत्ववादेपिपूर्वकालव्यक्तत्वा(त्वं)त्पूर्वत्वंअपरकालव्यक्त(त्वंचा)त्वाच्चापरत्वंभविष्यतीतिप्रतिबंद्याउत्तरंवक्ति॥ तवापीति॥ वर्णोत्पत्तिस्सर्ववर्णोत्पत्तिः। यतस्ताल्वोष्ठपुटमध्यस्थाकाशएवसर्ववर्णोत्पत्तिः

ततःस्थानैक्यात् ॥ ६४ ॥ नहितत्राप्यूर्ध्वदेशोत्पन्नःपूर्वतनःअधरदेशोत्पन्नःपश्चात्तनइतिवक्तुंशक्यतइत्याह ॥ नहीति ॥ तत्रता
ल्वोष्ठपुटमध्यस्थाकाशे । तथाचमद्रीतिरेवतवापिशरणमित्याह ॥ पूर्वकालेति ॥ तथापरकालोत्पन्नतैवपरतेतिसंबंधः ॥ ६५ ॥
प्रतिबंद्यालब्धमर्थमाह ॥ एवंचेति ॥ तथाचव्यक्तत्वमुत्पन्नत्वमित्येवभेदः अन्यदावयोस्समानमितिभावः ॥ ६६ ॥ नन्वादिसृ
ष्टावपीश्वरबुद्धौसहैववैदिकसकलवर्णव्यक्तौक्रमस्यैवायोगाद्भिन्नभिन्नकालेषुचव्यक्तौक्रमस्यकृतकत्वमपरिहार्यंस्यादित्याशंकांप्रति

नहितत्राधरोवर्णएकऊर्ध्वश्चदेशतः ॥ पूर्वकालोत्पन्नतैवपूर्वतापरतातथा ॥ परकालो
त्पन्नतैववर्णेवाच्यानचापरा ॥ ६५ ॥ एवंचपूर्वव्यक्तत्वंपूर्वत्वंमेभविष्यति ॥ परका
लव्यक्ततायांपरोवर्णोभविष्यति ॥ अतस्समंसमाधानंनित्यानित्यत्ववादिनोः ॥६६॥
यथेशोनित्ययाबुद्ध्यासकृत्सृष्टश्रुतेःक्रमं ॥ आकल्पांतंतवेक्षेततथेक्षेतसदामम ॥६७॥
प्रमाणदृष्टघटनाकार्यासैवयथामति॥नशक्यतेचेत्सर्वेशाचिंत्यशक्त्यैवसेत्स्यति ॥६८॥

बंद्यापरिहरति ॥ यथेशइति ॥ सकृत्सृष्टश्रुतेस्सृष्टिकालेसकृत्सृष्टश्रुतेरित्यर्थः । आकल्पांतं । त्वन्मतेकल्पांतेवेदनाशात्कल्पाव
सानपर्यंतं तमेव मध्येमध्येनुत्पन्नमेवयथेक्षेततथामन्मतेपिसदासर्वकालेअनादिकालमारभ्यस्वबुद्ध्यभिव्यक्तंक्रममीक्षेतेतिभावः ।
नचत्वन्मतेआदिकालसृष्टंक्रमंविहायमध्येमध्येक्रमसृष्टिरितिवाच्यं। तथाकल्पनेमानाभावात्गौरवाच्च ॥ ६७ ॥ नन्वेवंकुतःकल्प्ये

तइत्यतआह ॥ प्रमाणेति ॥ ६८ ॥ यदुक्तंपूर्वंबुद्ध्याग्रहणतःपूर्वत्वमित्यादितत्रपश्चाद्बुद्धेरुत्पन्नत्वात्तदभिव्यक्तपाश्चात्यवर्णस्यापिउत्पन्नत्वंकथंनायास्यतीतिवदंतंप्रत्युक्तैवप्रतिबंदी । तथापिसुहृद्भावेनविचारयंतंप्रतिवस्तुतत्वमप्याह ॥ नेदंपूर्वेति ॥ आद्या आदिवर्णविषयिका । ततएव ईशबुद्धित्वादेव नेदंपूर्वेतिसंबंधः । द्वितीयापिद्वितीयवर्णविषयिकापि । ततएवपूर्ववर्णस्यानादित्वादेवेत्यावृत्त्यायोज्यं । नेदंपूर्वाअनादिरितियावत् ॥ ६९ ॥ पूर्ववर्णविषयकबुद्धेरनादित्वेपिद्वितीयवर्णविषयकबुद्धेः

नेदंपूर्वायदाबुद्धिराद्यानादिरधीशितुः ॥ ततएवद्वितीयापिनेदंपूर्वाबलाद्भवेत्
॥ ६९ ॥ अनादेःपृष्ठलग्नस्याप्यनादित्वंहियुक्तिमत् ॥ यावद्यावद्गजोगच्छेत्ता
वत्पुच्छंचगच्छति ॥ ७० ॥ पूर्वेदंपूर्वताऽभावेतदव्यवहितोत्तरे ॥ क्षणएवपरं
यत्स्यात्तस्येदंपूर्वताकथं ॥ मत्स्यस्यानादितायांनकिंकूर्मस्याप्यनादिता ॥ ७१ ॥

कुतोनादिनित्यतेत्यतस्तदुपपादयति ॥ अनादेरिति ॥ तत्रदृष्टांतः ॥ यावदिति ॥ पुच्छस्यगजशरीरसंबंधित्वादित्यर्थः ॥ ७० ॥ अनादीश्वरबुद्धौप्राग्व्यक्तैकवर्णस्यानादित्वसंभवेपिपश्चाद्व्यक्तवर्णानांकथमनादित्वं । अनादित्वपश्चात्तनत्वयोर्विरोधादित्यतआह ॥ पूर्वेति ॥ पूर्ववर्णस्येदंपूर्वताऽभावे तस्मात्पूर्ववर्णादव्यवहितोत्तरक्षणएवपरंउत्तरंयद्वर्णादिकंस्यात्तस्येदंपूर्वताकथंनकथंचित् । इदमुक्तंभवति । पदमुच्चारयन्हिततपदस्थपूर्ववर्णादव्यवधानेनोत्तरंवर्णमुच्चारयेदेव अन्य

थासन्निध्यभावप्रसंगात् । एवंचानाद्येकवर्णपृष्ठलंबिनामनंतानामपिवर्णानामनादित्वंबलादापततीति । तत्रदृष्टांतांतरमाह ॥ मत्स्यस्येति ॥ उभयोरपिभगवदवतारत्वाद्यथानादिता तद्वत्तद्बुद्धीनांतदभिव्यक्तोत्तरोत्तरवर्णानामप्यनादित्वमिति भावः ॥ ७१ ॥ पूर्ववर्णस्यानादित्वेतत्संबद्धद्वितीयवर्णस्याप्यनादित्वं सम्यग्बुद्ध्यावारोहायस्पष्टदृष्टांतांतरमुखेनपुनरप्युपपादयति ॥ अधोवधीति ॥ अधोवधिः । अधरावधिः । एकभगवदवयवस्यावधिशून्यत्वे तत्संबद्धद्वितीयावयवस्याप्यवधिशून्यत्वेहेतुंसूचयितुंबृहत्तनोरित्युक्तं । विश्वरूपदेहे नांतंनमध्यंनपुनस्तवादिमिति अनंतबाहूदरवक्रनेत्रमितिच प्रत्येकमवयवानामनं

अधोवधिविहीनेनविष्णोःपादेनसंगता ॥ जंघाप्यधोवधेर्भंगंकिंनकुर्या
द्बृहत्तनोः ॥ आद्यद्वितीयभावोपितद्वत्स्याद्प्यनादिषु ॥ ७२ ॥ अनादि
र्बीजसंतानस्तथैवांकुरसंततिः ॥ अतःक्रमिकयोश्चानादित्वंतत्त्वंरुणद्धिकः ॥७३॥

तत्वोक्तेरुभयोरप्यवधिशून्यत्वंयुक्तियुक्तंप्रामाणिकंचेतिभावः । यद्यपि सिसृक्षासंजिहीर्षादीनामिवएकव्यक्तिकालेअन्यव्यक्तेश्शक्त्यात्मनाविद्यमानत्वेनानादित्वंनिर्वोढुंशक्यं । तथाप्युक्तयुक्त्योभयोरपिव्यक्तौचानादित्वलाभेकिंतेनेतीदमेवोक्तं । अनादित्वे वर्णानांकथंपौर्वापर्यमित्यतउक्तन्यायादेवेत्याह ॥ आद्येति ॥ तद्वद्भगवदवयववत्तदवतारवद्वा ॥ ७२ ॥ अनादिषुपौर्वापर्यंलोकरीत्याप्युपपादयति ॥ अनादिरिति ॥ बीजसंतानोप्यनादिः । अङ्कुरसंततिरपितथैव अनादिरेव । तथापितयोर्यथापौर्वा ॥ १३ ॥

पर्यअङ्कुरसंततेर्बीजसंतत्युत्तरकालीनत्वात्तद्वत्प्रकृतेपीतिभावः । अनादित्वंतत्वं अनादित्वाख्यतत्वं ॥ ७३ ॥ ईश्वराचिंत्याघटितघटकशक्तिवशादप्यनादिषुवर्णेषुपौर्वापर्यंघटतइत्याह ॥ अचिंत्येति ॥ योवेदःप्रभोरचिंत्यशक्तिंवक्ति । सवेदस्स्वार्थपरायणः । अनादिष्वपिस्ववर्णेषुपौर्वापर्याख्यस्वार्थपरायणः । अघटितैतद्घटनायैवेश्वरस्याचिंत्यशक्तिंवक्तीतिभावः ॥ ७४ ॥ तत्तस्मात्ईश्वराघटितघटकशक्तिवशात् ॥ ७५ ॥ बुद्धेर्वर्णव्यंजकेश्वरबुद्धेः बुद्धिसिद्धपौर्वापर्यस्य नित्येशबुद्धिसिद्धवैदिकवर्णमालापौर्वापर्यस्ये

अनादिवेदवादस्तन्मनोमोदायधीमतां ॥ अचिंत्यशक्तिंयोवक्तिप्रभोस्स्वार्थपरायणः ॥ ७४ ॥ तद्वे
दपदराशिस्थवर्णमालास्वनादितः ॥ पौर्वापर्यंकेनवार्यमनादीशधियार्पितं ॥ ७५ ॥ वर्णानामप्यना
दित्वंबुद्धेश्चानादितायदा ॥ कथंतदाबुद्धिसिद्धपौर्वापर्यस्यसादिता ॥ नहीदंपूर्वतांबुद्धेरनादेर्बुद्धिमा
न्वदेत् ॥ ७६ ॥ ज्ञानसाध्याहरेरिच्छायदानादिर्निगद्यते ॥ ज्ञानज्ञेयत्वरूपस्यसादितास्यकथंवद ॥७७॥

त्यर्थः । तदर्थमेवबुद्धेर्नित्यतामुपपादयति ॥ नहीति ॥ ७६ ॥ अनादेरप्यनाद्यंतरव्यंग्यत्वंनित्यत्वंचरीत्यंतरेणोपपादयति ॥ ज्ञानेति ॥ ज्ञानज्ञेयत्वरूपस्य ज्ञानज्ञेयत्वेननिरूपितस्येत्यर्थः । ज्ञानसाध्याज्ञानव्यंग्या । अनाद्योरपिभगवज्ज्ञानेच्छयोर्व्यंजकव्यंग्यत्ववत् अनादेरपिवर्णक्रमस्यव्यंग्यत्वंईश्वरबुद्धेर्व्यंजकत्वंचयुज्यतइत्याकूतं । ज्ञानज्ञेयत्वरूपस्य ईश्वरबुद्धेर्ज्ञानत्वेन पूर्वत्वेनेश्वरबुद्धिविषयत्वनिमित्तकंपूर्वत्वं परत्वेनेश्वरबुद्धिविषयत्वनिमित्तकंपरत्वमितिवर्णपौर्वापर्यस्यज्ञेयत्वनिमित्तकत्वेनज्ञानज्ञेयत्व

रूपस्येत्यर्थः। अस्यवर्णगतपौर्वापर्यस्य। ज्ञानोत्तरकालीनायाभगवदिच्छायाअनादित्वेज्ञानसमसमयवर्तिवैदिकवर्णपौर्वापर्यस्याना दित्वंकिंवाच्यमितिभावः ॥७७॥ एवंचेत्पंचरात्रादिक्रमस्यानादीश्वरबुद्ध्युपाधिकत्वेनानुत्पन्नत्वंस्यादित्यतआह ॥ अगत्येति ॥ प्र माणाभावतः नित्यत्वेप्रमाणाभावतः अनित्यत्वेप्रमाणसद्भावाच्चेत्यपिद्रष्टव्यं। नव्यक्तीकुरुते पंचरात्रादिक्रमोयथानित्योभवतितथा स्वबुद्धिंतत्रशक्तामपिनव्यक्तांकुरुते। यदाचसृष्टिकालेव्यक्तांकरोति तदातस्योत्पत्तिरेव। कार्यविदित्यनेनवेदनित्यत्वेनैवधर्माधर्म

अगत्यापंचरात्रादौप्रमाणाभावतोहरिः ॥ नव्यक्तीकुरुतेबुद्धिंशक्तामपिसकार्यवित् ॥ ७८ ॥ अत स्तत्कृतशास्त्रस्यसादित्वेस्त्यातिसंकटं ॥ अनादित्वे(चनाया)त्वनायासइतिमन्यामहेवयं ॥ ७९ ॥ ईशेनोच्चारितंतच्चब्रह्मादीनांपरंपरा ॥ अनुभूतंस्मरेन्नित्यंनकरोतिस्वयपुनः ॥ ८० ॥ उच्चारयंत्युपा ध्यायास्स्मृत्वास्मृत्वातदेवहि ॥ तदेवंप्रचरेद्वेदःकर्तारोस्यनकुत्रचित् ॥ ८१ ॥

व्यवस्थादिसर्वकार्यसिद्धेरेतन्नित्यत्वकरणंव्यर्थमितिसूचयति ॥ ७८ ॥ अतईश्वरबुद्धेरनादिनित्यत्वात्। सादित्वेईश्वरबुद्ध्युपाधिक पंचरात्रादिक्रमस्योत्पन्नत्वेअतिसंकटं सर्वज्ञेश्वरबुद्धेस्तद्विषयत्वेव्यक्त्यभावकथनरूपं ॥ ७९ ॥ मीमांसकमतवदेकजातीयक्रमव त्त्वेननित्यत्वंकिंतुक्रमस्वरूपस्यैवनित्यत्वेनवेदनित्यत्वमितिभावेनाह ॥ ईशेनेति ॥ तत् अनादिक्रमविशिष्टवेदवाक्यं। ब्रह्मा दीनामीश्वराद्ध्येतृणां। अध्ययनसमयेस्वस्वमनसिअनुभूतंस्मरेत् ॥ ८० ॥ एतदेवानुभावयति ॥ उच्चारयंतीति ॥ तदेव

उपाध्यायोक्तक्रमविशिष्टवाक्यमेव । वर्णक्रमात्मकवेदस्यकथंचित्कृतकत्वेनित्यत्वस्यभाक्तत्वापत्त्याअनादिनित्यासातच्चेत्युक्त ब्रह्मसाम्यायोगात्आदिवक्तानारायणोपिभगवानपिद्रष्टैवनतुस्रष्टा । पुराणादीनांतुनित्यत्वेप्रमाणाभावात्स्रष्टैवेतिविवेकः ॥ ८१ ॥ ननुवैदिकक्रमस्येशबुद्ध्युपाधिकत्वेउपाधिभूततदज्ञानेएतदज्ञानमपिस्यादित्यतआह ॥ निमित्तेति ॥ अस्येश्वरबुद्ध्युपाधिकक्रमस्येत्यर्थः ॥ ८२ ॥ उपाधेरज्ञानेऔपाधिकज्ञानंकुत्रदृष्टमित्यतआह ॥ तिरोहितेति ॥ तिरोहितमित्यनेनजपाकुसुमाज्ञानंसूचयति । मीमांसकरीत्यातैस्तैरध्यापकैःक्रमस्यकृतत्वेबाधकमाह ॥ नचेदिति ॥ माघकारवत्तत्काव्यंअन्येपिकाव्यपा

निमित्तबुद्धेरज्ञानेप्यस्यज्ञानंचशोभते ॥ तिरोहितजपापुष्पसन्निधानोत्थरक्तिमा ॥ स्फटिकादौनकिंसर्वैः
स्स्फुटमेवानुभूयते ॥ ८२ ॥ नचेत्काव्यस्यकर्तारस्सर्वेपिस्युर्गृहेगृहे ॥ ८३ ॥ द्विकर्तृकत्वात्काव्यस्याप्य
स्तीश्वरमतौस्थितिः ॥ यावत्प्रचारंपश्चात्सबुद्धिंतत्रव्यनक्तिन ॥ तदुत्पन्नमनित्यंचपौरुषेयंवचोखिलं ॥८४॥

ठकाःकुर्वंतीतिचेत्तेपिमाघकारास्स्युरितिभावः । एकेनकृतंदृष्ट्वाकर्तानकर्तेतिचेन्न कुलालपुत्रस्यकुंभकारत्वाभावप्रसंगात् । एवमध्यापकानांसर्वेषामपिवेदक्रमकारकत्वेतेषामपिवेदकारकत्वप्रथास्यात् । नचसास्ति । तस्मादाद्यध्यापकोनारायणोवाअवांतराध्यापकाउपाध्यायावानवेदकारकाइतिभावः ॥ ८३ ॥ ननुमाघकाव्यस्यमाघकृद्बुद्धिनिमित्तकत्वेएतद्बुद्धेरीश्वरबुद्धिवन्नित्यत्वाभावात्रिक्षणावस्थायित्वेनतदुपाधिककाव्यस्याप्याशुतरविनाशित्वंस्यादित्यतआह ॥ द्विकर्तृकत्वादिति ॥ घटादिवद्द्विकर्तृक

त्वादित्यर्थः । यावत्प्रचारमीश्वरमतौस्थितिरितिसंबंधः । तत्र तत्प्रचारविषये । वचोखिलंकाव्यादिकं ॥ ८४ ॥ अनित्या । नाशशून्यत्वेप्युत्पत्तिमात्रवत्त्वेनानित्या । एतद्विशेषद्योतनायतुशब्दः । यत् यस्मा त्तत्रोत्पन्नक्रमविशिष्टपुराणभारतपंचरात्रादि भगवत्कृतग्रंथप्रचारविषये । तद्बुद्धिरीश्वरबुद्धिः । मानानुसारतः पुराणानितदर्थानिसर्गेसर्गेऽन्यथैवतु । क्रियंतेऽतस्त्वनित्यानी त्यादिमानानुसारात् ॥ ८५ ॥ ननुस्वतंत्रस्यकिमर्थमानानुसरणमित्यतआह ॥ स्वतंत्रेच्छोपीति ॥ मानेप्रमाणे । कर्ता प्राग विद्यमानस्यग्रंथस्योत्पादकः । वक्ता विद्यमानस्यग्रंथस्यैवोच्चारयिता । अतएवपुराणादेःकर्ता । वेदस्यवक्तेतिविभज्यप्रसिद्धिः

पुराणाद्यात्वनित्यावाग्यदुत्पत्तेरनंतरं ॥ व्यक्तैवतत्रतद्बुद्धिर्यतोमानानुसारतः ॥ ८५ ॥
स्वतंत्रेच्छोपिभगवान्मानेसौमानवान्किल ॥ उक्तव्यवस्थातत्सुस्थाकर्तावक्तातततःपृथक् ॥ ८६ ॥
तदेवेदंवाक्यमितिप्रत्यभिज्ञांप्रमाणयन् ॥ आचार्योपीममेवार्थमभिप्रैतिनसंशयः ॥ ८७ ॥

॥ ८६ ॥ नन्वेवंवेदक्रमनित्यत्वंमूलशास्त्रेकुत्रापिनोक्तमित्यतआह ॥ तदेवेदमिति ॥ तदेवेदंवाक्यमितिप्रत्यभिज्ञांप्रमाणयदा चार्यवाक्यात्सिद्धमितिभावः । उपलक्षणंचैतत् । नित्यावेदाःपुराणाद्याःकालःप्रकृतिरेवच । नित्यानित्यत्रिधाप्रोक्तमनित्यंद्विवि धंमतमितितत्वसंख्यानेवेदस्यनित्यत्वकथनात् । तट्टीकायांच अत्रनित्यत्वंनामकूटस्थतयाद्यंतशून्यत्वं । तच्चवेदानां नित्यावेदा स्समस्ताश्चेत्यादिप्रमाणसिद्धमिति नित्यत्वस्यविवृतत्वात्वेदक्रमस्याकृतकत्वसिद्धेः । अत्रवेदपदस्यवेदएवार्थः । नतुकेवलोव



र्णः । अन्यथाउदाहृतप्रमाणस्यवैयधिकरण्यप्रसंगात् तत्वसंख्यानायप्रवृत्तेनवेदाख्यतत्वस्यापरिगणनप्रसंगाच्चनकुचोद्यावका शः । नचवर्णपदादीनामनित्यत्वंवक्तुंयुक्तं । सर्वज्ञत्वादीश्वरस्यतद्बुद्धौसर्वदाप्रतीयमानत्वादितिविष्णुतत्वनिर्णये तट्टीकायांच । नन्वीश्वरबुद्धौसर्वदाप्रतीयमानत्वंनामईश्वरेणसर्वदावर्तमानतयानुभूयमानत्वंविवक्षितं । तस्यैवोक्तार्थसाधकत्वादितिवर्तमानत्ववि शेषणदानेनानुभूयमानत्वकथनेनचवेदस्यानाद्यंतकालेईश्वरबुद्धौवर्तमानतयानुभूयमानत्वकथनान्नमध्येमध्येसृष्टिरितिसिद्ध्यति । पूर्वकल्पएवयेस्थिताःएतएवसर्गेसर्गेऽमुनोद्गीर्यंतइत्युक्तप्रत्यभिज्ञाविरोधस्स्यादित्यर्थइतिटीकागतवाक्यांतरेणच पूर्वकल्पस्थिता नामेववेदानांसर्गेसर्गेउद्गिरणाभिधानात्नसर्गादावुत्पादः प्रागभावाभावात् । उपलक्षणंचैतत् । जन्मवाक्यगतिकथनविरोधाच्चेत्य पिद्रष्टव्यमितिवाक्यांतरेणजन्माभावस्यस्पष्टमुक्तत्वाच्च । अतःपुराणकृताविष्णुबुद्धिगाइतीश्वरेणसर्वदावर्तमानतयानुभूयमा नत्वमुक्तमितिवाक्येनातोवेदास्सर्वदेश्वरेणवर्तमानतयानुभूयंतइतिसिद्ध्यतीतिवाक्यांतराच्चोक्तार्थसिद्धिः । गायत्र्यावेदविशेष त्वेननित्यत्वात् । नित्यस्यचतदधीनत्वायोगात् । नचनित्यस्यतदधीनत्वायोगः । स्वभावजीवकर्माणिद्रव्यंकालश्श्रुतिःक्रिया । यत्प्रसादादिमेसंतिनसंतियदुपेक्षयेति नित्यानामपिभगवदधीनत्वस्यश्रौतत्वादितिगायत्र्यधिकरणवाक्येनवेदानुत्पादस्सिध्यति । तत्रयथाश्रुतीनामनादित्वात्कारणदोषाभावस्तथासमयानामपि । स्वरूपानादित्वंप्रवाहानादित्वमितितुवैषम्यमात्रमित्यादिसुधा वाक्यैश्चस्पष्टंश्रुतीनांस्वरूपानादित्वमुक्तमितिद्रष्टव्यं । उक्तनिरवकाशबहुतरवाक्यविरोधात्क्रमस्यकृतकत्वेपीत्यादिकाचित्कटी

काकारवचनंमीमांसकरीतिमनुसृत्यवाअभ्युपगमवादेनवाप्रवृत्तमितिज्ञातव्यं ॥ ८७ ॥ अनादिसिद्धांतोव्यासससिद्धांतः ॥ ८८ ॥ नन्वेवंघटादिनित्यतामपिस्वशक्त्याघटयेत्किंनेत्याह ॥ यत्रकुत्रेति ॥ ८९ ॥ किंच वर्णानित्यत्ववादिनापिबुद्धिस्थवर्णैरेवक्रमो वाच्यः । तथाचक्रमसिद्ध्यर्थंवर्णानांबुद्धिस्थत्वमेवशरणं । नतदातदासृष्टत्वमित्याह ॥ किंचेति ॥ तथाबुद्ध्यारूढैःपदैर्वाक्यत्वं

तस्मादनादिसिद्धांतशुद्धबुद्धिमतांसतां ॥ प्रमाणेसत्यनादित्वंविनोदेनैवसिद्ध्यति ॥ ८८ ॥
प्रमाणेसतिशक्त्येत्थंघटयेन्नित्यतांहरिः ॥ यत्रकुत्रापितांशक्तिंचित्रशक्तियुर्नक्तिन ॥ नि
र्युद्धरणशक्तिंसकिंप्रयुङ्क्तेतृणोद्धृतौ ॥ ८९ ॥ किंचांत्यवर्णस्योत्पादेप्राक्सृष्टैर्वर्णराशिभिः ॥
बुद्ध्यारूढैःपदत्वंस्यात्प्राक्सृष्टिस्तद्वृथैवते ॥ ९० ॥ वर्णानित्यत्ववादोपिवर्णनित्यत्ववादिनां ॥
प्रक्रियांस्वक्रियासिद्ध्यैसत्करोतीतिमेमतिः ॥ ९१ ॥ त्रिक्षणस्थायिवर्णात्मवेदेष्वाकल्पवर्ति
ता ॥ त्वयापीश्वरबुद्ध्यैवमंगीकार्यामयैवन ॥ ९२ ॥ तवेश्वरोपिसर्गादौसृजेद्वेदंनसर्वदा ॥
पश्चात्स्वबुद्धिविषयैर्वर्णैस्सोपिपदावलिं ॥ वैदिकीमनुसंधत्तेत्वत्पक्षेसर्वदामम ॥ ९३ ॥

चस्यादितिद्रष्टव्यं । तथाचत्वद्वत्पूर्वापरबुद्धिविषयत्वेनैवनित्यत्वपक्षेपिक्रमोक्तिस्सुशकेतिभावः ॥ ९० ॥ त्रिक्षणस्थायीत्यनेन ॥ १६ ॥
तावत्कालस्थायित्वंवर्णानांनास्तीतिसूचयति ॥ एवंमद्वत् ॥ ९२ ॥ तदेवविशदयति ॥ तवेति ॥ पश्चात्सृष्ट्यनंतरं । सर्वदाम

मेत्यस्यायंभावः । यथातवसकृत्सृष्टंवेदक्रमंकल्पावसानपर्यंतंमध्येमध्येपुनरसृजन्नेवानुसंदधातीश्वरस्तथाभिव्यक्तमेवक्रमंसर्वदा नुसंधत्तेनतुकदापिसृजतीति ॥ ९३ ॥ अनादिष्वपिवर्णेषुविशिष्टक्रमविषयीकरणप्रकारंशृंगग्राहकतयादर्शयति ॥ एवमिति ॥ एतेवर्णाःव्याप्ताअकारादिवर्णाः । एवंपौर्वापर्यवंतः । अग्निमीळइत्यादिपौर्वापर्यवंतः ॥ ९४ ॥ तदेवविशदयति ॥ अनंतपद मर्यादामिति ॥ उल्लिखतीतिपूर्वेणसंबंधः । विभक्त्यंतवर्णानामेवपदत्वात् वर्णेष्वेवोक्तपदावलीत्वोल्लेखनंयुक्तिमदितिभावः । सकृदेवस्वबुद्ध्यानंतपदमर्यादोल्लेखनंकथंघटतइत्यतआह ॥ घटयेदिति ॥ अतिदुर्घटं । यशोदांकगतशिशुत्वंतदैवोदरनिविष्ट

एवंपौर्वापर्यवंतएतेवर्णाइतीश्वरः ॥ अनादिनित्ययाबुद्ध्यासदोल्लिखतिवैदिकीं ॥ ९४ ॥ अनंतपदमर्यादां घटयेद्योतिदुर्घटं ॥ अनादिनित्यतैवंवानकुचोद्येनबाध्यते ॥ ९५ ॥ उच्चारयंत्युपाध्यायास्तेपिस्वाध्याप कानुगाः ॥ ९६ ॥ पुराणकृच्चवेदानांव्यासकृन्नतुकारकः ॥ योवेदव्यासनाम्नैवविख्यातोमुनिमंडले ॥ ९७ ॥

ब्रह्मांडत्वंच । एवंवेत्यनेनसाक्षादनंतक्रमविशिष्टवेदमेवतद्वेदपदराशिस्थवर्णमालास्वित्युक्तप्रकारेणस्वबुद्ध्योल्लिखतीतिवा इदा नीमुक्तसमूहालंबनप्रकारेणवाउल्लिखतीतिपक्षद्वयमपिसंगृह्णाति । कुचोद्येन अनादिव्याप्तवर्णेषुकथंक्रमइतिकुचोद्येनेत्यर्थः ॥ ९५ ॥ पूर्वंधर्माद्यसिद्धिप्रसंगेनवेदस्यपौरुषेयत्वंनेत्युक्तं । अधुनाकर्तुःपुरुषस्यप्रसिद्ध्यभावेनापितस्यापौरुषेयत्वमितिवक्तुंतदुपयुक्तप्रमेयच र्चांकरोति ॥ उच्चारयंतीति ॥ ९६ ॥ पुराणकृद्वेदव्यासः व्यासकृद्विस्तारकृत् । विस्तारकरणंनामबहुषुशिष्येषुशाखाभेदेनोप

देशकरणं ॥ ९७ ॥ कर्तृप्रसिद्ध्यभावेनाकर्तृकत्वेगूढकर्तृकवाक्येव्यभिचारइत्यतआह ॥ गूढकर्तृकवाक्यंचेति ॥ अभूत्वाभावीत्यनेनकार्यत्वमेवविवृतमितिज्ञातव्यं । नचासिद्धोहेतुः । वेदवदनादिकालसिद्धत्वस्याननुभवात् । कर्तुर्विशिष्यप्रसिद्ध्यभावेपिवाक्यस्यकादाचित्कत्वेविवादाभावात् ॥ ९८ ॥ वेदेतुनतथाकर्त्रनुमानमित्याह ॥ अनादित्वमिति ॥ यत्रश्रुतौ । साअभूत्वाभाविनीन । नित्येतियावत् । ततःनित्यत्वात् । अतःकर्त्रनुमानस्याप्यभावात् । गूहितःकर्ताभविष्यतीत्यतआह ॥

गूढकर्तृकवाक्यंचध्रुवंकर्तृप्रसिद्धिमत् ॥ अभूत्वाभाविकार्यत्वादपूर्वगृहकूपवत् ॥ ९८ ॥ अनादित्वं
हिगमयेद्यत्राध्येतृपरंपरा ॥ अभूत्वाभाविनीसानततःकर्त्रनुमापिन ॥ अतोऽकर्तैवकोनंतवाक्कर्तारं
निगूहयेत् ॥ ९९ ॥ कर्तृप्रसिद्ध्यभावेनतद्वेदोयमकर्तृकः ॥ १०० ॥ कन्याकुमारीकन्यात्वंयथाभर्तु
रभावतः ॥ लेभेश्रुतिकुमारीयंतथाकर्तुरभावतः ॥ अकृतत्वंध्रुवंलेभेयानित्येतिश्रुतौश्रुता ॥ १०१ ॥

कइति ॥ ९९ ॥ उपसंहरति ॥ कर्तृप्रसिद्ध्यभावेनेति ॥ उपाध्यायपरंपरायाःवेदव्यासस्येश्वरस्यचकर्तृत्वप्रसिद्ध्यभावस्योक्तत्वात्कर्तृप्रसिद्ध्यभावेनेत्यर्थः ॥ १०० ॥ तत्रदृष्टांतमाह ॥ कन्येति ॥ यथाकन्याकुमारीभर्तुरभावतःकन्यात्वंलेभेतथेयंश्रुतिकुमारीतिसंबंधः । याश्रुतिः श्रुतिर्वोवनित्या अनित्यावावस्मृतयः । वाचाविरूपनित्यया । यावद्ब्रह्मविष्ठितंतावतीवाक् । विज्ञेयंपरमंब्रह्मज्ञापिकापरमाश्रुतिः । अनादिनित्यासातच्चविनातांनसगम्यतइत्यादिश्रुतौ नित्याश्रुतेतिसंबंधः । यावद्ब्रह्मविष्ठितंतावतीवागित्यत्राप्यव्यवहितोत्तर कश्छंदसामितिवाक्येनवेदस्यैवप्रस्तावितत्वात्पूर्वोक्तावागपिसैवेतिज्ञातव्यं । वक्ष्यमाणकर्तृप्रसिद्ध्यभावाख्यहेतोःप्रामाणिकत्वद्योतनायेदमुक्तं ॥ १०१ ॥ ननुवेदस्यबुद्धिपूर्वकरचनाभावेनपिपीलिकालिपिवदप्रामाण्यंस्यादित्यतआह॥ पिपीलिकेति ॥ अज्ञैस्तैःपिपीलिकासमूहैःकृतापिपीलिकालिपिरपिबाधेसत्यर्थेव्यभिचरेत् । तदभावेप्रमाणमेवेतिभावः ॥ १०२ ॥ पिपीलिकालिपेरप्यंततःपुंवाक्यत्वेनैवबोधकता । नतुकेवलंलिपित्वेन । पुंवाक्यंचअर्थाबाधेप्रमाणं । अर्थबाधेत्वप्रमाणंचलोकेदृष्टमित्यपौरुषेयवाक्याप्रामाण्येनायंदृष्टांतइतिभावेनाह ॥ किंचेति ॥ तत्तद्वर्णेषुसंकेतितस्तत्तद्रेखा

पिपीलिकालिपिश्चापितैरज्ञैर्भ्रमतःकृता ॥ बाधेव्यभिचरेदर्थेनत्वनादिरियंश्रुतिः ॥ १०२ ॥ किं
चस्वव्यासवर्णानांलिपिस्साह्यनुमापिका ॥ वाक्यंतैःकुरुतेतज्ज्ञस्ततःपुंवाक्यमेवतत् ॥ १०३ ॥
लिपिकारकदोषेणदुर्लिप्यादुष्टवर्णधीः ॥ तेनायोग्यार्थकंवाक्यंततश्चामानताक्वचित् ॥ १०४ ॥

विशेषएवलिपिर्नाम । तथाचतादृशरेखाविशेषंदृष्ट्वातद्व्याप्तोवर्णोनुमीयते । एवंरेखांतरेणवर्णांतरं । लिप्यनुमितैश्चवर्णैःपदंवाक्यंचतज्ज्ञोलिपिज्ञःकुरुते। ततोलिप्यनुमितवर्णसमूहैःरचितंतद्वाक्यंपुंवाक्यं। तथाचतद्वाक्यत्वेनैवप्रमाणंनतुलिपित्वेनैवेतिभावः ॥ १०३ ॥ तस्यचवाक्यस्यक्वचिदप्रामाण्येकारणमाह ॥ लिपिकारकेति ॥ क्वचिल्लिपिकारकस्यपिपीलिकादेर्दोषेणअज्ञानभ्रमादिनाजातयादुर्लिप्यादुष्टवर्णधीर्भवति । तेनदुर्लिप्यनुमितवर्णसमूहेनायोग्यार्थकंवाक्यंभवति । ततश्चायोग्यार्थकवाक्यत्वा

युक्ति- मल्लिका

॥ १८ ॥ गुणसौ०

त्क्वचिदमानताभवतीत्यर्थः । वेदेतुनतथालिपिकारकदोषोस्ति । किंतुअनादिकालमारभ्योपाध्यायपरंपरयानियताध्ययनमेव । तस्यकुतोऽप्रामाण्यमितिभावः ॥ १०४ ॥ रीत्यंतरेणवेदस्यापौरुषेयत्वंप्रामाण्यंचसाधयति ॥ अनादितइत्यादिना ॥ श्राव काःश्रोतारः । स्मृत्यादिकर्तॄणांवसिष्ठादिऋषीणांब्रह्मादिदेवानांश्रोतृत्वेसृष्ट्यादौयोगनिद्रांकुर्वतोविष्णोरपिश्रोतृत्वेकःकर्तास्यादि तिभावः ॥ १०५ ॥ फलंचदृश्यतेजपादिनेतिशेषः ॥ १०६ ॥ दोषाभावात्वाक्याप्रामाण्यनिमित्ताबोधकत्वविपरीतबोधक

अनादितस्तुयद्वाक्यंशृणोत्येवाखिलोजनः॥स्वयंपुनर्नकुरुतेश्रावकाश्चसुरर्षयः॥१०५॥
यस्यस्वराश्चनियताःक्रमाश्चनियतास्सदा॥फलंचदृश्यतेयस्यतद्धिमानंमहत्तरं॥१०६॥
दोषाभावादमानत्वशंकास्यांकिंकृतावद ॥ १०७ ॥ स्वोक्ताश्वासाययांव्याससूत्रे
सूत्रेजगौहरिः॥ तांश्रुतिंकोपरःकुर्यान्मानंवाकिंततोधिकं ॥ १०८ ॥ अनाद्युपाध्या
यपारंपर्येणैवनिरीशितुः॥ नियतैकप्रकारत्वंनित्यत्वंतच्चनेतिन ॥ १०९ ॥

त्वादिरूपदोषाभावात् । तदभावोप्यनादित्वेनपुंदोषाभावादितिज्ञातव्यं । अस्यांश्रुतौ ॥ १०७ ॥ सूत्रेसूत्रे श्रुतत्वाच्च श्रुतेश्चे त्यादिसूत्रे । अपरःव्यासात् ॥ १०८ ॥ जयतीर्थीयेक्वचित्क्वचित्तार्किकंप्रतिमीमांसकोक्तनियतैकप्रकारकत्वरूपस्यवा एकजाती यक्रमवत्त्वरूपस्यवा नित्यत्वस्यप्रौढिवादेनोक्तत्वात्तदप्याह ॥ अनादीति ॥ निरीशितुर्मीमांसकस्य । नियतैकप्रकारत्वंएक ॥ १८ ॥

जातीयक्रमवत्त्वस्याप्युपलक्षणं ॥ १०९ ॥ अनाथानामीश्वरानंगीकारेणजगन्नाथरहितानामित्यर्थः । अगतिकानामितिध्वनिः । सर्वदाक्रमनिर्वाहकनित्येश्वरबुद्धिरूपगतिरहितत्वादगतिका । सनाथास्सेश्वरवादिनोवयंतु सभाग्याइतिध्वनिः । द्वेधापि मीमांसकोक्तरीत्यास्वरूपेणच ॥ ११० ॥ उक्तार्थेअनुमानमाह ॥ एवंचेति ॥ हेतोरसिद्धिंपरिहरति ॥ अवद्येति ॥ १११ ॥

सोनाथानांयतःपंथास्तस्मादगतिकागतिः ॥ सनाथास्तुवयंद्वेधाप्यनादित्वंप्रचक्ष्महे
॥ ११० ॥ एवंचविमतोवेदोमानमित्यनुमीयते ॥ अवद्याऽमूलवाक्यत्वादाप्तवाक्य
वदेवहि ॥ अवद्याऽमूलताचास्यनित्यत्वाद्गगनादिवत् ॥ १११ ॥ कर्तृप्रमितिशून्य
त्वान्नित्यत्वंचास्यसिद्ध्यति ॥ तद्वदेवततोवेदस्सिद्धोधर्मानुशासनं ॥ ११२ ॥
अन्यथाधर्मसिद्धिर्नैत्यस्तितर्कोतिकर्कशः ॥ ११३ ॥ कारीर्यावीक्ष्यतेवृष्टिःपुत्रेष्ट्या
पुत्रजन्मच ॥ कृषाविवांगवैकल्यात्क्वचिच्चविकलंफलं ॥ ११४ ॥

द्वितीयहेत्वसिद्धिंपरिहरति ॥ कर्तृप्रमितीति ॥ तार्किकरीत्याकर्तृभ्रांतिसद्भावाद्धेतोरसिद्धिरित्यतःप्रमितीत्युक्तं । तद्वत् गगनवत् । ततःप्रमाणत्वात् ॥ ११२ ॥ अनुकूलतर्कमाह ॥ अन्यथेति ॥ यथाचैतत्तथोक्तंप्राक् ॥ ११३ ॥ ननुवेदोऽप्रमाणं अनृतत्वाद्व्याहतत्वादित्यादेः यथासंप्रतिपन्नमित्यनुमानेनसत्प्रतिपक्षंभवदनुमानमितिचेत् तत्राह ॥ कारीर्येति ॥ क्वचिच्चवि

कलंफलं फलवैकल्यमितियावत् ॥ ११४ ॥ तथाचानृतत्वादयःसंदिग्धासिद्धाः अमुष्यवेदस्य अमानत्वंनसाधयेयुरितिसंबंधः ॥ ११५ ॥ ततस्सर्वैरप्यपेक्षणीयत्वाद्वेदस्यप्रामाण्यमंगीकार्यमित्याह ॥ **कलाविति** ॥ तद्वेदवाक्यं । बलमिवबलं । यद्वेद वाक्यं । द्वापराचार्येणव्यासेनस्वोक्तार्थेतत्रतत्रसंमतिकथनात् । द्वापराचार्येत्यनेनकलियुगादपिप्रधानयुगेसकलमुनीनांसंमत त्वेनयोवेदआद्रियते सकथंनिकृष्टयुगवर्तिभिर्जनैर्दुष्यते । स्वकलहशांतयेउपायांतराभावात्स्वाज्ञानविजृंभितमेवतद्दूषणमिति ध्वनितं ॥ ११६ ॥ अतीतानागतज्ञानिनासकलमुनिमान्येनमहापंडितेनव्यासेनवेदस्यनित्यत्वेनोक्तत्वात्नित्यत्वमंगीकार्यमित्या

अनृतत्वादयोदोषास्संदिग्धासिद्धमूर्तयः ॥ नामानत्वंततोमुष्यसाधयेयुःपरोदिताः ॥ ११५ ॥
कलौयुगेकलहिनांषण्णांषण्मार्गवर्तिनां ॥ तद्बलंद्वापराचार्यव्यासवाचांचयद्बलं ॥ ११६ ॥
अष्टादशपुराणानांकर्तासत्यवतीसुतः ॥ तदुक्तौकस्यनश्रद्धायदुच्छिष्टंजगत्त्रयं ॥ ११७ ॥
वेदोनमानमितितुद्वौचत्वारोस्यमानतां ॥ मन्वतेतद्बहोरेवतन्वतेनुग्रहंबुधाः ॥ ११८ ॥

ह ॥ **अष्टादशेति** ॥ यस्यव्यासस्यउच्छिष्टंउच्छिष्टोज्जीवि । तद्वदननिस्सृतकवित्वच्छायापहारीत्यर्थः ॥ ११७ ॥ वेदप्रामाण्य वादिनांबहुत्वात् । द्वैधेबहूनांवचनमितिन्यायेनबहुभिरंगीकृतवेदप्रामाण्यमेवमान्यमित्याह ॥ **वेदइति** ॥ द्वौचार्वाकबौद्धौ तदन्येचत्वारः । मीसमांसकसांख्यतार्किकवेदांतिनः । तत्तस्मात्कारणात् बुधाःबहोरेवानुग्रहंतन्वते । बहुभिःपरिगृहीत मेवानुगृह्णंति । अन्यथासप्तपंचत्र्यात्मकसभ्येषुसभ्यानामेवमिथःकलहेचतुर्भिस्त्रिभिर्द्वाभ्यांचोक्तानुसारेणजयपराजयव्यवस्थान



स्यादितिभावः ॥ ११८ ॥ सर्वशास्त्रेभ्योवेदस्यबहुत्वान्नाप्रामाण्यमित्याह ॥ **छंदांसीति** ॥ तैस्तैस्तत्तदाचार्यैः । किंततइत्यतआ ह ॥ **कोंधोरिति** ॥ अपारस्यसिंधोरग्रेअल्पस्यांधोःकूपस्यपराक्रमंकोंधोनुसंधत्तइतिसंबंधः । तथाचाल्पंतत्तदाचार्यवचनंपुर स्कृत्यअनंतवेदधिक्कारोनयुक्तइतिभावः ॥ ११९ ॥ बहुयुगानुवर्तित्वादपिवेदस्यप्रामाण्यमित्याह ॥ **कलाविति** ॥ शड्दर्शना चार्यवचांसिकलावेवोल्लसंति । वेदस्तुतत्पूर्वद्वापरत्रेताकृतयुगोल्लासीतिभावः । त्रियुगोत्सवत्वमुपपादयति ॥ **राजसूयेति** ॥

छंदांस्यनंतानिकिलग्रंथस्तैस्तैकृतोल्पकः ॥ कोंधोरंधोनुसंधत्तेसिंधोरग्रेपराक्र
मं ॥ ११९ ॥ कलौकिलषडाचार्यावेदस्तुत्रियुगोत्सवः ॥ राजसूयाश्वमेधाद्या
यन्मूलाश्चक्रवर्तिनां ॥ १२० ॥ द्विपात्त्रिपाच्चतुष्पाच्चतत्रधर्मोत्रचैकपात् ॥ धर्मा
नुशासनंतद्वावादिवाग्वाविचार्यतां ॥ १२१ ॥ धर्मप्रवृत्तिकालीनंवाक्यंनकिल
धर्मवाक् ॥ कलावधर्मकलिलेधमशास्त्रकृतःकिल ॥ १२२ ॥

यन्मूलाःवेदमूलाः । राजसूयाश्वमेधादीन्कृतयुगादिष्वेवकुर्वंतीतिप्रसिद्धं ॥ १२० ॥ बहुतरधर्मसंचारसहचरितत्वाच्चवेदएवहि धर्मानुशासनं । ततश्चतस्यैवप्रामाण्यमित्याह ॥ **द्विपादिति** ॥ तत्रद्वापरादियुगेषु अत्रकलियुगे । तद्वेत्यनेनबहुधर्मप्रवृत्ति कालीनत्वंवेदस्यध्वनयति ॥ १२१ ॥ तदेवोपपादयति ॥ **धर्मेति** ॥ तथाचजिनादिवाक्यंनधर्मशास्त्रमितिभावः ॥ १२२ ॥

विप्रतिपन्नार्थनिर्णायकत्वादपिवेदस्यप्रामाण्यमितिसदृष्टांतमाह ॥ अद्यापीति ॥ तादृङ्मध्यस्थगीरूपः पूर्वशासनरूपश्चेत्यर्थः ॥ १२३ ॥ पाणिन्यादिव्याकरणाचार्यैरपिपुरस्कृतत्वाच्चवेदस्यप्रामाण्यमित्याह ॥ छंदसीति ॥ आद्यैरित्यनेनअयस्मयादीनि छंदसि । बहुलंछंदस्यामाङ्योगेपि । छंदस्युभयथा । षष्ठीयुक्तश्छंदसिवेत्यादिसूत्राणिसंगृह्णाति ॥ यन्मार्गेवेदमार्गे ॥ १२४ ॥

अद्यापिमध्यस्थगिरापूर्वशासनतोपिवा ॥ नृणांकलहशांतिस्स्यात्तादृग्वेदस्तुकस्यन ॥१२३॥ छंदस्ययस्मयादीनीत्याद्यैश्शब्दानुशास्तिकृत् ॥ अमानयद्धियन्मार्गमानंक स्यनसाश्रुतिः ॥ १२४ ॥ तस्माद्वेदार्थकुशलोवेदधर्मैकलावपि ॥ नवेदयोवेदमार्गेन सवेदशुभाशुभे ॥ १२५ ॥ वैदिकैःकिलगायत्रीमंत्राद्यैर्मंत्रितेषवः ॥ अस्त्रीभवंति स्मराज्ञांकस्तच्छास्त्रंनमानयेत् ॥ १२६ ॥ यत्स्वाध्यायैःकिलाद्यापिव्याध्याद्यैर्नास्त्यु पद्रवः ॥ धर्मस्यवेदनादेवसवेदोनात्रसंशयः ॥ १२७ ॥

तस्माद्धर्मानुशास्तिरूपत्वात् ॥१२५॥ वैदिकमंत्रप्रयोगैःफलदर्शनादपिवेदस्यप्रामाण्यमित्याह ॥ वैदिकैरिति ॥ १२६ ॥ वेदस्वाध्यायेनाभीष्टफलसिद्धिदर्शनाच्चवेदःप्रमाणमित्याह ॥ यत्स्वाध्यायैरिति ॥ यस्यवेदस्यस्वाध्यायैर्जपैरित्यर्थः । अद्यापिइदानीमपि । विश्वनाथदेवालयेतथादर्शनात् । वेदशब्दार्थवत्त्वादपिवेदस्यप्रामाण्यमित्याह ॥ धर्मस्येति ॥ १२७ ॥ दुराग्रहा

गृहीतत्वादपिवेदस्यप्रामाण्यमितिवक्तुंतदुपयुक्तंकिंचित्प्रमेयमाह ॥ स्वबंधुष्विति ॥ तन्मुखात्पांथमुखात् सधर्मंवक्तीतितंपूज
यंतीतिभावः ॥ १२८ ॥ यदर्थमिदमुक्तंतदाह॥ तथेति ॥ सर्वैःसर्वदर्शनाचार्यैः । धर्मसिद्ध्यैपरंरतिरित्यनेनदुराग्रहागृहीतत्वंद्यो
तयति ॥ १२९ ॥ दैत्यैर्वेदस्यापहृतत्वादपिवेदस्यप्रामाण्यमित्याह ॥ सुवित्तस्येति ॥ यथालोकेसुवित्तस्यरत्नादेरेवचोरोस्ति ।
दुर्वित्तस्य घटकपालशकलादेः । तथाचवेदस्यामानत्वेदुर्वित्तत्वेनस्वतएवजीर्णत्वात्नतस्करःस्यात् । श्रूयंतेचतस्करास्तमआदिदै

स्वबंधुसुकृतःस्नेहस्स्याद्धिरागादिदोषतः॥ पांथेषुतुकृतःस्नेहोधर्मंश्रुत्वैवतन्मुखात् ॥ १२८ ॥
तथास्वस्वकृतेशास्त्रेसर्वस्यस्याद्दुराग्रहः ॥ सर्वैरकृतशास्त्रेस्मिन्धर्मसिद्ध्यैपरंरतिः ॥ १२९ ॥
सुवित्तस्यैवचोरोस्तिदुर्वित्तस्यनतस्करः ॥ अमानंचेत्स्वतोजीर्णंकुतोवेदमचूचुरत् ॥ १३० ॥
हयग्रीवमुखोद्गीर्णासावाणीधर्मशासनं ॥ अतस्तदुदितोधर्मोह्यधर्मस्तद्विपर्ययः ॥ १३१ ॥
चार्वाकस्यनवाक्चार्वीकुर्वीतात्मवधंयतः ॥ अक्षैकमानतावाक्किंरक्षेदात्मप्रमाणतां ॥ १३२ ॥

त्याः । तस्माद्वेदःमहाप्रमाणीभूतवागाख्यसुवित्तमितिभावः ॥ १३० ॥ वेदापौरुषेयत्ववादमुपसंहरति ॥ हयग्रीवेति ॥ तदुदि
तोवेदोदितः । तद्विपर्ययस्तन्निषिद्धइतियावत् ॥१३१॥ इतिवेदापौरुषेयत्वप्रकरणं ॥ ७ ॥ ७ ॥ चार्वाकमतंनिराकरोति ।
चार्वाकस्येत्यादिना ॥ चार्वीमनोहरा । आत्मवधंस्वाप्रामाण्यलक्षणंवधं । तदेवोपपादयति ॥ अक्षैकेति ॥ अक्षैकमानतावाक्

प्रत्यक्षमेकमेवप्रमाणमितिवाक् । आत्मप्रमाणतां आत्मनस्स्वस्यवाचःशास्त्ररूपायाः प्रमाणतांरक्षेत्किंनरक्षेदितियतः अतः नचा
वींतिसंबंधः ॥ १३२ ॥ स्वस्यमानत्वाभावेकाक्षतिरित्यतआह ॥ शिष्येति ॥ साशास्त्ररूपा वाक् शिष्यप्रमायैवाच्याव्याख्येया ।
मानतानचेच्छोच्या सानप्रयोज्या । तैःशिष्यैःपूज्याचनेतिसंबंधः । नह्यप्रमाणभूताच्छास्त्राच्छिष्याणांतत्त्वबोधोभवति । अतः
प्रत्यक्षस्यैवमानत्वरूपतत्वसिद्धौशास्त्रस्याप्रामाण्यं प्रत्यक्षातिरिक्तत्वात् । शास्त्रस्याप्रामाण्ये नतत्वसिद्धिरित्युभयतःपाशारज्जुः ।

शिष्यप्रमायैवाग्वाच्यासाशोच्यामानतानचेत् ॥ नप्रयोज्यानतैःपूज्यामू
कोलोकायतोभवेत् ॥ १३३ ॥ किंचप्रत्यक्षमेवैकंमानमित्यादिरूपिणी ॥
वाच्कप्रमापिकाचेत्स्याद्वाक्यार्थप्रच्युतिस्तदा ॥ १३४ ॥ यद्यप्रमापिकासास्या
द्वाक्यार्थप्रच्युतिस्तदा ॥ अर्थयाथार्थ्यतःप्राहुरमानत्वंयतोबुधाः ॥ १३५ ॥

अतईदृक्शास्त्रंशिष्यायनोपदेश्यमिति लोकायतस्यमूकतैवशरणमितिभावः ॥ १३३ ॥ इदानींचार्वाकशास्त्रस्यप्रामाण्येअप्रामा
ण्येचस्वाभिलषिततत्वस्यासिद्धिरेवेतिपक्षद्वयेपिप्रतिवादिनामेवजयइत्याह ॥ किंचेति ॥ प्रत्यक्षमेकमेवमानमित्यादिरूपिणीवाक्
प्रमापिकास्याच्चे त्तदावाक्यार्थप्रच्युतिः वाक्यार्थस्यप्रत्यक्षमेवप्रमाणमित्यस्यप्रच्युतिस्स्यादितिक्रियावृत्त्यायोज्यं । अस्मिन्पक्षेशा
स्त्ररूपवाक्यस्यप्रत्यक्षस्यचेत्युभयोरपिप्रामाण्यप्राप्तेरितिभावः ॥ १३४ ॥ पक्षांतरमप्याशंक्यप्रागुक्तदूषणेनैवदूषयति ॥ यदीति ॥

सा प्रत्यक्षमेकमेवमानमित्यादिरूपावाक् । तदापिवाक्यार्थप्रच्युतिःप्रत्यक्षमेकमेवमानमितिवाक्यार्थप्रच्युतिस्स्यादितिसंबंधः । क
थमित्यतस्तदुपपादयति ॥ अर्थेति ॥ अमानत्वंवाक्यस्येतिशेषः । यतः अर्थायाथार्थ्यतएववाक्यामानत्वंबुधाःप्राहुः । यतश्चप्र
त्यक्षमेकमेवमानमितिवाक्यार्थः । अतस्तस्याविद्यमानत्वरूपायथार्थत्वेकथंनवाक्यार्थप्रच्युतिरितिभावः ॥ १३५ ॥ अतःउभय
त्रापिवाक्यार्थप्रच्युतेः । त्वच्छास्त्रमानत्वेत्वच्छास्त्रस्यप्रत्यक्षस्यचप्रामाण्यात् त्वत्प्रतिवादिभिरस्माभिर्जितं । त्वच्छास्त्रस्यामान

अतस्त्वच्छास्त्रमानत्वेजितंत्वत्प्रतिवादिभिः ॥ त्वच्छास्त्रामानतायांचजितंत्वत्प्रतिवा
वादिभिः ॥ १३६ ॥ त्वद्वाक्यार्थोस्तिचे न्मानमागमोपिबलाद्भवेत् ॥ त्वद्वाक्यार्थोनचे
न्मानमागमोपिबलाद्भवेत् ॥ १३७ ॥ चित्रंपक्षद्वयेप्येकंपतितंदूषणंतव ॥ तंत्वांपति
तपङ्क्तिस्थंसंतोहंतहसंतिते ॥ अखर्वगर्वचार्वाकदुर्वाक्यंनोर्वकुर्वत ॥ १३८ ॥

तायांचत्वत्प्रतिवादिभिरस्माभिर्जितं । शास्त्राप्रामाण्यस्यचशास्त्रार्थभूतप्रत्यक्षैकप्रमाणत्वाख्यत्वदभिलषिततत्वाभावमंतर्भाव्यैव
प्राप्तेरितिभावः । अथवा अस्मदभिलषितप्रमेयविरोध्यर्थप्रतिपादकत्वच्छास्त्राप्रामाण्येबाधकाभावेनास्मदभिलषितसकलप्रमेय
सिद्धेरितिभावः ॥ १३६ ॥ १३७ ॥ किंचेत्यादिनोक्तंचसोपहासमुपसंहरति ॥ चित्रंमित्यादिना ॥ पक्षद्वये प्रामापकत्वाप्र
मापकत्वरूपपक्षद्वये।एकंदूषणं वाक्यार्थप्रच्युत्याप्रतिवादिनांजयइत्येकंदूषणं तवपतितं आगतं। पतितपङ्क्तिस्थंपरिहारासामर्थ्या

त् आगतदूषणैस्सहतूष्णींस्थितमित्यर्थः। जातिभ्रष्टपङ्क्तिस्थमितिध्वनिः। येसंतोहसंतितेअखर्वगर्वचार्वाकदुर्वाक्यं उरुश्रेष्ठंनाकुर्वते तिसंबंधः। पूर्वोत्तरव्याहतत्वादप्रयोजकमकुर्वतेतिभावः॥१३८॥ प्रत्यक्षैकप्रामाण्यवादिनःकथायामनधिकारश्चेत्याह॥ कथेति॥ जल्पादौजल्पादिविषये। कथावार्ता। प्रत्यक्षस्यैवप्रामाण्यमंगीकृत्यतत्रशास्त्रस्यापिप्रमाणीकरणात्कैतवशीलेतिचार्वाकंप्रतिसंबुद्धिः। यद्यस्मात्। उक्तिरागमः। तदितिपूर्वेणसंबंधः॥१३९॥ एवंचअक्षैकमानतावादी वादकृत्कोवादीनोन। सर्वोपिदीनएवेत्यर्थः।

कथावृथैवजल्पादौतवकैतवशीलतत्॥ यन्नास्तियुक्तिरुक्तिस्तेगर्जत्सुप्रतिवादिषु
॥१३९॥ अक्षैकमानतावादीकोवादीनोनवादकृत्॥१४०॥ तेक्षणस्तीक्ष्णकटाक्षस्ता
न्प्रतिवक्ष्यतिकांकथां॥ अतस्त्वत्क्रियायासर्वाविरुद्धाप्रक्रियातव॥ १४१॥ अथ
प्रत्यक्षदृष्टेऽर्थेयदावाक्यंप्रयुज्यते॥ तेनबोधोपिनस्याच्चेद्धीनास्याद्वक्तृतैवते॥१४२॥

प्रतिवादिनंप्रतिवक्तुंयोग्यायाःयुक्तेरुक्तेश्चाभावादितिभावः॥१४०॥ प्रत्यक्षरूपस्यतेऽक्षणस्तीक्ष्णकटाक्षस्तान्प्रतिवादिनःप्रतिकांकथांवक्ष्यतीतिसंबंधः। अतःयुक्त्यादिप्रामाण्यमनंगीकृत्यपुनर्विप्रतिपन्नार्थेयुक्त्यादेरेवप्रमाणतयाकथनादित्यर्थः। सर्वापितवप्रक्रिया शास्त्रजल्पादिप्रक्रिया त्वत्क्रिययायुक्त्यादिकथनरूपस्ववचनक्रिययाविरुद्धेतिसंबंधः॥ १४१॥ रीत्यंतरेणवाक्यस्यानुमानस्यचप्रामाण्यंसाधयति॥ अथेति॥ तेनप्रत्यक्षदृष्टार्थेप्रयुक्तवाक्येन। वक्तृतैवहीनास्यात्। अबोधकवाक्योक्तेरयोगादितिभावः

॥ १४२ ॥ स्याच्चेत्तेनबोधइत्यावृत्तिः ।तस्यबोधस्यप्रमात्वंचावश्यमंगीकर्तव्यं ।एकार्थविषययोरेकस्यमानत्वमपरस्यामानत्वमित्य स्यायोगादितिभावः । मानतावाक्यस्येतिशेषः । प्रमाकरणत्वातिरिक्तप्रामाण्याभावादितिभावः । तत्रप्रत्यक्षदृष्टेऽर्थे । तद्वदेव वाक्यवदेव ॥ १४३ ॥ प्रकारांतरेणानुमानप्रामाण्यंसाधयितुमाह ॥ प्रत्यक्षस्येति ॥ यदियुक्तिर्नकथ्यतेतदाबाधकाभावादनु

स्याच्चेत्प्रमात्वंचावश्यंतस्येत्यासीद्धिमानता ॥ तत्रप्रयुक्तयुक्तेश्चतद्वदेवप्रमाणता
॥ १४३ ॥ प्रत्यक्षस्यैवमानत्वेयुक्तिश्चेत्कथ्यतेत्वया ॥ अनुमानंतदामानं यदियु
क्तिर्नकथ्यते ॥ अनुमानंतदामानंराजाज्ञानाहितेवचः ॥ १४४ ॥ नापिहार्दगु
हाबोधःप्रत्यक्षेणैवजायते ॥ तद्भोक्तॄणांचपातॄणामनुमानंपरायणं ॥१४५॥ तस्मा
त्प्रत्यक्षानुमानागमानांमानताध्रुवा ॥१४६॥ यद्यदृष्टंनतर्ह्येकःपोष्योन्यःपोषकःकु
तः ॥ धनभावाभावतश्चेत्तयोरपिनियामकं ॥ किंदृष्टमेवयत्किंचिदुतादृष्टंविचारय ॥ १४७ ॥

मानंमानमितिभावः । तदेवविशदयति ॥ राजाज्ञेति ॥ १४४ ॥ भोजनादिकरणान्यथानुपपत्त्याप्यनुमानस्यमानतेत्याह ॥ नापीति ॥ हार्दगुहायाअप्रत्यक्षत्वादितिभावः ॥ १४५ ॥ १४६ ॥ अतींद्रियादृष्टंसाधयति ॥ यदीति ॥ धनभावाभावतइति पोषकस्यधनसद्भावात्पोष्यस्यधनाभावादित्यर्थः । तयोःधनभावाभावयोः । दृष्टमेवशरीरादिकं । यत्किंचित् ॥ १४७ ॥ दृष्टमे

वनियामकमित्येतद्दूषयति ॥ दृष्टेति ॥ तस्माददृष्टमेवशरणमित्याह ॥ स्यादिति ॥ १४८ ॥ यत्सदसत्त्वाभ्यांपुण्यपापसदसत्त्वाभ्यां । तत्पुण्यपापरूपं ॥ १४९ ॥ अदृष्टंसाधयित्वातदाश्रयंनित्यंदेहभिन्नचेतनमपिसाधयति ॥ तदिति ॥ अत्रएतज्जन्मनि । अन्यदेहेषुएतत्तुल्यान्यदेहेषु । अन्योदेहात् ॥ १५० ॥ ननुदृष्टकारणाभावेप्यदृष्टंकारणंकुतःकल्प्यतेनिर्निमित्तमेवकार्यं

दृष्टदेहेंद्रियादीनामिच्छायत्नादिकस्यच ॥ उभयत्रापिसाम्येनस्याददृष्टंनियामकं
॥ १४८ ॥ अतोयत्सदसत्त्वाभ्यांधन्योकोन्यस्तुनिर्धनः ॥ अदृष्टंचतदेष्टव्यंदृष्ट
वत्कार्यगौरवात् ॥ १४९ ॥ तद्धेतुशुभकर्मादेरत्रादृष्टस्यसर्वथा ॥ करणाया
न्यदेहेषुनित्योन्योप्यस्तिदेहभृत् ॥ १५० ॥ कार्यस्यनिर्निमित्तत्वमुन्मत्तोवक्तुम
र्हति ॥ तृप्त्यर्थंकोनभुंजीतसुखार्थंनयतेतकः ॥ १५१ ॥ अपिचाव्यंगकुणपेमर
णंनामकिंतव ॥ पूर्वदृष्टांगनेत्रादेःपश्चादपिचदर्शनात् ॥ १५२ ॥

किंनस्यादितिमिदाशंकांपरिहरति ॥ कार्यस्येति ॥ उन्मत्तएववक्तुमर्हति । नत्वन्यः । कार्यस्यसकारणकत्वंसाधयति ॥ तृप्त्यर्थमिति ॥ नयतेत । तत्साधनस्रक्चंदनादावितिशेषः ॥ १५१ ॥ शरीरेजीववियोगलक्षणमरणान्यथानुपपत्त्यापिशरीरातिरिक्तो जीवःकल्पनीयइत्याह ॥ अपिचेति ॥ अव्यंगेत्यनेनअवयवच्छेदादिविशेषाभावंद्योतयति । द्योतितमर्थंविशदयति ॥ पूर्वेति ॥ २३ ॥

॥ १५२ ॥ श्वासाभावएवमरणमित्याशंक्याह ॥ स्पर्शेति ॥ स्पर्शानुमेयेत्यनेनानुमानप्रामाण्यानंगीकारात्तन्मतेदौर्घट्यंद्योतयति । नीरूपेत्यनेनाप्रत्यक्षत्वंचद्योतयति । भवतुवास्थूलास्मदादिशरीरेश्वासानुमानंतत्प्रत्यक्षत्वंवा श्वासगतस्पर्शस्यतत्रप्रत्यक्षत्वात् । सूक्ष्मशरीरवच्चेतनेषुश्वासस्यात्यल्पत्वेनतत्स्पर्शस्याप्रत्यक्षत्वात् तत्रश्वासाभावलक्षणमृतिस्त्वयावक्तुंनशक्येतिभावेनाह ॥ मक्षिकेति ॥ यस्यश्वासस्य ॥ १५३ ॥ तस्माज्जीववियोगएवमरणमित्याह ॥ तस्मादिति ॥ मृत्यामृतिः मृत्यभावप्रसं

स्पर्शानुमेयनीरूपश्वासे नाश्वासवान्भवान् ॥ मक्षिकामत्कुणादौतेयस्यदृश्यास्थिति
श्वन ॥ १५३ ॥ तस्माद्देहान्यजीवात्मातत्रनास्तीतिसामृतिः ॥ इत्येवसर्वथावाच्यं
नचेन्मृत्यामृतिस्तव ॥ १५४ ॥ अतोयोगविशेषेणयथातांबूलरक्तिमा ॥ तथायोग
विशेषेणजडस्यैवप्रमातृता ॥ इतियोवक्तितस्यापिकुणपोऽभणदुत्तरं ॥ १५५ ॥

गइतिभावः । मृत्या मृतिःकथंवक्तव्येतिचिंतयातवैवमृतिस्स्यादितिच ॥ १५४ ॥ अपिचेत्यादिनोक्तमर्थमुपसंहरन्भूतत्रययोगएवप्रमातेतितत्प्रक्रियांचदूषयति ॥ अतइति ॥ उक्तरीत्याकुणपेपिभूतत्रययोगस्यजीवच्छरीरवदन्यूनत्वात् । योगविशेषेणक्रमुकपर्णचूर्णयोगेनेत्यर्थः । दृष्टांतमुक्त्वादार्ष्टांतिकमाह ॥ तथेति ॥ योगविशेषेणपृथिव्यप्तेजोरूपभूतयोगेनेत्यर्थः । जडस्यैवजडशरीरस्यैवप्रमातृताचेतनताइतियश्चार्वाकोवक्तितस्यापिएवंवदतश्चार्वाकस्यापि । कुणपोऽभणदुत्तरमित्यस्यायंभावः । जीवच्छ

रीरेयोभूतत्रययोगोस्तिससर्वोप्यव्यंगकुणपेप्यस्ति । तथाचशरीरातिरिक्तजीवाभावेजीवच्छरीरवत् कुणपेपिप्रमातृत्वादिकंस्यात् । नचतद्दृश्यते । तस्माज्जीवच्छरीरेकुणपादस्तिकश्चिद्विशेषः । सपरिशेषाच्छरीरातिरिक्तजीवसंयोगएवेतितत्सत्वाज्जीवच्छरीरेप्रमातृत्वादि कुणपेतदभावात्प्रमातृत्वाद्यभावइति । तदेवविशदयति ॥१५५॥ पृथिवीति ॥ सःपृथिव्यादियोगः । वादीप्रतिवादी । नोऽर्थइतिशेषः ॥ १५६ ॥ ननुजीवच्छरीरेगोलकातिरिक्तेंद्रियसत्त्वाद्विशेषइत्यतआह ॥ अतींद्रियेति ॥ इंद्रियंनास्तीत्यत्र

पृथिव्यप्तेजसांयोगोजीवदेहेपिनापरः ॥ ससर्वःकुणपेप्यस्तिवादीनः
कुणपोभवत् ॥ १५६ ॥ अतींद्रियेंद्रियंनास्तिगोलकंतूभयत्रच ॥ आ
त्मादृष्टे नकुत्रापिकिंन्यूनंकुणपस्यतत् ॥१५७॥ पूर्णोजीवार्हयोगोस्मि
ञ्ज्ञानाक्रिम्यात्मकेक्रमात् ॥ तस्माद्देहस्वामिजीवस्याभावोत्रध्रुवोभवत् ॥ १५८ ॥

युक्तिरतींद्रियेति । तेनातींद्रियपदार्थानंगीकारात् । दृश्यमानंचक्षुरादिगोलकंतुउभयत्रच जीवच्छरीरकुणपयोस्तुल्यमितिभावः । नकुत्रापि जीवच्छरीरकुणपयोरित्यर्थः । तत्तस्मात्कुणपस्यकिंन्यूनं ॥ १५७ ॥ जीवच्छरीरादपिकुणपएवजीवार्हयोगोयुक्तियुक्त इत्याह ॥ पूर्णइति ॥ क्रमाज्ज्ञानाक्रिम्यात्मकेऽस्मिन्कुणपेजीवार्हयोगःजीवकथायोग्ययोगः पूर्णःसंपूर्णः । पूर्वाधिष्ठाताजीवएव नास्ति । जीवार्हयोगस्तुकुणपेपिपूर्णएव । अन्यथापुनस्तत्रजीवाःकथंस्युरितिभावः । तस्माज्जीववियोगंविनामरणस्यानिरूप्य

त्वात् ॥ १५८ ॥ शवाशवयोर्वायुसंचाराभावभावाभ्यांविशेषइत्येतत्प्रकारांतरेणापिपरिहरति ॥ **शवस्येति** ॥ तदुपपादयति ॥ **भस्त्रांतरिति** ॥ तस्यवायोः ॥ १५९ ॥ हृद्येवनिरुद्धश्वासमुनीश्वरवत्कुणपेप्यंतश्श्वाससंभवेनतदभावस्यत्वयानिर्णेतुमशक्यत्वाच्च बहिश्श्वासाभावेपिजीवनसंभवाच्च निर्जीवदेहेनजीवसिद्धिरभूदित्युपहासः ॥ १६० ॥ इदानींक्रमुकादियोगविशेषेणरक्तिमायथेतिप्रागुक्तदृष्टांतस्यवैषम्यमुपपादयति ॥ **रक्तिमेति** ॥ रत्नधात्वादिपार्थिवेषुपदार्थेषुरक्तिमातज्जातीयेतांबूलादौ । तथा

**शवस्यनवरंध्रेषुवायोश्श्वास्तिगतागतं ॥ भस्त्रांतरपियोवातितस्ययात्रातुकुत्रन ॥ १५९ ॥ पश्यनिर्जीवदेहेनजीवसिद्धिरभूदहो ॥ १६० ॥ रक्तिमारत्नधात्वादिपार्थिवेषुस्वभावतः ॥ वर्ततेसतुयोगेनतज्जातीयेपिदृश्यतां ॥ १६१ ॥ ज्ञानंतुपंचभूतात्मजडवर्गेनकुत्रचित् ॥ अतोजडस्वभावोनतद्योगेपिजडेकथं ॥ १६२ ॥ जपाकुसुमयोगेपिरूपवत्येवरक्तिमा ॥ नीरूपवायौकिंरक्तशतयोगेपिरक्तिमा ॥ १६३ ॥**

चजडेक्वचित्स्वभावभूतमन्यत्रयोगेनापिजायतांनाम । जडेक्वाप्यदृश्यमानं अतएवतदस्वभावभूतंचैतन्यंयोगशतेनापिनजायतइतिभावः ॥ १६१ ॥ तदेवस्पष्टयति ॥ **ज्ञानमिति** ॥ पंचभूतात्मजडवर्गे पंचभूतरूपजडवर्गे । नकुत्रचिन्नक्वापीत्यतोजडस्वभावोनज्ञानं । तज्ज्ञानं योगेपि जडानांपरस्परंयोगेपिजडेकथंस्यादित्यर्थः ॥ १६२ ॥ ननुजपाकुसुमसंबंधात्स्फटिकेरक्तिमादृश्यते तद्वज्जडेपिपूर्वोक्तयोगाद्दृश्यतामित्यतआह ॥ **जपेति** ॥ रूपवत्येवस्फटिकादौरक्तिमादृश्यते । नीरूपवायौरक्तद्रव्यशतयोगेपि

रक्तिमादृश्यतेकिं नदृश्यतएव । ततश्चतत्तत्संबंधयोग्यएवतत्तज्ज्ञानंनायोग्यइतिहेतोःज्ञानयोग्यएवपदार्थेज्ञानंस्यात् । नत्वयोग्येजडशरीरेज्ञानमितिभावः ॥ १६३ ॥ तत्राभाणकसिद्धंदृष्टांतमाह ॥ नांधानामिति ॥ तथाचजडानांशतयोगेनापिकंचन चेतनंविनाकथंज्ञानंस्यादितिभावः ॥ १६४ ॥ इदानींचेतनसंयोगेसतिजडस्यापिचेष्टादिकंस्यादित्येतत्तैनैवदृष्टांतेनोपपादयति ॥ चक्षुष्मतेति ॥ तस्याप्यंधस्यापि । दार्ष्टांतिकंयोजयति ॥एवमिति॥ ज्ञानवता स्वाभाविकज्ञानवतादेहान्यजीवेन ॥ १६५ ॥

**नांधानांशतमप्यंधपश्यतीतिनकिंश्रुतं ॥ १६४ ॥ चक्षुष्मतातुसंयोगेतस्यापिस्याद्ग**
**तागतं ॥ एवंज्ञानवतायोगेदेहेयात्रानचेन्नच ॥ १६५ ॥ सचस्वभावतोज्ञानीस्यान्न**
**कृत्रिमबोधवान् ॥ किंचित्रलिखितंनेत्रंकंचिदर्थंप्रपश्यति ॥ १६६ ॥ अतोजडस्यजीव**
**त्वंजडोवक्तिनपंडितः ॥ जीवस्तज्जडदेहान्योमान्यो यंदेहिनंविदुः ॥ १६७ ॥**

तदेवोपपादयति ॥ **सचेति** ॥ सचज्ञानवान्कृत्रिमज्ञानवान्योगविशेषकृतज्ञानवान्नेत्यर्थः । तत्रार्थांतरन्यासः ॥ **किमिति** ॥ चित्रलिखितमित्यनेनकृत्रिमत्वंसूचयति ॥ १६६ ॥ तस्माज्जडशरीरस्यजीवत्वंवदन्नपंडितइत्याह ॥ **अतइति** ॥ जडस्यजीवत्वंयोवक्ति सजडोऽविवेकीतिसंबंधः । उक्तमर्थमुपसंहरति ॥ **जीवइति** ॥ तत्तस्मात्जडदेहान्योमान्यइतिसंबंधः । तत्रसार्वजनीनंव्यवहारंप्रमाणयति ॥ **यंदेहिनमिति** ॥ यंजीवं देहिनंदेहिशब्दवाच्यंविदुःसर्वेपिविदुः । देहीतिशब्दःदेहोस्यास्तीति



व्युत्पत्त्यापांचभौतिकदेहस्वामिनमेवतंजीवमाह । देहिपदवाच्यत्वादेवदेहादन्योजीवःसिद्ध्यतीतिभावः ॥ १६७ ॥ युक्त्यंतरेण जीवस्यदेहादन्यत्वंनित्यत्वंचसाधयति ॥ **जातेति** ॥ अंबास्तनपानेष्टहेतुता मातुस्स्तनपानस्येष्टसाधनतेत्यर्थः । प्राग्भवेषुअनुभूतंयदेतज्जातीयंइदानींतनांबास्तनपानजातीयंअंबास्तनपानांतरंप्राग्भवीयंतस्यनिदर्शनात् दृष्टांतादित्यर्थः । तथाचप्रयोगः । एतदंबास्तनपानंइष्टसाधनंअंबास्तनपानत्वात्प्राग्भवीयांबास्तनपानवदिति । अन्यथास्तनपानेप्रवृत्तिरेवनस्यात् । नियमेनसर्वेषांइष्टसाधनताज्ञानस्यप्रवर्तकत्वात् । भवतुस्तनपानस्येष्टसाधनताज्ञानंस्तनपानेप्रवर्तकं ततःकिंप्रकृतइत्यतआह॥ **साचेति**॥

**जातमात्रशिशोरंबास्तनपानेष्टहेतुता ॥ प्राग्भवेष्वनुभूतैतज्जातीयस्यनि**
**दर्शनात् ॥ अनुमेया साचदेहजीवैक्येशक्यतेकथं॥ १६८ ॥ अन्यस्यैवानु**
**भूतिस्स्यात्ततोन्यस्यानुमाभवेत् ॥ नित्यदेहान्यजीवस्यपक्षेतुक्षेममेतिसा ॥ १६९ ॥**

सास्तनपानस्येष्टसाधनतानुमा ॥ १६८ ॥ देहजीवैक्येकथंशक्यतइत्येतदुपपादयति ॥ **अन्यस्यैवेति** ॥ देहानांचतत्तज्जन्मसुनाशात् स्तनपानस्येष्टसाधनतानुभूतिरन्यस्यप्राग्भवीयस्यस्यात् । एतज्जन्मनिस्तनपानस्येष्टसाधनतानुमाचततोन्यस्य यस्यदृष्टांतीभूतप्राग्भवीयेष्टसाधनतानुभवःततोन्यस्यपुरुषस्येतिस्यात् । नचतद्युक्तं । एकस्यानुमाअपरस्यदृष्टांतानुभवइत्यस्यक्वाप्यदर्शनादितिभावः । देहातिरिक्तजीवपक्षेतुनायंदोषइत्याह ॥ **नित्येति** ॥ नित्यश्चासौदेहान्यजीवश्चेतिविग्रहः । साअनुमाक्षेमम

ति । अयंभावः । जीवस्यदेहमात्रत्वपक्षेउक्तरीत्यादृष्टांताभावेनस्तनपानेष्टसाधनत्वानुमानासंभवः । देहान्यनित्यजीवपक्षेतुय
स्यैवप्राग्जन्मनिस्तनपानेष्टसाधनतानुभवः तस्यैवजन्मांतरेपिजातत्वात्पूर्वजन्मनिस्वेनैवानुभूतस्तनपानदृष्टांतेनइदानींतनस्तनपाने
ष्टसाधनतानुमासुशका । दृष्टांतसौलभ्यादिति । एवंचपूर्वजन्मनिसतएवएतज्जन्मनिसत्त्वान्नष्टात्प्राग्देहादुत्पन्नादस्माद्देहाच्चान्य
तापिसिद्धा । अतीतानागतानंतजन्मस्वप्येवमेकस्यजीवस्यापेक्षितत्वात्नित्यताचसिद्धा । जीवनहेतुभूतस्यास्यानुमानस्यप्रामा
ण्यंचसिद्धमिति ॥ १६९ ॥ उक्तमर्थमुपसंहरति ॥ अतइति ॥ तदंबास्तनपानंशिशोरेवपुष्टयेन । किंतुजीवस्ययादेहान्यता । उ

अतोंबास्तनपानंतन्नशिशोरेवपुष्टये ॥ जीवदेहान्यतायुक्तिमान्यतापुष्टयेप्यभूत् ॥ १७० ॥
भुक्तेःप्राग्भोक्ष्यमाणान्नव्यक्ताविष्टस्यहेतुता ॥ अनुमेयानुभूतान्नजातीयत्वेनकेवलं ॥ १७१ ॥
अतोनुमानमानत्वमनंगीकुर्वतस्तव ॥ नित्योपवासान्मृत्युस्स्यादित्युत्पश्यतियौक्तिकः॥ १७२ ॥

पलक्षणंचैतत् । जीवनित्यताचेत्यपिग्राह्यं । यायुक्तिमान्यता युक्तेरनुमानस्यमान्यताप्रमाणत्वेनमान्यता तयोःपुष्ट्यैपोषणायाप्य
भूदितिसंबंधः ॥ १७० ॥ इतोप्यनुमानस्यप्रामाण्यमंगीकार्यमित्याह ॥ भुक्तेरिति ॥ भुक्तेःभोजनात् । भोक्ष्यमाणान्नव्यक्तौ
पात्रस्थान्नव्यक्तौ । पूर्वमिष्टसाधनत्वेनानुभूतंयदन्नंतज्जातीयत्वेनेत्यर्थः । तथाचप्रयोगः । पात्रस्थान्नमिष्टसाधनमन्नत्वात्पूर्वदिन
भुक्तान्नवदिति ॥ १७१ ॥ अतइति ॥ यतस्त्वन्मतेऽनुमानममानमतइत्यर्थः । अनुमानस्यप्रामाण्यानंगीकारेभोक्ष्यमाणान्ना

दीनामिष्टसाधनताज्ञानोपायाभावात्तज्ज्ञानाभावेचभोजनादौप्रवृत्त्यसंभवात् नित्योपवासात्मृत्युस्स्यादितियौक्तिकोजनउत्पश्य तीतिसंबंधः । प्रागन्नपूरणयोग्यहृदयगुहाज्ञानायानुमानप्रामाण्यमावश्यकमित्युक्तं । इदानीमन्नस्यैवेष्टसाधनताज्ञानायेतिविवेकः ॥ १७२ ॥ अतोयोगविशेषेणेत्यादिनोक्तप्रमेयमुपसंहरति ॥ जडेति ॥ जीवे जडदेहात्मता जडदेहरूपता तथाजडाकारेण चाकृतिराकारः । आकारवत्तेतियावत् । यत्यस्मात्कारणात्छेदाद्यैः स्वशरीरस्यैवजीवत्वेनशरीरस्ययच्छेदादिकंतज्जीवस्येत्यापतति । अतस्स्ववधप्रदेत्यर्थः । ततत्स्मात्कारणात् । तांजडदेहात्मतां । यज्जडदेहात्मत्वादिकंसदामनःखेदायभवति । अतोनम

जडदेहात्मताजीवेजडाकारेणचाकृतिः ॥ यच्छेद्भेदवेधाग्निदाहाद्यैस्स्ववधप्रदा ॥ तद्बु
धास्तांनमन्यंतेमनःखेदाययत्सदा ॥ १७३ ॥ सुखज्योतिस्स्वरूपात्मचितांसाकारतांस्तुमः ॥
यामौक्तनानाभोगानांभोक्तृत्वायश्रुतौश्रुता ॥ सदाद्रष्टृत्ववक्तृत्वसौंदर्यादिगुणायच ॥ १७४ ॥

न्यंतइतिपूर्वेणसंबंधः ॥ १७३ ॥ ननुजडाकाराभावेकिंनिराकाराएवजीवानेत्याह ॥ सुखेति ॥ सुखज्योतिस्स्वरूपाःयाआत्मचितःजीवस्वरूपभूतचितःतासांसाकारतांकरचरणाद्याकारवत्तां सुखज्योतिस्स्वरूपजीवचैतन्यात्मकहस्तपादादिमत्तामित्यर्थः । यासुखज्योतिस्स्वरूपचैतन्यात्मककरचरणाद्याकारता । श्रुतौ परंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यतेसतत्रपर्येतिजक्षन्क्रीडन्रममाणइत्यादिश्रुतौ सदासर्वकालेषु मौक्तनानाभोगानां मुक्तौविद्यमानांगनालिंगनादिनानाभोगानांभोक्तृत्वाय सदाद्रष्टृत्ववक्तृ

त्वसौंदर्यादिगुणायच श्रुता प्रतिपादिता । ज्ञानादेर्हस्तपादाद्याकारत्वमनानुभविकमित्यतोज्योतिरित्युक्तं । परंज्योतिरितिश्रुतेः विष्णोस्तत्प्रतिबिंबभूतजीवानांचज्योतीरूपत्वस्यापिसिद्धेर्ज्योतिषस्साकारतातुतैजसशरीरेसर्वानुभवसिद्धा । तदेवज्योतिर्ज्ञानरूप मानंदरूपंचेतिज्ञानानंदयोरपिसाकारत्वेकानुपपत्तिरितिभावः । सार्वकालीनभोगायसार्वकालीनसौंदर्यादिगुणायचसार्वकालीनदे हस्याप्यावश्यकत्वाद्बाह्यदेहस्यतादृशस्याभावात्स्वरूपभूतदेहंश्रुतिर्वक्तिनपुनराग्रहादेवेत्यभिसंधिः । तांप्रामाणिकत्वाद्यौक्तिक त्वाच्चस्तुमइतिपूर्वेणसंबंधः । चार्वाकांगीकृतजडदेहात्मवादोऽप्रामाणिकोऽनिष्टप्रदश्च । अतश्श्रुतेश्श्रौतजनानांचनासौसंमतः ।

प्रमाणसत्त्वचिंतांतुश्रुतिरेवनिकृंतति ॥ युक्तिस्तुनित्यचैतन्याकारंसत्कुरुतेतरां ॥ १७५ ॥
अणूनामणुराकारोयथानित्योस्त्यनादितः ॥ ज्योतिर्मयास्तथाजीवास्साकारास्संतुसंततं ॥१७६॥

ज्ञानानंदात्मकचिद्रूपदेहात्मवादस्तुप्रामाणिकोमोक्षसुखानुभवोपयोगित्वेनेष्टहेतुश्चेति श्रुतेःश्रौतजनानांचसंमतइतिभावः । अतश्चार्वाकदेहात्मतावादात्वैदिकदेहात्मतावादस्यचमहान्भेदइतिभावः ॥ १७४ ॥ इदानींचार्वाकमतप्रस्तावप्रसंजितस्वसाकार मतमनंगीकुर्वाणंनिराकारवादिनंप्रत्याह ॥ प्रमाणेति ॥ उक्तवक्ष्यमाणश्रुतिसिद्धत्वादितिभावः । युक्तिसिद्धत्वाचांगीकार्यासा साकारतेत्याह ॥ युक्तिस्त्विति ॥ १७५ ॥ तदुपपादयति ॥ अणूनामिति ॥ यथाअणूनांपरमाणूनांअणुस्सूक्ष्मःनित्यश्चाका रःपारिमांडल्याख्यःपरितोमंडलाकारःअनादितोस्ति तथाजीवानित्यैनैवाकारेणसाकारास्संत्वितिभावः ॥१७६॥ तदेवविशदयति ॥ २७ ॥

॥ परितइति ॥ मंडलाकारात्वर्तुलाकारात् ॥ १७७ ॥ ततोपित्रसरेणुभ्योपि । तेपिरेणवःपरमाणुरूपारेणवइत्यर्थः ॥ १७८ ॥ ननुहस्तपादादिरेवाकारः । नवर्तुलत्वादिरित्यतआह ॥ हस्तादिरिति ॥ क्वचिज्जीवेषु क्वचित्परमाणवादौ ईदृशी पूर्वोक्ता । हस्त पादादिव्यतिरिक्ताकारंसर्वानुभवसिद्धंकरोति ॥ पृथ्विति ॥ संस्थानविशेषोह्याकारस्सचचेतनेहस्तपादादिरूपः अचेतनेवर्तुल त्वदीर्घत्वह्रस्वत्वत्रिकोणत्वचतुष्कोणत्वादिरूपः । सचनित्येषुनित्यः अनित्येष्वनित्यः । सर्वत्राप्याकारपदप्रयोगदर्शनादाकारताप्यं

परितोमंडलाकारात्पारिमांडिल्यसंज्ञितां ॥ कथयंतिमहात्मानःपरमाणुषुचाकृतिं
॥ १७७ ॥ यथाजालमरीचिस्थावर्तुलास्त्रसरेणवः ॥ ततोप्यत्यंतसौक्ष्म्येणवर्तुलास्तेपि
रेणवः ॥ १७८ ॥ हस्तादिःक्वचिदाकारःक्वचिदाकृतिरीदृशी ॥ पृथुबुध्नोदराकारोघटस्ये
तिनकिंश्रुतं ॥ १७९ ॥ अतोनित्यचिदाकारोयुक्तिसिद्धोनवार्यते ॥ १८० ॥ सर्वावकाशदा
त्रीचव्यासाचविरलाऽऽकृतिः ॥ नभ(सस्स्यान्न)स्यस्तिनचेदीशव्याप्तेःकिंस्यान्निदर्शनं ॥ १८१ ॥

गीकार्यैवेतिभावः ॥ १७९ ॥ अणूनामित्यादिनोक्तंप्रमेयमुपसंहरति ॥ अतइति ॥ नित्यचिदाकारश्चेतनानामितिशेषः ॥ १८० ॥ नभोवन्निराकाराजीवाःकिंनस्युरित्यतःतदपिसाकारमेवेत्याह ॥ सर्वेति ॥ सर्वेषामवकाशदात्री । विरला निबिडताविधुरा । नभसईदृशाकारतानंगीकारेबाधकमाह ॥ नचेदिति ॥ ईशव्याप्तेरीशस्यपरमेश्वरस्यव्याप्तेः । तथाचव्याप्तविरलाकारआकाश

स्याप्यस्तीतिभावः ॥ १८१ ॥ आकारांतरमप्यनुभावयति ॥ दूरस्थैरिति ॥ नीलिमानीलोवर्णः । अस्याकाशस्य । आकाशो नीलिमोदेतीतिश्रुतेःनभ्रममात्रमेतत् । वायोरपिसाकारत्वंसाधयति ॥ वायोरिति ॥ अन्यथावायुस्पर्शस्यनिराधारत्वंस्यादिति भावः ॥१८२॥ इतरेषामाकाशवायुव्यतिरिक्तानांतेजोबन्नात्मकभूतानां । एवमनुभवसिद्धाकारापलापेतवपशुत्वंस्यादितिध्वनय न्सर्वस्यैवंसाकारत्वेकिंतर्हिनिराकारमित्यतःतदपितस्मिन्नेवदर्शयति ॥ पुंपशोरिति ॥ तत्तस्मात्पशोश्शृंगावश्यंभावात्नरपशोस्त

दूरस्थैर्नीलिमाचास्यदृश्यतेसर्वलौकिकैः ॥ वायोश्चशीतस्पर्शस्याऽऽधारा
कारोऽनुमीयते ॥ १८२ ॥ इतरेषांतुभूतानामाकारस्सर्वसाक्षिगः ॥ पुं
पशोस्तवयच्छृंगंनिराकारंतदेवतत् ॥ १८३ ॥ येजीवान्वैदिकंमन्याज्यो
तीरूपान्वदंतिते ॥ किंनोरीचक्रुरेतेषांसूक्ष्मदीपसमाकृतिं ॥ १८४ ॥

वयच्छृंगंतस्यचाकारादर्शनात्तदेवनिराकारमित्यर्थः । परमाणुमारभ्यपंचमहाभूतपर्यंतस्यसर्वस्यचजडप्रपंचस्यसर्वेषांचेतनानांचो क्तविधयासाकारत्वात् सहस्रशीर्षाद्याकारवतिभगवतिनिराकारत्वस्यचसुतरामयोगात् सार्वजनीनमिदंप्रमेयमनंगीकुर्वतोनृपशो स्तवशृंगंवाशशशृंगंवानिराकारंस्यात् । भावाभावात्मकजगतितुनाकिंचिन्निराकारमितिभावः ॥ १८३ ॥ नकेवलंजीवानांज्योति र्मयत्वंमयैवोच्यतेकिंतुनिराकारत्वंवदन्परोप्यंगीकुरुते । अतस्तेषांसाकारत्वमपियौक्तमेवेत्याह ॥ यइति ॥ येवैदिकंमन्याःजीवा

न्ज्योतीरूपान्वदंति । तेमायिनः । एतेषांजीवानां ॥१८४॥ वयंतुज्योतिषः ज्योतीरूपस्य । तस्यजीवस्य । ज्योतीरूपमित्येतत्करा दावपिग्राह्यं । अत्रएतादृशाकारे ॥ १८५ ॥ किमद्भुतमित्येतदुपपादयति ॥ त्वंत्विति ॥ मायावादीत्वं जडाकारं जडवर्तुलते जोमयदीपसमाकारं । जडाकारमित्यत्राजडताश्रयइतिवक्ष्यमाणमावर्तनीयं । जीवइतिशेषः । तत्ववादिनोवयंतु अजडताश्रये जीवे जडाद्विलक्षणाकारंब्रूमइतिसंबंधः । अत्र अजडस्यजडविलक्षणाकारत्वे युक्तिर्नकिं युक्तिरस्त्येवेत्यर्थः । जडाजडयोर्वैलक्ष

वयंतुज्योतिषस्तस्यज्योतीरूपमुखंकरौ ॥ चरणावुदरादींश्चवदामोत्रकिमद्भुतं ॥ १८५ ॥ त्वं
तुब्रूषेजडाकारंवयंत्वजडताश्रये ॥ जडाद्विलक्षणाकारंब्रूमोयुक्तिःकिमत्रन ॥१८६ ॥ पांच
भौतिकदेहेस्मिंस्तेजसोप्यस्तिरूपिता ॥ साशुद्धतेजोमात्रस्याप्यस्तिचेत्काक्षतिस्तव ॥१८७॥
आप्यतैजसवायव्यमात्रदेहाश्चकिंचन ॥ अतःपिंडसमाकारंपिंडभोक्तुर्नकल्पय ॥ १८८ ॥

ण्यस्यसर्वजनसंप्रतिपन्नत्वादितिभावः ॥ १८६ ॥ जडस्यापितेजसश्चेतनसंबंधिदेहांतर्निविष्टस्यसाकारतादृष्टा किमुचिद्रूपतेजस इतिभावेनाह ॥ पांचभौतिकेति ॥ अस्मिन्नस्मदादिसंबंधिनि तेजसोरूपिता करचरणाद्याकारता अधिकंप्रविष्टंनतुतद्धानिरि तिन्यायेन । सारूपिताकेवलतेजोमात्रस्याप्यस्तिचेत्काक्षतिस्तवेतिसंबंधः । तथाकेवलतेजोमयविग्रहवतांचेतनानांभवत्वितिभावः ॥ १८७ ॥ किंचवरुणलोकेआप्यदेहाः अग्निलोकेतैजसदेहाः वायुलोकेवायव्यदेहाः तेजीवाःप्रसिद्धानकिं प्रसिद्धाएवेत्यर्थः ।

अतइत्युपसंहारः । पिंडभोक्तुः अन्नपिंडभोक्तुर्जीवस्य करचरणादिशून्यपिंडसमाकारंनकल्पय । किंतुपिंडदातुर्गृहंप्रतिगंतुंतैर्दत्तपिंडंगृहीत्वामुखेप्रक्षेप्तुं अत्तुंचचरणकरमुखाद्याकारंकल्पयेतिभावः ॥ १८८ ॥ भागवतेनयत्रमायेतिवैकुंठेमायामयंदेहंनिषिध्यपुनःप्रवालवैडूर्यमृणालवर्चसामितिस्वरूपभूतदेहस्यैवतेजोमयत्वकथनात्तदनुसारेणप्रकाशमयदेहत्वंप्रसाध्यतस्यैवचसुखज्ञानरूपत्वंच साधयति ॥ **सुखरूपाइति** ॥ तेसर्वेजीवाःयतश्चिद्रूपावयवाः अतःअनादिनित्याःसत्याश्चेतिसंबंधः ॥ १८९ ॥ तदनंगीकारे

**सुखरूपाश्चतेसर्वेज्ञानरूपाश्चसर्वदा ॥ अनादिनित्यास्सत्याश्चचिद्रूपावय**
**वायतः ॥ १८९ ॥ नचेज्ज्योतिर्मयाकारसुभगस्यहरेरिमे ॥ प्रतिरूपाः**
**कथंजीवाभवेयुरितिचिंत्यतां ॥ १९० ॥ पुरुरूपस्यजीवोऽयंरूपंरूपंप्रति**
**प्रति ॥ प्रतिरूपोबभूवेतिश्रुतिर्गर्जतिशाश्वती ॥ १९१ ॥**

बाधकमाह ॥ **नचेदिति** ॥ ज्योतिर्मयाकारसुभगस्येत्युपलक्षणं । ज्ञानानंदादिसकलगुणमयाकारस्येत्यपिद्रष्टव्यं । प्रतिरूपाः प्रतिबिंबाःकथंभवेयुरितिसंबंधः ॥ १९० ॥ ननुजीवानांहरिप्रतिबिंबत्वेसतीदंसर्वंस्यात्तदेवकुतइत्यतोरूपंरूपंप्रतिरूपोबभूवतदस्यरूपंप्रतिचक्षणाय । इंद्रोमायाभिःपुरुरूपईयतेयुक्ताह्यस्यहरयःशतादशेतिश्रुतिंप्रमाणयितुंतामर्थतोनुवदति ॥ **पुरुरूपस्येति** ॥ पुरुरूपस्यहरेःरूपंरूपंप्रत्ययंजीवःप्रतिरूपःप्रतिबिंबोबभूवेतिश्रुतिर्गर्जतीतिसंबंधः । तथाचश्रुतिबलाज्जीवानांहरिप्रतिबिंबतासिद्ध्य ॥ २९ ॥

तीतिभावः ॥ १९१ ॥ अतःकिमित्यतआह ॥ **तदिति** ॥ श्रुतिःपूर्वोक्ता स्मृतयस्तत्रतत्रोदाहृताद्रष्टव्याः । तासांश्रुतिस्मृतीनां हर्षायाविरोधायेत्यर्थः । पश्यतां मुक्तावन्योन्यंपश्यतां मनःकर्षाय लावण्यातिशयेनमनसामाकर्षणाय मुक्तौप्राकृतविग्रहाभावात्मौक्तभोगानांभुक्त्यै जक्षन्क्रीडन्रममाणइत्याद्युक्तभोगानामनुभवायचेयंव्यवस्थितिः जीवचैतन्यस्यैवसाकारत्वादिरूपाव्यवस्थितिः सत्या अबाध्येतिसंबंधः । बाध्यदेहस्यमुक्तावसंभवादितिभावः ॥ १९२ ॥ इतोपिहस्तपादाद्याकारश्चेतनस्यैवस्वाभाविकः।

**तच्छ्रुतिस्मृतिहर्षायमनःकर्षायपश्यतां ॥ भुक्त्यैचमौक्तभोगानांसत्यैवेयं**
**व्यवस्थितिः ॥ १९२ ॥ वृत्तताचतुरश्रत्वाद्याकारस्तदचेतने ॥ चेतने**
**ष्वेवहस्तांघ्रिश्रोत्रनेत्रादिकाकृतिः ॥ १९३ ॥ इत्येवसर्वथावाच्यंनचेल्लिंग**
**कलेवरे ॥ जडांतराद्दृष्टरूपंकुतोजातंविचार्यतां ॥ १९४ ॥**

तत्संबंधादेवलिंगदेहस्थूलदेहादेःनान्यथेत्याह ॥ **वृत्ततेति** ॥ तत्तस्मात्जडेषुवर्तुलत्वाद्याकारस्यैवसर्वैर्दृश्यमानत्वात् । वृत्तता वर्तुलता । चतुरश्रत्वंचतुष्कोणत्वं । आदिपदेनत्रिकोणत्वादिकंगृह्यते । तदादिराकारः । अचेतने जात्येकवचनं । परमाणुघटपटाद्यचेतनेषुचेतनेष्वेवहस्ताद्याकृतिरितिसंबंधः ॥१९३ ॥ तदनंगीकारेबाधकमाह ॥ **नचेदिति** ॥ लिंगकलेवरेलिंगशरीरे जडांतराद्दृष्टरूपं लिंगशरीरान्यजडेष्वदृष्टाकारः लिंगशरीरेकुतोजातमितिविचार्यतामितिसंबंधः ॥ १९४ ॥ प्रकृतिसंबंधात्लिंगशरीरे

करचरणाद्याकारोजातइत्यतआह ॥ प्रकृतीति ॥ तेसर्वेलिंगदेहाः । साचप्रकृतिःसूक्ष्माःपरमसूक्ष्माःयेअणवोरेणवःतद्रूपिणी । तथाचतस्याःप्रकृतेस्तदाकारोलिंगशरीरनिष्ठाकारोनेतिसंबंधः । ननुविकृतिवशात्प्रकृतेरेवतादृशाकारोजातइत्यतआह ॥ विकृताविति ॥ सूक्ष्माणुरूपिण्याःप्रकृतेर्विकृतावपिस्थूलरेणुतापरंभवेत् । नपुमाकारइतिभावः । अस्तिचलिंगशरीरेपुमाकारः । तस्मात्पुरुषरूपानुसृतिरेवगतिरित्याह ॥ पुमाकारइति ॥ १९५ ॥ लिंगशरीरस्यस्वरूपंविशदयति ॥ साकारेति ॥ साकाराः

प्रकृत्यंशाद्दितेसर्वेसाचसूक्ष्माणुरूपिणी ॥ नतस्याश्चतदाकारोविकृतौस्थूलरेणुता ॥ भ
वेत्परं पुमाकारेपुंरूपानुसृतिर्गतिः ॥ १९५ ॥ साकारसर्वजीवांगवेष्टनेनेष्टहेतुतां ॥ गता
स्तेतत्समाकारास्तद्देहत्वंचलेभिरे ॥ १९६ ॥ तल्लिंगदेहताचैषांतत्तद्रूपानुमापनात् ॥ १९७ ॥
अतादृशास्तादृशाश्चबाह्यदेहास्स्युरंहसा ॥ अतोनलिंगतैतेषांसोनादिस्सादयस्त्विमे ॥ १९८ ॥

नरमृगसरीसृपपक्ष्याद्याकारसहितायेसर्वेजीवाःतेषांयानिस्वरूपभूतान्यंगानिकरचरणादीनितद्वेष्टनेनेष्टहेतुत्वं भोगहेतुत्वंगताः तत्समाकाराःजीवस्वरूपभूतशरीरसमाकाराःतेलिंगदेहाः कंचुकवत् यवनस्त्रीसर्वांगकंचुकवद्वा तद्देहत्वंचलेभिरे ॥ १९६ ॥ लिंगशरीरेषुलिंगशब्दार्थनिर्वक्ति ॥ तदिति ॥ एषांलिंगदेहानां तत्तद्रूपानुमापनात् स्वस्वसदृशतत्तच्चेतनरूपानुमापनात्तल्लिंगदेहता तेषांजीवानांलिंगदेहता ॥ १९७ ॥ बाह्यशरीराण्यपिलिंगदेहाःकिंनस्युरित्यतआह ॥ अतादृशाइति ॥ अतादृशाःअतत्सदृ

शाः । तादृशास्तत्सदृशाः । बाह्याः लिंगदेहाद्बाह्याःअंहसा योन्यंतरप्रापकदोषेणस्युरितिसंबंधः । अत श्चेतनस्वरूपदेहाननुमापकत्वादेतेषांबाह्यदेहानां । वैलक्षण्यांतरमप्याह ॥ सइति ॥ सः लिंगदेहसमूहः । इमे परिदृश्यमानाःबाह्यदेहाः ॥ १९८ ॥ बाह्यदेहानांसादित्वमुपपादयन्चेतनदेहसंबंधादेवदेहाकारइत्याह ॥ रेतसइति ॥ तस्यापि रेतसोपि स्वतःस्वभावतः रूपंकरचरणादि । जीवप्रवेशादेवतत्करचरणादिरूपेणपरिणमते । अजीवंचेज्जीवप्रवेशरहितंचेत्तद्रेतः रजः करचरणाद्याकारविधुरःऋतुरूपरेतःकणः । हीत्यनेनप्रसिद्धिमाह । एतेनजीवयोगस्यजडनिष्ठकरचरणाद्याकारहेतुत्वेअन्वयव्यतिरेकौदर्शिताविति द्रष्टव्यं

रेतसोबिंदुमात्रेणबाह्योदेहश्चजायते ॥ नतस्यापिस्वतोरूपमजीवंचेद्रजोहितत् ॥ १९९ ॥
साक्षींद्रियगणैर्योगेबाह्येंद्रियगणोप्यसौ ॥ पृथक्पृथग्ज्ञानदस्स्यान्नोचेन्निर्हेतुकोभवेत् ॥२००॥
अतस्स्वभावतस्सर्वेसाकाराजीवराशयः ॥ तत्कंचुकोपमातत्तल्लिंगमूर्तिश्चतादृशी ॥ २०१ ॥

॥ १९९ ॥ जीवस्वरूपदेहस्य करचरणादिमत्त्वांसाधयित्वा स्वरूपभूतचक्षुरादींद्रियवत्त्वांसाधयति ॥ साक्षीति ॥ साक्षींद्रियाणि स्वरूपभूतचक्षुरादीनि तेषांगणैर्योगे लिंगशरीरेसाक्षाद्योगे बाह्यशरीरेप्रकाशद्वारायोगे। असौ पुराणप्रसिद्धइत्यनेनतैजसाहंकारोत्पन्नत्वंसूचयति । पृथक्पृथक्बाह्यचक्षुषिस्वरूपभूतचक्षुर्योगइत्यादिर्द्रष्टव्यः । ज्ञानदःतत्तज्ज्ञानदः । नोचेत्स्वरूपभूतेंद्रिययोगोनास्तिचेत् जडेंद्रियेषुज्ञानदत्वाख्योधर्मोनिर्हेतुकोभवेत् ॥ २०० ॥ जीवानांसाकारत्वसमर्थनमुपसंहरति ॥ अतइति ॥

युक्ति- तत्कंचुकोपमातेषांस्वरूपभूतदेहानांकंचुकोपमा तत्तल्लिंगमूर्तिः सासालिंगमूर्तिः तादृशीजीवस्वरूपभूतदेहसदृशी ॥ २०१ ॥ बा मल्लिका
॥ ३१ ॥ ह्या मूर्तिरितिशेषः ॥ २०२ ॥ जडांतरे शरीरव्यतिरिक्तजडेघटपटादौअदृष्टरूपं । नचेत्स्वरूपभूतदेहसंबंधोनोचेत् अन्येजडाः गुणसौ०
घटादयःशरीरवत्करचरणादिमंतःस्युरितिसंबंधः ॥ २०३ ॥ अतः यतःशरीरव्यतिरिक्तजडानकारादिमंतःअतइत्यर्थः । स्वभा
वरूपस्य स्वभावदेहस्य । रूपपरंपरा देहपरंपरा । तस्मान्निर्निमित्तत्वायोगात् ॥ २०४ ॥ इतोपिजीवस्यस्वरूपभूतंशरीरमंगीकार्य

क्वचित्तुकर्मणाबाह्याभिन्नाकाराचजायते ॥ २०२ ॥ जडांतरादृष्टरूपंतनूनामेवमागतं ॥ इतिमन्येनचेदन्ये
जडाश्चस्युश्शरीरवत् ॥ २०३ ॥ अतस्स्वभावरूपस्याभावेरूपपरंपरा ॥ निर्निमित्ताभवेत्तस्मात्साकारा
जीवराशयः ॥ २०४ ॥ कंचुकेस्तितनुच्छायानत्वकंचुकवाससि ॥ ततस्स्वाभाविकाभावेनस्युरौपाधिकाअपि
॥ २०५ ॥ स्याद्धिस्फटिकलौहित्यंस्वतोलोहितसन्निधौ ॥ स्वेनरूपेणनिष्पत्तिंमुक्तिमाततहश्श्रुतिः ॥ २०६ ॥

मित्याह ॥ कंचुकइति ॥ यतःकंचुकएवतनुच्छायाशरीरवत्करचरणादिच्छायास्ति । अकंचुकवाससि अकंचुकीभूतपच्छोटि
कादिवाससि तनुच्छाया नतु नैव । ततस्तस्मात्स्वाभाविककरचरणादिमद्देहाभावेतदुपाधिकाःलिंगदेहादयोपिकरचरणादिमंतो
नस्युरितिसंबंधः । तस्मात्स्वाभाविककरचरणादिमन्नित्यदेहोंगीकार्यः । अन्यथाकंचुकेतनुच्छायावत्तदितरवासस्यपितनुच्छा ॥ ३१ ॥
यास्यादितिभावः ॥ २०५ ॥ औपाधिकस्यस्वाभाविकनैयत्यमुपपादयति ॥ स्यादिति ॥ स्फटिकलौहित्यंजपाकुसुमोपाधिकं ।

तच्चस्वतोलोहितस्यजपाकुसुमस्यसन्निधावेवस्यात्नासंनिधावित्यौपाधिकंस्वाभाविकनियतमेवेतिभावः । एवंयुक्त्योपपादितस्वा
भाविकदेहवत्त्वेश्रुतिंचप्रमाणयति ॥ स्वेनरूपेणेति ॥ परंज्योतिरुपसंपद्यस्वेनरूपेणाभिनिष्पद्यतइतिश्रुतिः तत स्वरूपदेहस
द्भावात् स्वेनरूपेणनिष्पत्तिं स्वरूपदेहेनप्राप्तिंमुक्तिमाहेतिसंबंधः ॥ २०६ ॥ पूर्वोक्तांयुक्तिंस्मारयति ॥ युक्तिश्चेति ॥ औपाधि
कैरूपैर्बाह्यदेहैः स्वाभाविकं स्वाभाविकदेहंअसाधयदितिसंबंधः ॥ २०७ ॥ जीवानांनिराकारत्वखंडनमुपसंहरति ॥यस्त्विति॥
वस्तु जीवादिवस्तु । असौवादी । कुतस्तत्वंनवेदेत्यतआह ॥ चित्त्वेति ॥ चेतनाचेतनंखलुतत्वद्वयं । तत्रचेतनतत्वंचित्त्वरूपा

युक्तिश्चौपाधिकैरूपैस्स्वाभाविकमसाधयत् ॥ २०७ ॥ यस्तुवस्तुनिराकारंवक्तितत्वंन
वेत्तिसः ॥ चित्त्वाचित्त्वाश्रयंतत्वमित्थमित्यति(मंगलं)निर्मलं ॥ २०८ ॥ गुरुश्चार्वाकवि
द्यायागुरुर्मेनाकिनांगुरुः ॥ अतस्तत्कृपयाश्रौतमतस्थितिरपीरिता ॥ २०९ ॥

काराश्रयं । अचेतनतत्वमचित्त्वरूपाकाराश्रयमितिनिराकारंक्वास्तीत्यर्थः । इयमप्येकासर्वस्यसाकारत्वेयुक्तिरितिभावः ॥ २०८ ॥
ननुगुरूक्तत्वाच्चार्वाकविद्यानिषेध्येत्यतआह ॥ गुरुरिति ॥ चार्वाकविद्यायाः गुरुर्बृहस्पतिर्गुरुर्गुरुरित्यावृत्त्यायोज्यं । मेमम
नाकिनां बृहस्पत्यादिदेवानांगुरुरुपदेष्टामुख्यवायुर्गुरुरितिसंबंधः । तत्कृपयामुख्यवायुकृपया । तथाचास्मदाचार्याणांत्वदाचा
र्योदप्युत्तमत्वात्त्वदाचार्येणोक्तमपिनिषेध्यमितिभावः । अथवा चार्वाकविद्यायागुरुरुपदेष्टा नाकिनांदेवानांगुरुर्बृहस्पतिः मे

ममापिगुरुः हृदिस्थित्वाज्ञानोपदेष्टा अतस्तत्कृपयाश्रौतमतस्थितिरपिईरितेतिभावः ॥ २०९ ॥ ननुचार्वाकमतनिराकरणावस रेतदुक्तदेहात्मकजडजीवस्य या जडाकारता सा निराकार्या । नैवमस्मन्मतं किंतुजडदेहभिन्नचेतनजीवस्य चिदात्मक करचरणादिमत्त्वैवेतिवैलक्षण्यमात्रंप्रदर्शनीयं । तदसहमानस्यमायावादिनोमतनिराकरणंकिमर्थमत्रविस्तृतमित्यतआह ॥ क्षीर स्येति ॥ उत्सेचनं वह्निवशादूर्ध्वगमनं । आज्ञयाशपथादिरूपया । तथा चार्वाकनिराकरणप्रसंगात्स्मृततत्वनिरूपणनिरोधःक र्तुमशक्यइतिभावः । अस्मिन्नर्थेऽर्थांतरंन्यस्यति ॥ वस्त्रेणापीति ॥ २१० ॥ अधुनाचार्वाकशास्त्रस्यप्रयोजनंनिराकरोति

क्षीरस्योत्सेचनंकोवानिरुणद्ध्याज्ञयाजनः ॥ वस्त्रेणापिग्रहःप्रोक्तोराजमंदिरसर्पिषः ॥ २१० ॥
निरंकुशःकामभोगःफलंकिलभवन्मते ॥ तच्चतक्षकमौलिस्थरत्नाहरणयत्नवत् ॥ २११ ॥ ध
र्मांकुशस्यछेदेपिधनाभावांकुशस्यन ॥ तस्यनिर्मूलनायास्तिधर्मःकोपिनतेमते ॥ २१२ ॥

॥ निरंकुशइति ॥ निरंकुशःनिरोधरहितः कार्याकार्यविभागरहितइत्यर्थः । कामभोगः स्त्रीचंदनादिविषयभोगः । तच्चफलं तक्षकमौलिस्थरत्नाहरणयत्नवत् असाध्यमेवेतिभावः ॥ २११ ॥ इदंचफलंदरिद्राणां शिष्याणांवा धनिनांवेतिविकल्पंमनसिनि धायाद्येतदुपपादयति ॥ धर्मेति ॥ धर्मांकुशस्य धर्माख्यांकुशस्य । यथागजमंकुशोनिरुणद्धिएवमगम्यागमनादौप्रवर्तमानंप्रति अयमधर्मइतिनिरोधकधर्मवादस्येतियावत् । धनाभावांकुशस्य च्छेदकंनेतिसंबंधः । सतिधनेनिरकुशकामोपभोगस्स्यात् । तदर्थं

धनाभावएवकथंपरिहरणीयइतिभावः । ननुधर्माभावबोधनेनास्माकमयमुपकारीतिबुद्ध्याधनंलोकादद्युरित्यतआह ॥ तस्येति ॥ तस्य गुरुनिष्ठधनाभावांकुशस्य । भवेदेतत् यद्युपकर्तुरनुपकारेऽधर्मउपकारेधर्मइतिलोकानांबुद्धिस्स्यात् । साचत्वयैवत्याजिता। अतोगुरोर्धनाभावांकुशच्छेदे नायमुपायः । किंचसतिधनेशिष्याधनंदद्युः । तेषामेवधनाभावांकुशस्यछेदायकउपायः । नताव त्प्राचीनंपुण्यं नाप्याधुनिकमुत्कटंपुण्यं । उभयोरपिधर्माभाववादिनात्वयैवत्याजितत्वादित्याह ॥ तस्येति ॥ शिष्यनिष्ठधनाभा वस्येत्यर्थः ॥ २१२ ॥ तस्माद्गुरोःशिष्यस्यचधनाभावांकुशच्छेदायायमेवोपायइत्याह ॥ धनिनामिति ॥ धनार्थंधनिनांपरि

धनिनांपरिचर्यावाचौर्यंवाकार्यतेत्वया ॥ २१३॥ तच्चबंधादिनिर्बंधैर्मृतिभीतिगतागतैः ॥ ते
षांदुःखार्णवेमङ्क्तुमभूद्रंतुंनकर्हिचित् ॥ २१४॥ अतस्तेनैवमज्जेरन्भवच्छास्त्रमहोदधौ ॥२१५॥
धनिनस्तुमदेनांधाःप्रवर्ततेनतेमते ॥ तेषांचनफलायालंतवशास्त्रप्रचोदना ॥ २१६ ॥

चर्यावाकार्यते त्वयाचक्रियते ॥ २१३ ॥ ततः किमित्यतआह ॥ तच्चेति ॥ तच्चधनिपरिचर्यादिकं बंधादिनिर्बंधैः निगलबंधा दिनिर्बंधैः अतिचौर्येअत्यपराधेच मृत्या अनिष्टंभविष्यतीतिभीत्या अतिदूरगतागतैश्च तेषांलोकानां तवचदुःखार्णवेमङ्क्तुंमज्जनं कर्तुमभूत्स्यात् । कर्हिचित्कदापि रंतुंनाभूदितिसंबंधः ॥ २१४ ॥ अतस्त्वदुक्तनिरंकुशकामोपभोगाख्यफलासंभवात्तेलोकाःभ वच्छास्त्रमहोदधौनैवमज्जेरन् । नश्लाघ्यंकुर्युरितिभावः ॥ २१५ ॥ ननुधनिनांभोगायमद्बोधनंस्यादित्यतआह ॥ धनिनइति ॥

युक्ति- मदेनधनमदेनांधाःते तवमते शास्त्रे न प्रवर्तंते । प्रवर्ततांवायथाकथंचित् । तेषांप्रवर्तमानानांधनिनांचतवशास्त्रस्यप्रचोदना मल्लिका
॥ ३३ ॥ फलायाभिमतफलाय नालमितिसंबंधः ॥ २१६ ॥ तदुपपादयति ॥ बहुभुक्ताविति ॥ त्वयाधर्माभावेबो धिते दशपंचवारं गुणसौ०
योग्यायोग्यभक्ष्यभोज्यादीनांभोजनंकुर्युः । तथाचबहुभुक्त्याऽजीर्तिःस्यात् । तथाबहुपाने महोदराख्यव्याधिस्स्यात् । तथाब
हुस्त्रीभोगतो रोगा श्शिश्नोपद्रवाद्याः । यद्यस्मात्पदेपदेक्षणेक्षणेदृश्यंते अतस्त्वच्छास्त्रप्रचोदना फलाय नालमितिपूर्वेणान्वयः

बहुभुक्तावजीर्तिस्स्याद्बहुपानेमहोदरं ॥ बहुस्त्रीभोगतोरोगायद्दृश्यंतेपदेपदे ॥ २१७ ॥ किंनभारायमह
तेबहुदारपरिग्रहः ॥ परस्परविरोधाद्यैःपत्युर्मृत्युप्रदाहिते ॥ २१८ ॥ परस्त्रीभोगतःकिंनशिरश्छेदादि
कंभयं ॥ २१९ ॥ दुःखोज्झितंसुखंप्रार्थ्यंनतुदुःखान्वितंसुखं ॥ दुःखोदर्कसुखेत्यल्पेकोनून्मत्तःप्रवर्तते
॥ २२० ॥ तस्मान्महानर्थसार्थसंकुलास्सुखविप्लुषः ॥ नप्रेक्षावत्प्रवृत्त्यैस्युर्निवृत्त्यैस्युःपरंविदां ॥ २२१ ॥

॥ २१७ ॥ बहुस्त्रीसंग्रहलभ्यंदुःखांतरंचाह ॥ किंनेति ॥ महतेभाराय पोषणादिनाधनबलहानिलक्षणमहाभारायेत्यर्थः । तेब
हुदाराः ॥ २१८ ॥ पापाभावबोधनेपरस्त्रीभोगोप्यवर्जनीयएव । ततश्शिरश्छेदादिकंभयंनकिमितिसंबंधः ॥ २१९ ॥ ननुदुःख
संकुलमपिकिंचिद्वासुखंमच्छास्त्राद्भवतीत्यतआह ॥ दुःखेति ॥ दुःखोज्झितंदुःखरहितं । दुःखोदर्कसुखे ( दुःखोत्तरफलके ) ॥ ३३ ॥
दुःखबहुलसुखे ॥ २२० ॥ महानर्थाःपूर्वोक्ताः तेषांसार्थाःसमूहाःतैस्संकुलाःसुखविप्लुषःप्रेक्षावत्प्रवृत्त्यैनस्युः । तदुद्दिश्यप्रेक्षावंतो

नप्रवर्तंतइतियावत् । विदांज्ञानिनांपरंनिवृत्त्यैस्युः ॥ २२१ ॥ ननुप्रेक्षावतामनुपयोगित्वेप्यज्ञजनोपयोगित्वात्मच्छास्त्रंग्राह्यमि
त्यतआह ॥ अज्ञाइति ॥ पूर्वमेव शास्त्रप्रवृत्तेरितिशेषः । तेअज्ञाः । नापिधर्मोद्भयंतेषामित्यत्रहेतू रागेति ॥ रागोद्रेका
ख्यःदुष्प्रेक्ष्यश्चरूक्षश्चासौहर्यक्षस्सिंहस्तद्रक्षिणामित्यनेन रागोद्रेकादेवधर्मांकुशाद्भयंनास्तीतिसूचितं ॥ २२२ ॥ प्रयोजनाभावसा
धनमुपसंहरति ॥ अतइति ॥ अतःपूर्वोक्तप्रकारात् क्लीबशास्त्रवत्नपुंसकशास्त्रवत् । यथातस्मात्परघातादिप्रयोजनंनास्तिप्रत्यु

अज्ञास्तुरागतोभोगेप्रवृत्ताःपूर्वमेवहि ॥ नतेशास्त्रमपेक्षंतेनापिधर्मांकुशा
द्भयं ॥ रागोद्रेकाख्यदुष्प्रेक्षरूक्षहर्यक्षरक्षिणां ॥ २२२ ॥ अतोनिष्फल
मेवाभूच्छास्त्रंतेक्लीबशास्त्रवत् ॥ २२३ ॥ कस्तेऽधिकारीस्वस्थात्मामत्तस्या
प्यस्तिमृत्युभीः ॥ विषयस्यविचारश्चयुक्तितस्याज्ञशक्तितः ॥ २२४ ॥

तस्वस्यैवकरकंपादिनाशास्त्रस्यपतनेअनर्थश्चास्ति तथात्वच्छास्त्रान्नकिंचित्फलं अनर्थस्तुमहानितिभावः ॥ २२३ ॥ अतएवनाधि
कार्यपीत्याह ॥ कस्तइति ॥ स्वस्थात्मास्वस्थचित्तः प्रेक्षावानितियावत् । तेशास्त्रेकोधिकारी पूर्वोक्तानर्थशंकयानकोपिप्रेक्षावा
न्प्रवर्ततइतिभावः । ननुमत्तएवास्मच्छास्त्रेअधिकारीत्यतआह ॥ मत्तस्येति ॥ मत्तोपिस्वशिरश्छेदादिनाबिभेतीतिभावः ।
इदानींविषयंनिराकरोति ॥ विषयस्येति ॥ प्रत्यक्षसिद्धेर्थेशास्त्रस्यवैयर्थ्यात्युक्त्याविचारयितुंयोग्योर्थोविषयोभवति । युक्ति

युक्ति- मनंगीकुर्वतःकोवाशास्त्रस्यविषयोभवेदितिभावः ॥ २२४ ॥ ननुअक्षादेवशास्त्रस्यविषयसिद्धिरित्यतआह ॥ अक्षमिति ॥ तव मल्लिका
लीलायै कामिन्यादिभोगार्थं चतुरंगादिक्रीडायैवा अक्षं प्रत्यक्षं गजदंतरचितलीलासाधनखंडद्वयंवा उपयुक्तंस्यात् । नपक्षांतर गुणसौ०
॥ ३४ ॥ शिक्षणेअयमेवविषयोनान्यइतिपक्षांतरनिराकरणेअक्षमुपयुक्तंनस्यादितिपूर्वेणसंबंधः । तत् पक्षांतरशिक्षणं । युक्तेश्चप्रामाण्यंनां
गीकृतमितिभावः ॥ २२५ ॥ ननुप्रत्यक्षानुकूलोविषयः तद्विरुद्धस्तुनविषयइत्याशंक्यपरिहरति ॥ अक्षानुकूलइति ॥२२६॥

अक्षंस्यात्तवलीलायैनपक्षांतरशिक्षणे ॥ तच्चयुक्त्याख्यशास्त्रेणनान्येनेतिमतिर्मम ॥२२५॥ अक्षानुकूल
स्स्यादर्थस्तद्विरुद्धस्तुनेत्यपि ॥२२६॥ तथासर्वत्रदृष्टत्वादितियुक्त्यैवसिद्ध्यति ॥ युक्तेरमानतायस्यतस्यनि
र्विषयंमतं ॥ २२७॥ किंचदृष्टंसमस्तंचदृष्ट्यासिद्ध्येन्नशास्त्रतः ॥ अदृष्टंनास्तिचेत्तर्हिविषयस्तेविषंपपौ
॥ २२८ ॥ धर्माभावोपितत्वंचेत्प्रत्यक्षेणैवसिद्ध्यति ॥ अतत्वंयदितर्ह्यासीद्धर्मोनिष्कंटकोमम ॥ २२९ ॥

तथा अक्षानुकूलोविषयःतद्विरुद्धस्तुविषयोनेतिसर्वत्रदृष्टत्वादितियुक्त्यैवसिद्ध्यतीत्यर्थः । युक्तेरमानतायस्यतस्यशास्त्रंनिर्विषयं
विषयशून्यं ॥ २२७ ॥ प्रकारांतरेणविषयंनिराकरोति ॥ किंचेति ॥ त्वच्छास्त्रस्यदृष्टंवाविषयः अदृष्टंवा । नाद्यमित्याह॥ दृष्ट
मिति ॥ नद्वितीयमित्याह ॥अदृष्टमिति॥ नास्तिचेत् अनंगीकारान्नास्तिचेत् तेविषयः त्वच्छास्त्रस्यविषयइतियावत्॥२२८॥ ॥ ३४ ॥
ननुधर्माभावश्शास्त्रेणबोध्यइत्यतआह ॥ धर्माभावोपीति ॥ तत्वस्यप्रत्यक्षैकवेद्यत्वांगीकारात् । धर्माभावोयद्यतत्वं तर्हित

द्विरुद्धस्यधर्मस्यतत्वतास्यादितिममधर्मोनिष्कंटकोभवेत् । धर्मकंटकस्यतद्वैपरीत्यामद्धर्मसिद्धेरितिभावः । उपलक्षणंचैतत् । धर्माभावस्यातत्वतायांनृशृंगवत्विषयताचनेतिग्राह्यं ॥ २२९ ॥ ननुधर्मेप्रमाणाभावश्शास्त्रेणबोध्यतइत्यतआह ॥ नापीति ॥ २३० ॥ सोपि धर्मेप्रमाणाभावोपि । धर्मेप्रमाणाभावस्यातत्वतायांतद्विरुद्धधर्मशास्त्रप्रामाण्यस्यबलादापातात्धर्मशास्त्रमकंटकमभून्ममेतिभावः ॥ २३१ ॥ इतिचार्वाकवादः ॥ ७ ॥ वृत्तानुवादपूर्वकंवर्तिष्यमाणंकीर्तयते ॥ एवमित्यादिना ॥ २३२॥

नापिधर्मेप्रमाणस्याभावश्शास्त्रेणबोध्यते ॥ २३० ॥ सोपितत्वंयदितदाप्रत्यक्षेणैवसिद्ध्यति ॥
अतत्वंचेद्धर्मशास्त्रमकंटकमभून्मम ॥ २३१ ॥ ॥ इतिचार्वाकवादः ॥ ॥ ७ ॥ एवंचार्वाकम
र्यादासर्वाप्यार्यैर्विगर्हिता ॥ जिनबुद्धागमाद्यध्वशोधनायाधुनायते ॥ २३२ ॥ यदीदंनतदात
न्नेत्याज्ञाराज्ञःपरंभवेत् ॥ समानंनोभयोर्मानमनुमाननुमाक्रमा ॥ २३३ ॥

यदिक्रतुबाह्यहिंसादिकंन तदाक्रत्वंतर्वर्तिनीहिंसापिनेतिबौद्धाद्यैरुच्यते । तदनूद्यदूषयति ॥ यदीति ॥ इदंक्रतुबाह्यहननं यदि न तदा तत् याज्ञीयपशुहननं नेत्याज्ञा । ननुनेयंराजाज्ञा किंतुप्रमाणबलादेवोच्यतइत्यतआह ॥ समानमिति ॥ उभयोर्वादिप्रतिवादिनोः समानंमानं धर्माधर्मबोधकं न । प्रत्यक्षस्यधर्मादावनुपयोगात् आगमस्यचत्वदीयस्यमयानंगीकारात् मदीयस्य त्वयानंगीकारादितिभावः । ननुवैधहिंसा अधर्मसाधनं हिंसात्वात् विप्रहिंसावदित्यनुमानंप्रमाणमित्यतआह ॥ अनुमेति ॥

युक्ति- व्याप्तिधर्मिलिंगग्राहकप्रमाणंप्रत्यक्षमागमंवाअनुसृत्यप्रमाणंननु अनुमा । अनेनैवमूलीभूतप्रत्यक्षागमयोरुक्तविधयाअभावात् मल्लिका
पापसाधनानुमैवनसंभवतीतिसूचितं । ननुकेवलानुमयैवधर्मादिसाधनंक्रियते । किंमूलीभूतप्रमाणेनेत्यौद्धत्याद्वदंतंप्रत्याह ॥ मा गुणसौ०
॥ ३५ ॥ क्वमेति ॥ अनुमेत्यावर्तनीयं । अनुमा क्वकुत्र मा प्रमाणं मा नभवति । अमानोनाः प्रतिषेधइतिवचनादत्रमाशब्दोनअर्थकः ।
सर्वत्रापिप्रयोक्तुंशक्येतिभावः ॥ २३३ ॥ तदेवविशदयति ॥ नचेदिति ॥ क्षीरमपेयंद्रवद्रव्यत्वात्सुरावदित्यनुमानेनतेमतेक्षी
रमपेयंकिंकिमर्थनेतियोजना । ततः उक्तविधयाशुष्कानुमानस्यातिप्रसंजकत्वादित्यर्थः । मूलानुगैवमूलप्रमाणानुसारिण्येव सा

नचेत्सुरावत्क्षीरंचकिमपेयंनतेमते ॥ द्रवद्रव्यत्वतोहेतोस्ततोमूलानुगैवसा
॥ २३४ ॥ मूलंनातींद्रियेध्यक्षंस्वस्ववाक्कस्यकस्यन ॥ २३५ ॥ प्राचांवाचस्तुशो
चंतेदेहःकारागृहंकिल ॥ अतोयुक्त्यापिनार्थस्तेयत्साहिंसांप्रशंसति ॥ २३६ ॥

नुमाप्रवर्ततइत्यर्थः ॥ २३४ ॥ ननुप्रत्यक्षंमूलप्रमाणंभविष्यतीत्यतआह ॥ मूलमिति ॥ अतींद्रिये क्रतुहिंसादेःपापसाधनत्वा
दौ । ननुस्वस्वाचार्यवचांसिमूलानिस्युरित्यतआह ॥ स्वस्ववागिति ॥ स्वस्वाचार्यवाक् कस्यकस्यवादिनोन सर्वस्याप्यस्तीत्य
र्थः । अतस्तन्मात्रेणधर्मनिर्णये परस्परविरुद्धसर्ववादिभिरुक्तःसर्वोपिधर्मस्स्यादितिभावः ॥ २३५ ॥ तर्हिपूर्वेषांव्यासवाल्मीकि ॥ ३५ ॥
प्रभृतीनांवाचःप्रमाणानिस्युरित्यत स्सत्यमिदं न त्वयातानिधर्ममूलत्वेनांगीक्रियंतइत्याह ॥ प्राचामिति ॥ वाचस्तु वाचःभा

रतरामायणाद्याः शोचंते । तासांत्वयाप्रामाण्यानंगीकारादितिभावः । ननुयुक्त्याधर्माधर्मनिर्णयःक्रियतइत्यतः सातवैवविरुद्धे
त्याह ॥ देहइति ॥ देहः बहुतरदुःखहेतुत्वेनकारागृहं कारागृहप्रायं । किलेत्यनेन चार्वाकव्यतिरिक्तसर्ववादिनां अस्मिन्नर्थेसं
मतिंसूचयति । अतो देहस्यकारागृहोपमत्वेनहेयत्वात् युक्त्या हिंसायाअकर्तव्यत्वोपपादकयुक्त्यापितेअर्थोन । यद्यस्मात्सा
युक्तिःहिंसांप्रशंसति । कारागृहद्वारोद्घाटनेनतदंतस्थपुरुषबहिष्करणस्यपुण्यहेतुत्ववत् बंधकीभूतदेहांतस्थितजीवस्यशिरश्छेदेन
देहाद्बहिष्करणरूपहिंसां पुण्यहेतुतयास्तौति । त्वदभिमताहिंसांतु कारागृहांतरवस्थितिहेतुप्रयत्नवत् बंधकीभूतदेहगुहायामेवस्थि

तन्मानिनोप्यमानस्यकथंकारंमिथःकथा ॥ २३७ ॥ किंचयुक्त्येकभक्तश्चेत्कथंमांसंनिषेधसि ॥ २३८ ॥
भूतेभ्योन्यन्नवैमांसेनान्यदन्नेपिदृश्यते ॥ एकंत्याज्यंभोज्यमन्यदित्येतत्केनतेमते ॥ २३९ ॥

तिहेतुभूतां पापहेतुत्वेननिंदतिच । तस्माद्युक्त्यापिनार्थः । प्रत्युतानर्थएवेतिपूर्वेणान्वयः ॥ २३६ ॥ यदीत्यादिनोक्तमुपसंहरति
॥ तदिति ॥ मानिनोपि प्रतिवादिभिःकथांकरोमीत्यभिमानिनोपि अमानस्य उक्तविधयास्वाभिमतार्थेप्रमाणशून्यस्य मिथःप
रस्परं कथा जल्पादिः कथंकारंस्यात् किंकृत्वास्यात् । नकथमपीतिभावः ॥ २३७ ॥ केवलयुक्तिसिद्धार्थागीकारेबाधकांतराणि
चाह ॥ किंचेत्यादिना ॥ २३८ ॥ युक्त्येकशरणस्यमांसभक्षणनिषेधायोगःकथमित्यतआह ॥ भूतेभ्यइति ॥ मांसे भूतेभ्यः
पंचमहाभूतेभ्योऽन्यत्वस्तु नवै नास्तिवै । अन्नेपिभूतेभ्योन्यद्वस्तुनदृश्यते । तस्मादेकंमांसंत्याज्यमन्यदन्नंभोज्यमित्येतत् तेम

ते केन नकेनापि उभयोरपिपाचभौतिकत्वादितिभावः । सुगंधदुर्गंधाभ्यांविशेषइतिचेत्तर्हिसौकर्याभावमात्रं नपापहेतुता । दुःख सहिष्णुत्वेनपुण्यहेतुतायाएवौचित्यात् । कथमन्यथा पंचमलधारणेनस्वांगदौर्गंध्यस्यमहाव्रततयापुण्यहेतुतांगीकारः । नचसौकर्या भावोपि । पाकविशेषेणसुगंधीकरणसंभवात् । अभिनवमांसेदुर्गंधादर्शनेनतद्भक्षणप्रसंगाच्च । पर्युषितमांसेदुर्गंधदर्शनस्यपर्युषि तान्नेदुर्गंधदर्शनसमानयोगक्षेमत्वात् । दधिलवणादिनापर्युषितान्नेदुर्गंधपरिहारश्चेत् पर्युषितमांसेपिसंस्कारादिनातत्परिहारइतिसमं समाधानं । अतोनकोपिविशेषः ॥ २३९ ॥ यौक्तस्य युक्तिमात्रशरणस्य हिंसादोषेण याज्ञीयपशुहिंसाख्यदोषेण यज्ञावज्ञाच ते

हिंसादोषेणयौक्तस्ययज्ञावज्ञाचतेकथं ॥ २४० ॥ जिनमंदिरनिर्माणेतद्या
त्रायांचकोटिशः ॥ भूशोधाद्यैःपादघातैर्हिंसास्तेमखवन्नकिं ॥ २४१ ॥

मते कथं नकथंचित् । हिंसायाएवपुण्यहेतुत्वस्यपूर्वोक्तरीत्यायौक्तत्वादितिभावः ॥ २४० ॥ युक्त्यंतरंचाह ॥ जिनेति ॥ जिनमंदिरनिर्माणे भूशोधनाद्यैःआद्यपदेन छिद्यमानस्थूलवृक्षपतनादिकंगृह्यते । भूम्यंतःस्थितमंडूकपिपीलिकाद्यनेककोटिनानें द्रिययुक्तप्राणिहिंसाःप्राप्नुवंति । जिनयात्रायांच पादघातैःपिपीलिकादीनामेवहिंसाःप्राप्नुवंति । तास्सर्वास्ते तवमते क्रियमाण हिंसाः मखवत् यज्ञेक्रियमाणहिंसावन्नकिं भवंत्येवेत्यर्थः । सावद्यलेशोबहुपुण्यराशिरितितुतवप्रक्रिया ममैवानुकूला । एकपशु हिंसायाबहुतरदेवताप्रीणनेनानंतपुण्यराशेस्सिद्धेः । त्वंतु सावद्यराशिर्लघुपुण्यलेशइतिन्यायेपतितोसि । बहुप्राणिहिंसयाएकजिन

प्रीणनांगीकारात् ॥ २४१ ॥ शंखस्पर्शनिंदांनिषेधति ॥ बर्हेति ॥ बर्हहस्तस्येतिहेतुगर्भविशेषणं । बर्हस्यादावस्थ्नः रोममूलेत्वचः अंतेरोम्णांचदर्शनात्सदाताद्दशबर्हग्राहित्वाख्यहेतोस्सूचनात् । शंखेति कृष्णाजिनवराहकेसराणामप्युपलक्षणं ॥ २४२ ॥ युक्त्यंतरंचाह ॥ लवणमिति ॥ लवणंतथैवशाकादिषुदत्वाभक्ष्यतेचेत्शुक्तिरूपास्थिभक्षणंस्यात् । शुक्तिरूपाणां लवणोदकेनिक्षिप्यमाणसिकतावदणूनांअस्थ्नां लवणेबहुलमुपलंभात् । जलीकृत्य लवणंजलमयंकृत्वास्वीकृतिस्स्वीकारश्चेदस्थिक्षालनवारिणःस्वीकृतिःस्यादित्यावृत्त्यायोजनीयं । ममतुशंखोदकप्रोक्षणमात्रं तवतुअस्थ्नांभक्षणं तत्क्षालनोदकपानंवास्यादितिमहद्वैलक्षण्यं ।

बर्हहस्तस्ययाशंखेगर्हासापिनशोभते ॥ २४२ ॥ लवणंभक्ष्यतेचेत्स्याच्छुक्तिरूपास्थिभक्षणं ॥ ज
लीकृत्यस्वीकृतिश्चेदस्थिक्षालनवारिणः ॥ २४३ ॥ कर्तासर्वस्यकार्यस्यकस्मादीशोविसृज्यते ॥ २४४ ॥
स्वभावादेवसर्वंचजगत्स्यात्सचराचरं ॥ किमीश्वरेणेतिवदन्प्रष्टव्यःप्रतिवादिना ॥ २४५ ॥ स्वभा
वोपिजडश्चेत्स्यादन्यप्रेर्योघटादिवत् ॥ जानातीच्छतिपश्चाचगच्छतीतिनकिंश्रुतं ॥ २४६ ॥

तस्माच्छुष्कयुक्तिमात्रानुसारेणवैदिकमतनिराकरणेसकलस्वप्रक्रियानिराकरणमेवस्यादितिभावः ॥ २४३ ॥ यच्चोक्तंमुक्तवर्गःसंसारिवर्गश्चेतिद्विधैवचेतनराशिः । नतुसर्वेश्वराख्यस्तृतीयश्चेतनोस्तीति । तदनूद्यदूषयति ॥ कर्तेति ॥ सर्वस्यकार्यस्यकर्तेति संबंधः ॥ २४४ ॥ ननुस्वभावादेवसर्वंजगद्भवेत् किमीश्वरेणेत्येतद्बौद्धमतमनूद्यदूषयति ॥ स्वभावादिति ॥ प्रतिवादिनाप्रष्टव्यः ॥ २४५ ॥ कथं स्वभावोपिजडःअजडोवेति । आद्यंहिनस्ति ॥ जडश्चेदिति ॥ ननुजडस्यापिस्वतएवप्रवृत्तिःकुतोने

त्याशंकांस्वतःप्रवृत्तिरहितघटदृष्टांतेनपरिहृतामपिकिंतत्रकारणमितिसुहृद्भावेनपृच्छंतंप्रत्याह ॥ जानातीति ॥ प्रवृत्तिहेतुभूत ज्ञानेच्छाद्यभावादितिभावः ॥ २४६ ॥ द्वितीयंनिराह ॥ अजडोपीति ॥ सस्वभावःअजडोप्यस्वतंत्रश्चेत्प्रागुक्तंदूषणं अस्वतंत्र स्यपरप्रेर्यत्वलक्षणं। स्वभावस्यस्वातंत्र्ये तत्तद्वस्तुस्वभावानांबहुत्वेनधर्मिणांजडत्वमंगीकृत्यतत्स्वभावानांचेतनत्वांगीकारेअर्ध(च) जरतीयापत्त्या अनेकेषांस्वातंत्र्ये परस्परविरोधेनजगद्विलयापत्त्याचगौरवात् लघुमूर्तिना उक्तत्रिविधगौरवाख्यदोषरहितमूर्तिना ईशेन किमपराद्धं। अथवा यद्यनेकजगन्नियामकःएकएव नतदंतर्भूतःस्वतंत्रश्च । तर्हिननाम्निविप्रतिपत्तिरितिसएवेश्वरोभवि

अजडोप्यस्वतंत्रश्चेत्प्रागुक्तंदूषणंस्मर ॥ स्वातंत्र्येतुकिमीशेनापराद्धंलघुमूर्तिना ॥ २४७ ॥
स्वस्वभावात्स्वयंचेत्स्यात्तर्ह्यात्माश्रयदूषणं ॥ स्वकारणस्वभावाचेत्स्वभावस्तेगुरुःपतेत् ॥ २४८ ॥

ष्यतीत्याह ॥ लघुमूर्तिनेति ॥ एकत्वाल्लघुमूर्तिना स्वतंत्रचेतनत्वांगीकारा दीशेनईशत्वयोग्येनच त्वदुक्तस्वभावेनकिमपराद्धं । अस्माकंनकोप्यपकारइतिभावः ॥ २४७ ॥ अधुनास्वस्यस्वस्यस्वभावात्स्वयंस्वयमुत्पद्यतेवा स्वकारणस्वकारणस्वभावाद्वेतिविकल्प्याद्यंदूषयति ॥ स्वस्वभावादिति ॥ स्वोत्पत्तेःपूर्वंस्वस्वभावस्याप्यनुत्पन्नत्वेनपूर्वभावित्वाभावात्कथंकारणत्वमितिभावः । द्वितीयंदूषयति ॥ स्वकारणेति ॥ गुरुः गौरवदोषग्रस्तः तेत्वदुक्तस्वभावःपतेद्व्यर्थोभवेदित्यर्थः । गौरवस्यपतनहेतुत्वात्पतेदित्युक्तं । तदाकारणादेवकार्योत्पत्तिसंभवात्पुनःकारणस्वभावस्यापिहेतुत्वांगीकारेकल्पनागौरवमितिभावः ॥ २४८ ॥ स्वकारणात्स्व

यंभवतीत्युक्तेपिजगदीशस्यकारणत्वेकिमायातमित्यतआह ॥ तदेति ॥ कारणचक्रस्थः कारणकलापप्रविष्टः । अस्यजगतः । ननुअस्मदादिरेवजगत्कर्तेत्यतआह ॥ महीति ॥ मह्याद्युपादानगोचरापरोक्षज्ञानादिकमस्मदादेर्नास्तीतिभावः । नचमह्यादिकं नित्यमेवेतिवाच्यं । तन्नित्यत्वेप्रमाणाभावात् । अंकुरादीनामनित्यत्वानुभवाच्च । नहिगिरिदरीवर्त्यंकुरादीनामस्मदादिःकर्ता । किंचकृषीवलादेःबीजावापमात्रकर्तृत्वेपिबीजादंकुरजननस्यईश्वरकर्तृकस्यावश्यंभावाच्च । अस्मदादीनामस्वातंत्र्येणास्मत्प्रेरणकर्तृत्वेनापीश्वरस्यांगीकार्यत्वाच्च ॥ २४९ ॥ ननुकारणचक्रेकर्तैवनापेक्षितः अपेक्षितश्चेत् अदृष्टद्वारककर्त्रैवालंकिमन्येनेत्यतआह

तदाकारणचक्रस्थःकर्ताप्यावश्यकोस्यहि ॥ महीमहीधरादेश्चयःकर्तासमहेश्वरः ॥ २४९ ॥ नचेत्कु
लालकार्याद्यानापेक्ष्येरन्स्थलेस्थले ॥ अन्यथादृष्टहानिस्स्याददृष्टस्यचकल्पना ॥ २५० ॥ यत्नेनसा
ध्यतेमोक्षोयदितर्हिस्वभाववाक् ॥ अभावमापनोचेत्तेव्रतचर्याबहिर्ययौ ॥ २५१ ॥

॥ नचेदिति ॥ स्थलेस्थलेग्रामेग्रामे । कर्तारंविनावाअदृष्टद्वारककर्त्रावाकार्योत्पत्तौग्रामेग्रामेप्रेक्षावतांघटगृहतैलादिकार्यायकुलालकार्याद्यदृष्टाद्वारककर्तृसंग्रहोव्यर्थःस्यात् । अल्पकार्येष्वपितदपेक्षायां महीमहीधरादिमहाकार्यकरणायसुतरांतदपेक्षेतिभावः । तदनंगीकारेबाधकमाह ॥ अन्यथेति ॥ कुलालादीनांतत्तत्कार्यकर्तृत्वस्यदृष्टत्वात्दृष्टहानिस्स्यात् । कर्तृनिरपेक्षकारणचक्रात्कार्यस्यक्काप्यदृष्टत्वेनअदृष्टकल्पनाप्रसंगस्स्यादित्यर्थः ॥ २५० ॥ प्रकारांतरेणदूषयति ॥ यत्नेति ॥ यदिमोक्षःयत्नेनसाध्यते तर्हि

स्वभाववाक् स्वभावादेवसर्वंभवतीतिवाक् अभावंनाशमापेतिसंबंधः । नोचेत् यत्नसाध्योनभवति किंतुस्वभावादेवभवतीत्यंगीकारे तेतव बौद्धजैनादेः व्रतचर्या व्रताचरणं बहिर्ययौ ग्रामाद्बहिर्गतेत्यर्थः ॥ २५१ ॥ यदुक्तंस्वभावस्यजडत्वेपरप्रेर्यत्वंतज्जैनैःकर्तृत योक्तकर्मादिष्वप्यतिदिशन्उपपादयति ॥ जडेति ॥ जडंचतत्स्वभावकर्मादिकंचेतिविग्रहः । स्वयं हस्ताद्यालंबनंविना गच्छेत् वनंप्रतीतिशेषः । घटोवेत्यत्रापिस्वयमित्यावर्तनीयं ॥ २५२ ॥ मणिमंत्रादिनावह्नेरुष्णत्वस्वभावस्यापितिरस्कारदर्शनात्पुनरुक्ते

जडस्वभावकर्मादिप्रेर्यंस्यादजडेनहि ॥ किंकुठारस्स्वयंगच्छेद्घटोवाजलमाहरेत् ॥ २५२ ॥ स्वभावस्यतिर स्कारःपुरस्कारश्चपावके ॥ दृश्यतेमणिमंत्राद्यैर्नतत्तस्यस्वतंत्रता ॥ २५३ ॥ स्वानिष्टस्यहिकर्मादेःप्रेरकोनस्व यंजनः ॥ अतस्तत्प्रेरणायान्योमान्यःकोपिमनीषिणा ॥ २५४ ॥ नहिपुण्यस्यलघुतापापस्यगुरुतापिवा ॥ यदुन्नयेल्लाघवाद्वागौरवाद्वाप्यधोनयेत् ॥ अतश्शिलादिदृष्टांतोप्युक्तेर्भारायकेवलं ॥ २५५ ॥

जकेनपुरस्कारदर्शनाच्चनस्वभावस्यस्वातंत्र्यमित्याह ॥ स्वभावस्येति ॥ तिरस्कारःप्रतिबंधः । पुरस्कारश्शक्त्याविर्भावः । तत्त स्मात्तस्यस्वभावस्य ॥ २५३ ॥ स्वभावकर्मादेश्चेतनप्रेर्यत्वमुक्तं । सचेतनोनास्मदादिरनुभवबाधितत्वादित्याह ॥ स्वानिष्टस्ये ति ॥ कर्मपदेनस्वजिह्वादंशनादिकर्म स्वोदरशूलादेर्हेतुभूतंपापंचोच्यते । आदिपदेनउन्मादादिकंस्वभावोगृह्यते । अतः स्वस्य स्वानिष्टप्रेरकत्वायोगात् । अन्यःअस्मदादेः । कोपीत्यनेनअस्मदाद्यदृष्टशक्तिमत्त्वंद्योतयति ॥ २५४ ॥ ननुउत्कटवायुनापुरुष

स्याप्युद्गमनदर्शनात्कंठलग्नशिलाभारेणजलेपुरुषस्याधोगमनदर्शनाच्च जडमेवपुण्यपापरूपंकर्म ऊर्ध्वाधोगमनहेतुर्भवेत्। किमी श्वरेणेतिमंदाशंकांपरिहरति ॥ नहीति ॥ लघुतेत्युपलक्षणं । वेगोपिग्राह्यः । ननुपुण्यपापयोर्लघुत्वगुरुत्वचिंताकिमर्थेत्यतउक्तं यदिति ॥ यत्पुण्यं उन्नयेत् पुरुषंऊर्ध्वंस्वर्गंनयेत् । यच्चपापं पुरुषमधोनरकंनयेत् । तयोःपुण्यपापयोः वायुवत्शिलावच्च लघुत्वगुरुत्वे नैव स्तोहीतिभावः। अतः पुण्यपापयोर्लघुत्वगुरुत्वाभावात्। आदिपदेनवायुर्ग्राह्यः। उक्तेर्भाराय वचनगौरवाय शास्त्र बहुत्वायेत्यर्थः ॥२५५॥ इदानींदृष्टांतेपिकेवलजडकर्तृतायामन्मतेऽभावादसंप्रतिपन्नोदृष्टांतइत्याह ॥ सर्वस्येति ॥ तत्रापि शिला

**सर्वस्यकर्तातत्रापिकिंनकर्तामहेश्वरः ॥ २५६ ॥ यस्स्तंभसंभवोडिंभंहि**
**रण्यकशिपोरपात् ॥ सोंतर्यामीममस्वामीकस्यनस्याद्विचारय ॥ २५७ ॥**

दावपि ॥ २५६ ॥ तस्यशिलांतर्गतत्वमनुभावयति ॥ यइति ॥ स्तंभसंभवः शिलास्तंभमध्यादाविर्भूतोनरसिंहःहिरण्यकशिपोर्डिंभमर्भकंप्रह्लादं । पोतःपाकोर्भकोडिंभइत्यभिधानात् । अपात्अरक्षत् । अनेनसर्पाग्निजलशस्त्रादिस्वभावतिरस्कारकर्तृत्वंचभगवतोद्योतयति । सोयंममस्वामी कस्यांतर्यामीनस्यात् । विचारय युक्तिंपश्येतियोजना । अतिदृढतरशिलांतरपियस्तिष्ठति । सोन्यत्रवाय्वादौ मृदुतरवस्तुनि कुत्रकुत्रनस्यात् । सर्वत्रापिस्यादेवेतिभावः । ममस्वामीत्यनेनचेतनानामपिप्रवृत्तिस्तदधीना । अन्यथाचेतनांतरेअदृष्टा ईदृशीग्रंथकरणशक्तिःकथमभूदितिसूचयति । नचैतत्कुतइतिवाच्यं । अहो(बि)बलक्षेत्रेनिर्गच्छता नृसिंहेन वि

दारितशिलास्तंभेबृहत्तरच्छिद्रस्याद्यापिसर्वैर्दृश्यमानत्वात् ॥ २५७ ॥ किंच शिलायायदिजलेपुरुषप्रवर्तकत्वं तर्हि स्थलेपिपुरुषं प्रवर्तयेत् । नचैतद्दृष्टं । प्रत्युतस्वस्यैवपुरुषेणनीयमानत्वंदृश्यते । अतः पतनहेतुभारादेवअधोगमनमित्याह ॥ शिलेति ॥ स्वसत्त्वेन स्वसामर्थ्येन समेस्थले कस्मान्ननयति । याशिला नरैर्नीयते । समेस्थलइत्यावर्तनीयं । साशिलेतिसंबंधः । अतःशिलायाःपुरुषप्रवर्तकत्वमनानुभविकमितिभावः ॥ २५८ ॥ युक्त्यंतरंचाह ॥ अश्मेति ॥ तेतव दृष्टांतभूतःअश्मा शिला अप्सुजलेषु तिर्यक् तिरश्चीनतया पर्यक् परितः । स्वतइत्यावर्तनीयं । यस्मान्नगच्छति । अतस्तस्याःशिलायाः स्वतःकृतिःप्रवृत्तिः ।

शिलायदिस्वसत्त्वेनजलेनयतिपूरुषं ॥ स्थलेकस्मान्ननयतिसमेया नीयतेनरैः ॥२५८॥ अश्मा
यस्मान्नतेऽप्स्वेवतिर्यक्पर्यक्चगच्छति ॥ अतस्स्वतःकृतिस्तस्यनजलेनापिचस्थले ॥ २५९ ॥
तदीशगौरवात्स्वीयगौरवाच्चनयेदधः ॥ यतस्सगौरवंधर्मंचक्रेपतनकारणं ॥ २६० ॥ यदास
धर्मसामर्थ्यैरुणद्धिनतदापेतत् ॥ नमग्नोमंदरःकस्मान्महीवानाप्सुमज्जति ॥ २६१ ॥

उपलक्षणमेतत् । प्रवर्तकत्वंचेतिद्रष्टव्यं ॥ २५९ ॥ कस्तर्हिस्वशक्त्याधोगमनहेतुरित्यतआह ॥ तदिति ॥ तत्तस्मा दन्यस्यप्रवर्तकत्वायोगात् ईशगौरवा दीशमाहात्म्यात् ईशानुगृहीतस्वीयगौरवाद्भाराच्चेत्यर्थः । अधःपुरुषंनयेत् । ननुगुरुत्वस्याप्यधोगमनहेतुत्वंकथमित्यतआह ॥ यतइति ॥ सईश्वरः । गौरवंगुरुत्वं । गुरुत्वंतुगुणोहेतुराद्यपतनकर्मणीतिहितलक्षणं । अतईशानुगृहीतस्यतस्याप्यधोगमनहेतुत्वंयुज्यतइतिभावः ॥ २६० ॥ नन्वेवंतर्हिगुरुत्वादेवपातोस्तु किमीश्वरानुग्रहेणेत्यतआह ॥यदेति॥ ॥ ३९ ॥

धर्मसामर्थ्यं गौरवाख्यधर्मसामर्थ्यं । तदानपतेत् शिलेत्यनुवर्तते । एतदनुभावयति ॥ नेति ॥ मंदरः महाभारवान् शतयोजनपरिमितःकनकाचलः अप्सु क्षीरसमुद्रजलेषु । मही पंचाशत्कोटिविस्तीर्णाभूः अप्सु स्वाधोभागस्थितगर्भोदकेषु ॥२६१॥ स्थलांतरेप्येतदनुभावयति ॥ यद्दत्तेति ॥ येनेश्वरेणदत्तवरतः नलहस्तार्पिताः सेतुंकुर्वतोनलाख्यवानरस्यहस्तार्पिताः उन्ममज्जुः ऊर्ध्वममज्जुः । जलोपर्येवस्थिताः नाधोगताइत्यर्थः । नाधोगच्छंत्वितियस्यवचनमात्रात् पर्वतरूपस्थूलशिलाअपिनाधोगताइतिभावः । सईश्वरः जडस्यैवस्वतःप्रवर्तकत्वंवदतःकस्यकस्य दौर्जन्यंनभर्जयेत् । इमामीश्वरशक्तिंदृष्ट्वासर्वस्यापिनिरुत्तरेतिभावः

यद्दत्तवरतोवार्धुनलहस्तार्पिताश्शिलाः ॥ उन्ममज्जुस्सदौर्जन्यंकस्यकस्यनभर्जयेत् ॥ २६२ ॥ वि
षमारोहतीशस्यसत्त्वादेवनतुस्वतः ॥ किंविषादोविषादासीच्छिशोस्तस्यशिवस्यवा ॥ २६३ ॥
अतोदृष्टंसमस्तंचदृष्टाचेश्वरतोभवेत् ॥ अदृष्टमीश्वरादेवेत्यासीत्सर्वधुरंधरः ॥ २६४ ॥

॥ २६२ ॥ ननुसर्पादिदंशजनितविषंस्वतएवोर्ध्वंगच्छतीत्यतआह ॥ विषमिति ॥ ईशस्यसत्त्वादेव उक्तयुक्त्याविषस्याप्यंतर्गतेशस्यसत्त्वात्सामर्थ्यात् आरोहति । ऊर्ध्वंगच्छति । नस्वसामर्थ्यात् । कुतएतदित्यतआह ॥ किमिति ॥ शिशोःप्रह्लादस्य तस्य शिशुरूपस्यकृष्णस्य शिवस्यवा विषात् सर्पदंशनविषात् पूतनादत्तविषात् कालकूटविषाद्वा विषादः ऊर्ध्वारोहजनितदुःखमासीत्किं नासीदेवेत्यर्थः । अतईशानुग्रहाभावे विषस्याप्यूर्ध्वगमनशक्तिर्नास्तीतिसर्वानुभवसिद्धमितिभावः ॥ २६३ ॥ नन्वेवमीश्वरादेवसर्वकार्यसंभवे दृष्टकारणकलापापलापस्स्यादित्यतआह ॥ अतइति ॥ अतः यथाप्रमाणंसर्वस्याप्यंगीकर्तव्यत्वात् दृष्टं

युक्ति- ॥ ४० ॥

मृत्कुलालादिकारणवत्तयादृष्टं घटादि दृष्टा त्कुलालादिकारणा दीश्वरतश्चेतिसंबंधः । अदृष्टं दृष्टकर्त्रादिकारणशून्यमंकुरादी त्यर्थः । सर्वधुरंधरः सकलकार्यधुरंधरः ॥ २६४ ॥ ईश्वरकर्तृकत्वस्यव्यभिचारस्थलतया तैस्तैर्वादिभिरुक्तवक्ष्यमाणसकलदृष्टां तानामपि साधारणंदूषणमाह ॥ तस्मादिति ॥ तस्मात्सर्वस्यकार्यस्यास्माभिरीशकर्तृकत्वांगीकारात्पक्षे स्वभावादौ पक्षसमे शिलादौ यस्यवादिनः अनैकांत्यचोदना व्यभिचारकथनं आर्यगर्हितःअसौपुमान् शास्त्रमर्यादांनवेदेतिसंबंधः । नहिपक्षेपक्षस मेवा व्यभिचारइत्यार्यवचनात् । पक्षसमानीमानि यत्कार्यं तत्सकर्तृक मित्यस्मदुक्तव्याप्तेर्नव्यभिचारस्थलानीतिभावः ॥२६५॥

मल्लिका गुणसौ०

तस्मात्पक्षेपक्षसमेयस्यानैकांत्यचोदना ॥ वेद नासौपुमाञ्छास्त्रमर्यादामार्यगर्हितः ॥ २६५ ॥ रत्न
प्रभा स्वभावश्चेत्कुतोनास्तिशिलांतरे ॥ ततस्तत्रैवसाभूयादित्यत्रास्तिनियामकः ॥ २६६ ॥ नार्यै
श्चवार्यःकार्यैसौहृयैश्वर्यैर्यवीर्यवान् ॥ निर्दैवमृद्धैतंविद्वान्कोद्याऽऽदद्याड्डिबौद्धवत् ॥ २६७ ॥

अधुनास्वभाववादिनोमुखेनैव नियामकमीश्वरंसाधयति ॥ रत्नेति ॥ रत्नस्यापिशिलात्वात् तत्प्रभा शिलास्वभावश्चेत्तर्हिशिलां तरे रत्नातिरिक्तशिलांतरे । तत्रैव रत्नरूपशिलायामेव । साप्रभा । सएवेश्वरइतिभावः ॥ २६६ ॥ एवं सर्वस्यापीश्वरकृतत्वे परोदीरितस्वभावादिकं किंसर्वथा नापेक्षितं नेत्याह ॥ नेति ॥ हर्यैश्वर्येण ईर्यं प्रेर्यं वीर्यमस्यास्तीतिसतथोक्तः । असौ स्वभावादिः । ॥ ४० ॥
निर्दैवं दैवरहितं दैवानधीनमित्यर्थः । तं स्वभावं कोवाआदद्यात् । अनादानेव्यतिरेकदृष्टांतमाह ॥ बौद्धवदिति ॥ यथाबौद्ध

आदद्यात्तथान्योनकोपीतिभावः । किंचांगीकृतोप्ययंस्वभावः नसाक्षात्तत्तत्कार्येषुकारणं । किंतु दंडमृत्पिंडादीनांकारणानांयोग्यतारूपःस्वभावः कारणतावच्छेदकतया परंपराकारणमेव ॥ २६७ ॥ रीत्यंतरेणस्वभावादेवजगदीश्वरस्सिद्ध्यतीत्याह ॥ किंचेति ॥ यतोऽचेतनमात्रस्यान्यनियम्यतास्वभावः अतइत्यर्थः । तथाच स्वभावकर्माद्यचेतनस्यैवान्यनियम्यत्वस्वभावादेव मे प्रभुरीश्वरः आविर्बभूव सिद्धोभूदित्यर्थः । स्वभाववादिनापित्वया स्वभावस्वभावस्यापिरक्षणीयत्वादितिभावः ॥ २६८ ॥ ननु

किंचाचेतनमात्रस्यस्वभावोन्यनियम्यता ॥ अतोभवत्स्वभावेनप्रभुराविर्बभूवमे ॥ २६८ ॥
सचस्वेच्छानुसारेणतत्तद्वस्तुतथातथा ॥ तनुतेतेषुचाप्येकमुच्चंनीचंकरोतिच ॥ २६९ ॥ स्व
तंत्रस्यचतस्येच्छानियोक्तुंनैवशक्यते ॥ अराजकमिदंराष्ट्रंनचेन्नष्टंभविष्यति ॥ २७० ॥ नरे
षुकश्चिन्मूकोस्तिवाचालोप्यस्तिकश्चन ॥ सोयंनरस्वभावोनतवापिचममापिच ॥ २७१ ॥

स्वतंत्रचेतनांगीकारेपिनानापदार्थेषुवैचित्र्यंकथंस्यादित्यतआह ॥ सचेति ॥ तत्तद्वस्तुतथातथा यद्वस्तुयादृशंतथेत्यर्थः । तेषु सृष्टेषुपदार्थेषु एकमुच्चं अपरं नीचंकरोतीतिसंबंधः ॥ २६९ ॥ नन्वेवंकुतःकरोतीत्यतआह ॥ स्वतंत्रस्येति ॥ स्वतंत्रेच्छायानियंतुमशक्यत्वादितिलौकिकप्रवादादितिभावः । तस्यस्वातंत्र्यानंगीकारेबाधकमाह ॥ अराजकमिति ॥ अराजकं नियामकरहितं । नचेत्सतुस्वतंत्रोनचेत् ॥ २७० ॥ स्वभाववादिनोमुखेनैवकर्मणोपिकारणतांवाचयितुमाह ॥ नरेष्विति ॥ निर्धारणेसप्तमी ।

युक्ति- सोयंमूकत्वादिः तवापिचममापिच । मतइतिशेषः ॥ २७१ ॥ मूकत्वादौपापादिकंकारणमित्यतआह ॥ कर्मापीति ॥ अत्रकर्म मल्लिका
कारणतांगीकारात् स्वभावादेवसर्वंभवतीतिवादोगतइतिभावः । क्वचित्कार्येस्वभावःक्वचिच्चकर्मकारणमित्यंगीक्रियतइत्यतआह गुणसौ०
॥ ४१ ॥ ॥ कलहइति ॥ उभयोरपिस्वतंत्रकारणत्वे अन्योन्यप्रतिबंधात्किमपिकार्यंनभवेदितिभावः ॥ २७२ ॥ कर्मणस्स्वतंत्रकारणत्वं
रीत्यंतरेणदूषयति ॥ अथेति ॥ राजाचेत् स्वतंत्रकारणंचेत्तस्यकर्मणः । जडतेत्यनित्यत्वादेरुपलक्षणं । यद्यपीदंदूषणंस्वभावप

कर्मापिचेद्गतंतर्हिस्वभावांघ्र्युपसर्पणं ॥ क्वचित्स्वभावःकर्मापिक्वचिच्चेत्कलहोभवेत् ॥ २७२ ॥
अथकर्मापिराजाचेज्जडतातस्यकिंकृता ॥ जननेमरणेवापिकिंकर्तातस्यनेष्यते ॥ २७३ ॥ अ
तोऽवद्यंजडत्वाद्यंस्वभावानांचकर्मणां ॥ यतोभून्निरवद्योसौकथंसिद्ध्येन्नसिद्धराट् ॥ २७४ ॥ य
दितत्तत्कृतंकर्मतज्जन्ममरणादिकं ॥ अन्यचैतन्यसाचिव्यशून्यमेवकरोतिते ॥ २७५ ॥

क्षेपिवक्तुंशक्यते । तथापिचेतनस्वभावेजडत्वाभावादुपेक्षितं । कर्मतुपुण्यपापरूपंजडमेवेतिसुष्ठूक्तंजडतातस्यकिंकृतेति । मरणे
नाशे तस्यकर्मणः ॥ २७३ ॥ अतःकर्मादिस्वतंत्रकारणतावादोनांगीकार्यइत्याह ॥ अतइति ॥ स्वभावानांचकर्मणां जडत्वो
त्पन्नत्वाद्यं अवद्यंदूषणंयतोनारायणादभूत् । असौनिरवद्यःसिद्धराट्कथंनसिद्ध्येदितिसंबंधः । निरवद्यइत्यनेनकर्मण्युक्तंदूषणंभ ॥ ४१ ॥
गवतिनायातीतिसूचितं ॥२७४॥ लोकसिद्धहिंस्यहिंसकभावान्यथानुपपत्त्यापिकेवलमकर्मकारणत्ववादस्त्याज्यइत्याह॥यदीति॥

तत्तत्कृतं तैस्तैःपुरुषैःकृतं तवकर्तृत्वेनाभिमतंकर्म तज्जन्ममरणादिकं तेषांतेषांजन्ममरणादिकं अन्यचैतन्यसाचिव्यशून्यमित्यने
न केवलत्वंद्योतयति । अन्यः हन्यमानादन्यश्चेतनः तस्य यच्चैतन्यं ज्ञानेच्छाप्रयत्नादि तत्साचिव्यं साहाय्यं तेनशून्यमेवेत्यर्थः।
अदृष्टद्वारककर्तृभूतात्हिंस्या दन्याद्दृष्टाद्वारकप्रयत्नपूर्वकहंतृचेतनसाहाय्यरहितमितिभावः ॥२७५॥ दूषयति॥ तर्हीति ॥ हंतृचे
तनस्याकारणत्वात्हंतापुरुषोनकोप्यासीदित्यर्थः । हंतुश्चेतनस्याभावेकोदोषइत्यतआह ॥ अतइति ॥ हिंसादोषवादः देवदत्ते
नयज्ञदत्तस्यहिंसाकरणेदोषवादोगतइतिसंबंधः ॥ २७६ ॥ ननुकेवलकर्मणोनकारणत्वं । येनोक्तंसमस्तंस्यात् । किंतुकर्त्रंतरसा

तर्हिहंतानकोप्यासीत्स्वस्वकर्महतेजने ॥ अतोहिंसादोषवादोगतोयस्तेमतेमतः ॥ २७६ ॥
अथकर्त्रंतरापेक्षंकर्मापिकुरुतेतव ॥ तर्हिसर्वस्यकर्तारमाक्षिपेत्कंचनेश्वरं ॥ २७७ ॥ निरी
श्वरान्भाट्टसांख्यप्राभाकरमतानुगान् ॥ चित्रमेकप्रहारोयंयुक्त्यात्रीनप्यखंडयत् ॥ २७८ ॥
तस्माज्जडानुसरणंत्यक्त्वाभज महाप्रभुं ॥ स्वभावकालकर्मादेस्सर्वस्यास्यनियामकं ॥ २७९ ॥

पेक्षंकर्मकारणमितिपक्षांतरमनूद्यदूषयति ॥ अथेति ॥ तवमतइतिशेषः । तर्हिकेवलकर्मणःक्षित्यादिकर्तृत्वायोगात्सर्वस्याप्य
दृष्टद्वारककर्तारमीश्वरमाक्षिपेत्साधयेदितिसंबंधः । कंचनेत्यनेन इदानीमीश्वरस्वरूपचर्चाऽनवसरइतिसूचयति अतर्क्यमहिमा
नमितिवा । अयंविकल्पःस्वभावमतेपिसमः । तस्यापिहिंसादोषवादित्वात् ॥ २७७ ॥ एकंप्रत्युक्तंदूषणमन्यत्राप्यतिदिशति
॥ निरीश्वरानिति ॥ अयमेकप्रहारः कर्त्रनपेक्षकारणकलापस्यकार्याजकत्वायोगरूपप्रहारः ॥ २७८ ॥ ईश्वरसमर्थनमुपसंह

रति ॥ तस्मादिति ॥ २७९ ॥ सर्वसंहारकस्य गोपीरमणस्य विष्णो गोंविप्रहननाऽगम्यागमनादिकं नदोषश्चेत्तदन्येषामपि
दोषोनस्यादितिचोद्यंपरिहरति ॥ एकस्येति ॥ एकस्य पापरूपंकर्मा न्यस्य पापहेतुर्नभवतीत्येतदुपपादयति ॥ दाराइति ॥
गुरूणांतपस्विनां । तथाचान्येषांदोषकृदपिहननादिकं नविष्णोर्दोषकृदितिभावः ॥ २८० ॥ तत्रपुण्यपापविषये एकस्यपापम
न्यस्यापिपापंस्यादित्यादियुक्तिः व्यर्था व्यभिचारात्प्रयोजनाऽसाधिकेत्यर्थः । तर्हिकस्मात्पुण्यपापनियमइत्यतआह ॥ विवे
कइति ॥ अतः युक्तेरभावात् । विधेरित्युपलक्षणं । निषेधादित्यपिग्राह्यं । विवेकः पुण्यत्वपापत्वविवेकः । यद्यस्यविहितं तत्त

एकस्यपापमन्यस्यनांहस्स्यादितिचोद्यते ॥ दारागुरूणांपापायनतथागृहमेधिनां ॥ २८० ॥
युक्तिस्तुतत्रव्यर्थैवविवेकोतोविधेर्बलात् ॥ तत्रांहस्तद्यत्रतत्त्वेप्राचांवाचोनचेन्नच ॥ २८१ ॥
निरवद्यतयायस्तुश्रुत्याद्यैस्स्तूयतेतराम् ॥ कृत्वापिनसकर्माणिलिप्यतेजगदीश्वरः ॥ २८२ ॥

स्यपुण्यदं । यत्तु यस्यनिषिद्धं तत्तस्यपापदमितिविधिनिषेधाभ्यामेवपुण्यपापव्यवस्था । अतएवदारपरिग्रहोनिषिद्धत्वाद्गुरोर्दो
षहेतुः । गृहस्थस्यतुतदभावान्नदोषहेतुरितित्वयापिवक्तव्यं । एवंचहिंसाऽगम्यागमनादिकंराजाज्ञोल्लंघनंप्रजानामिवास्माकमेव
दोषहेतुः । नतुविधिनिषेधादिनियामकस्यसर्वेश्वरस्यतु राजाज्ञोल्लंघनंराज्ञइवनदोषहेतुरितिभावः । तदेवविशदयति ॥ तत्रेति ॥
यत्र यस्मिन्कर्मणि तत्वे दोषत्वे प्राचां श्रुतिस्मृतिनियामकानांसर्वेश्वरमन्वादीनांवाचःसंतीतिशेषः । तत्कर्म तत्र तस्मिन्स्थले
अंहःपापं । तत्साधनमितियावत् ॥ २८१ ॥ एवं प्राचीनवचनानुसरणेनक्वापिविष्णोर्दोषइत्याह ॥ निरवद्यतयेति ॥ यस्तुज

गदीश्वरइतिसंबंधः ॥ २८२ ॥ ननुपापप्रेरकस्यजगदीश्वरस्यकर्ताकारयिताचेतिवचनेन पापंस्यादित्यतआह ॥ नापीति ॥ कर्तृ-वत् पापकर्तृवत् । युक्तितःनभवेदित्येतदुपपादयति ॥ मङ्कुरिति ॥ मङ्कुःमज्जनकर्तुः । तत् दुःखं । प्रभोराजादेः ॥ २८३ ॥ ननुयुक्तिंविहायविधिबलात्तन्निर्णयइत्यतआह ॥ विधेरिति ॥ पदानुसरणे पादानुसरणइत्यर्थः । विधितातस्य विधिकर्तुः ब्रह्मतातस्येतिवा । करणात् पापकरणात् । प्रेरणात् तत्प्रेरणात् । यस्यजगदीश्वरस्य । सविधिः । नकर्मणावर्धतेनोकनीयान् सृज

नापिकारयितुःपापंकर्तृवद्युक्तितोभवेत् ॥ मङ्कुर्जलेषुयद्दुःखंकिंतन्मज्जयितुःप्रभोः ॥ २८३ ॥
विधेःपदानुसरणेविधितातस्यकिंभयं ॥ करणात्प्रेरणाद्यस्यनभीरितिसगर्जति ॥ २८४ ॥
यतोविधिर्निषेधोनॄन्विदधातिनिषेधति ॥ ताभ्यांबंधोहिबद्धानांमुक्तानांस्यात्कथंवद ॥२८५॥
यस्तुप्रस्तूयतेश्रुत्यानित्यमुक्ततयाप्रभुः ॥ सनिर्दोषोविजयतेहयग्रीवाभिधोहरिः ॥ २८६ ॥

त्यवत्यत्तिनतत्रसज्जतइत्यादिश्रुतिस्मृतिरूपः ॥ २८४ ॥ प्रकारांतरेणहरेर्विधिनिषेधाविषयत्वमुपपादयति ॥ यतइति ॥ विधिः प्रातस्संध्यामुपासीतेत्यादिः । निषेधो नसुरांपिबेदित्यादिः । नॄ न्सांसारिकपुरुषान् प्रतीतिशेषः । स्यात् बंधइत्यनुवर्तते । कथं नकथंचिदपीतिभावः । मुक्तानामित्युक्त्या भवन्मतेपिस्वसमयोक्तसांसारिकव्रताचरणाभावेपिमुक्तत्वादेवहिमुक्तानांनदोषइति ध्वनयति । वदेत्युक्त्यास्वोक्तेरतिदृढत्वं परस्यप्रत्युत्तराभावंचसूचयति ॥ २८५ ॥ मुक्तानामपिविधिनिषेधरूपबंधोनास्तिकिल

नित्यमुक्तस्यतुकिमुतेतिभावेनाह ॥ यइति ॥ श्रुत्येत्युपलक्षणं । प्रलयेपिवटपत्रशायिनोजननमरणाभावयुक्त्याचेत्यपिग्राह्यं ॥ २८६ ॥ हरेर्दोषित्वकथांप्रतिबंध्यापरिहरति ॥ व्रतस्थेति ॥ व्रतस्था जिनसमयोक्तव्रतस्था तेतवस्त्रीचेतिसंबंधः । हस्तविन्यस्तसूत्रात् मंत्रितहस्तबद्धकंकणसूत्रात् ।सूतकांहसा रजोरूपसूतकदोषेण । किलेत्युपहासः । हस्तन्यस्तसूत्रतुल्यमपिजगदीश्वरस्यसामर्थ्यंनास्तीत्येतदतिनिकृष्टमितिभावः ॥ २८७ ॥ तंतुवायकृतैकसूत्रसंबंधमात्रेणपापालेपे व्यासकृतशास्त्ररूपसप्तशतीसूत्रप्रतिपाद्यमहिम्नो यज्ञोपवीताख्यत्रिसूत्रीशोभितकंठस्यचविष्णोःपापालेपःकिमुवक्तव्यइत्याह ॥ काभीरिति ॥ स्वगुणसंबद्धे

व्रतस्था हस्तविन्यस्तसूत्रात्तेसूतकांहसा ॥ नलिप्यतेकिलस्त्रीचहंतेशोलिप्यतेकिल ॥ २८७ ॥
काभीःस्वगुणसंबद्धसूत्रसप्तशतीपतेः ॥ कंठोपकंठेनृहरेस्त्रिसूत्रीसूत्रितस्यच ॥ २८८ ॥ अस्त्या
वश्यकधर्मस्यप्रत्यवायोऽकृतौस्मृतौ ॥ मुक्तेमुक्तत्वतोसौन ततस्तच्चाघवारकं ॥ २८९ ॥

त्यनेनानंतगुणप्रतिपादकत्वं सूत्रसप्तशत्याःद्योतयति । ब्रह्ममीमांसाशास्त्रे सयुक्तिकंनिर्दोषतयाप्रतिपादितस्य लोकेपापकृतोब्राह्मणस्यशिखायज्ञोपवीतच्छेददर्शनात् अस्यचसदाअच्छिन्नवैशिष्ट्यद्योतकयज्ञोपवीतवतःनकथंचिदपिपापशंकेतिभावः । एवंचसर्वत्रास्यग्रंथकृतःसाहित्योक्तिरपिशास्त्ररूपैवेतिद्रष्टव्यं ॥ २८८ ॥ मुक्तत्वादीश्वरस्यबंधोनास्तीत्येतत्प्रपंचयति ॥अस्तीत्यादिना॥ आवश्यकधर्मस्याकृताविति संबंधः । मुक्तेपुरुषे असौप्रत्यवायः । मुक्तत्वतः बंधरहितत्वात् । तच्चमुक्तत्वंच ॥२८९॥ तस्मादेव



मुक्तत्वादेव सर्वस्मात्पुण्यपापरूपबंधात् ॥ एकत्र कर्तव्यकर्माकरणे अपरत्र हिंसाऽगम्यागमनादौ । विहिताकरणादागतपापवारकस्य निषिद्धकरणादागतपापनिवारकत्वमपिस्यादेव न्यायसाम्यात् । नहिस्वगृहपंकक्षालनसमर्थंजलं परगृहपंकक्षालनासमर्थंदृष्टमितिभावः ॥ २९० ॥ नन्वसिद्धोहेतुरित्यतआह ॥ मुक्तत्वंचेति ॥ दुःखमेवहिसंसारः । देहगेहादिकंतुदुःखसाधनत्वात्संसारइत्युपचर्यंते । अतःसर्वदादुःखरहितत्वात्मुक्तत्वंहरेःसेत्स्यतीतिभावः ॥ २९१ ॥ तत्क्लेशवर्जितत्वं सर्पतल्पपरायणे महाप्रलयइतिशेषः । प्रलयेसर्पतल्पपरायणइतिहेतुगर्भविशेषणं । प्रलयेपि ब्रह्मणश्शतवर्षपर्यंतंअन्नाद्यभावेपि

तस्मादेवास्मदीशोपिसर्वस्माचनलिप्यतां ॥ एकत्रवारकंकस्मान्नापरत्रनिवारकं ॥ २९० ॥ मुक्त
त्वंचसदाक्लेशवर्जितत्वेनसिद्ध्यति ॥ २९१ ॥ तच्च जन्मजरामृत्युक्षुत्तृडादिविवर्जनात् ॥ अ
नुमीयतेश्रि(स्त्रि)यासाकंसर्पतल्पपरायणे ॥ नारायणेपयस्सिंधौकृतधाम्नित्रिधाम्निनः ॥ २९२ ॥
युगेयुगेपरक्लेशहत्यैचावतितीर्षति ॥ अनुत्तीर्णस्वयंपंकात्परंतारयतीहकः ॥ २९३ ॥

सुखितया उर्वरितस्यजन्माद्यभावोपिसिद्ध्यतीतिहेतुसूचनात् । नोस्माकंनारायणइतिसंबंधः । ततश्चायंप्रयोगः । विष्णुर्मुक्तोभवितुमर्हति दुःखरहितत्वात् संप्रतिपन्नमुक्तवत् । विष्णुर्निर्दुःखोभवितुमर्हति जन्मादिशून्यत्वात्संप्रतिपन्नमुक्तवत् । विष्णुर्जन्मादिरहितोभवितुमर्हति प्रलयेप्यनष्टदेहादिमत्वात्संप्रतिपन्नमुक्तवदिति। त्रिधाम्नीत्यनेन तद्धामत्रयेपिक्लेशोनास्तीतिसूचितं ॥२९२॥ तस्यक्लेशाभावेयुक्त्यंतरंचाह ॥ युगेयुगइति ॥ अवतितीर्षतिअवतारंकर्तुमिच्छति । नारायणइतिपूर्वेणान्वयः । अवतितीर्षती

युक्ति- तिवदता तदाप्यवतरणमेव नजन्मेतिसूचितं । परमन्यं । इहलोके ॥ २९३ ॥ ननुकलत्रवत्त्वान्नारायणस्यसंसारइतिजैनादीनां मल्लिका
॥ ४४ ॥ शंकांपरिहरति ॥ नित्यमुक्ताचेत्यादिना ॥ साभार्या लक्ष्मीः सपतिर्नारायणः । उभयोरपिप्रलयेप्यविनष्टदेहत्वेनपतिवत्पत्न्याअ गुणसौ०
पिमुक्तत्वसाधनसौलभ्यादितिभावः । भार्याहिनस्वतएवसंसाररूपा । अपितुसंसारदुःखसाधनतया । भार्यायाभर्तुर्दुःखहेतुत्वंच
स्वजरामरणादिनालोकेदृष्टं । प्रलयेप्यविनष्टदेहालक्ष्मीर्नतादृशीतिकथंतस्याःसंसारहेतुत्वमितिभावेनाह ॥ बाहुभ्यामेवेति ॥
तयोर्लक्ष्मीनारायणयोः । बाहुभ्यामेवबंधोस्तीतिसरसोक्तिः । आलिंगनमित्यर्थः । ननुदुःखाहेतुत्वेपिस्त्रीत्वादेवसंसारहेतुत्वमि

नित्यमुक्ताचसाभार्यानित्यमुक्तःपतिश्चसः ॥ बाहुभ्यामेवबंधोस्तिनतयोर्भ
वबंधनं ॥ २९४ ॥ अनाद्योर्नभवाद्योस्तिभवोह्येषपुनर्भवः ॥ २९५ ॥

तिचेत् तर्हिपुंस्त्वादेवभवदीयमुक्तानामपिकुतोनसंसारहेतुत्वं । पुंसांस्त्र्यादिविषयाशायाअपरिहारात् । अलौकिकपुरुषत्वान्नतदा
शेतिचेत् तर्हिअलौकिकस्त्रीत्वादियमपिनसंसारहेतुरितिसमं । नचमुक्तौस्त्रीणामभावः । पुरुषाणामप्यभावापातात् । मुक्त्यर्थंव्र
तादिकमाचरतःपुरुषस्यमुक्तावावश्यकताचेत् तर्हितादृशस्त्रीणामपिमुक्तौकथंनावश्यकता । ननुतासामपिपुंस्त्वापत्त्यैवमुक्तिरिति
चेत्तर्हिपुंसामपिस्त्रीत्वापत्त्यैवमुक्तिरितिमुक्तौपुंसामेवाभावःकिंनस्यात् । विनिगमनेकारणाभावादुभयोरपिमुक्तावावश्यकतेत्य ॥ ४४ ॥
तोयत्किंचिदेतत् । वक्ष्यतिचैतद्ग्रंथकारस्स्वयमेव ॥ २९४ ॥ युक्त्यंतरेणापिमुक्तत्वमुपपादयति ॥ अनाद्योरिति ॥ भवस्संसा

रः । आद्यपदेनसंसारध्वंसोगृह्यते । अनादिकालमारभ्यअनुत्पन्नेन केवलंसुखहेतुना देहेनविशिष्टयोःकथंसंसारइतिभावः । नन्व
नादित्वेनजन्माभावसिद्धावपिसंसाराभावःकथंसिद्ध्येदित्यतआह ॥ भवोहीति ॥ एषभवइतिसंबंधः । भवस्संसारः पुनर्भवः
निर्घंद्वादौपुनःपुनरुत्पत्त्यापुनर्भवसंज्ञितः । उत्पत्त्यभावेतुअपुनर्भवएवेतिकथमनाद्योर्भवाद्यइतिभावः । नचानादित्वमसिद्धं ।
रुद्रपितुर्ब्रह्मणइव ब्रह्मपितुर्नारायणस्येव नारायणपितुःकस्यचिल्लोकेप्रसिद्ध्यभावादेवानादित्वसिद्धेः ॥ २९५ ॥ ननुकामितयार
मायांरमणाद्धरेस्संसारइतिचेत् न । तथापिदुःखस्याभावात्कुतस्संसारः । दुःखस्यैवसंसारत्वात् । ननुकामस्संसारइतिचेत् न । सो

पत्यातेनकुतोपत्यशतवत्यभवन्नसा ॥ सत्सुदारेषुनाभेस्सपुत्रंकस्मादजीजनत् ॥ २९६ ॥ अत
स्सभरणाद्भर्तासाभार्याभ्रियतेयतः ॥ तत्तयोर्नित्यसुखिनोर्नसंसारोस्त्यदुःखिनोः ॥ २९७ ॥
दुःखमेवहिसंसारोदुःखहेतुत्वतोपरं ॥ उपचारेणसंसारोनदुःखंनापिदुःखदा ॥ २९८ ॥

पि कामितपदार्थालाभेदुःखहेतुतयास्तुवासंसारः । सत्यकामत्वेतुकामोपिमुक्तत्वसाधकएव । परिपूर्णस्यहरेःसोपिनलक्ष्म्यामित्या
ह ॥ पत्येति ॥ यदितस्यांरमते तर्हिपत्याभर्त्रा तेननारायणेन तत्सकाशादितियावत् । सालक्ष्मीः । कामाद्रमणाभावेनिमित्तांत
रंचाह ॥ सत्स्विति ॥ सःनारायणःपुत्रंब्रह्माणं । अजीजनत्जनयामास ॥ २९६ ॥ अतः कामितयारमणाभावात् स नाराय
णः भरणात्पोषणात् । यतःभ्रियतेपोष्यते अतःसाभार्येतिसंबंधः । संसाराभावसाधनमुपसंहरन्नेवयुक्त्यंतरंचाह ॥ तदित्या
दिना ॥ तयोर्लक्ष्मीनारायणयोः ॥ २९७ ॥ हियस्माद्दुःखमेवसंसारः । अपरं प्राकृतशरीरादिकं दुःखहेतुत्वतः उपचारेणसंसा

रइत्युच्यते । लक्ष्मीश्चनदुःखंदुःखरूपानेतियावत् । दुःखदानापि । दुःखहेतुर्नेत्यर्थः । साभार्यालक्ष्मीः केननिमित्तेन संसारः संसाररूपा । युक्तिस्तुपूर्वोक्तैवद्रष्टव्या । स्त्रीत्वेनसंसृति स्संसाररूपातर्हिपुंस्त्वाच्चमुक्तोपिसंसारःसंसाररूपइतिहेतोस्तवमुक्तिर्गते तिसंबंधः ॥ २९८ ॥ २९९ ॥ कलत्रसंपत्तेस्संसारत्वंप्रतिबंद्यादूषयति ॥ कलत्राणीति ॥ इहलोकेकलत्राणीवमित्राणि भवाय संसारायभवंतिहि । मुक्तौमित्रसंपत्तिश्चेदस्ति तर्हिस्त्रीसंपत्तिःकुतस्तेमते नेतिसंबंधः ॥ ३०० ॥ ननुरागाभावात्मित्रसंपत्तिर्नसं

**साभार्याकेनसंसारोयदिस्त्रीत्वेनसंसृतिः ॥ तर्हिपुंस्त्वाचसंसारइतिमुक्तिर्गतातव ॥ २९९ ॥ कलत्राणी वमित्राणिभवायेहभवंतिहि ॥ मुक्तौचेन्मित्रसंपत्तिस्स्त्रीसंपत्तिःकुतोनते ॥ ३०० ॥ रागाभावेनयाशांति स्सादेवीदेवयोस्समा ॥ अतःकलत्रशून्यस्यगुरोर्वाक्येभरंत्यज ॥ ३०१ ॥ उन्नयोर्जितधर्मेणभार्याचसहध र्मिणी ॥ ३०२ ॥ सततोर्ध्वगतिर्नृणांमहाक्लेशकरीतव ॥ मुक्तौस्याचेत्सुखकरीभार्याकेनभयंकरी ॥ ३०३ ॥**

सारायेत्यतआह ॥ रागाभावेनेति ॥ याशांतिर्दोषपरिहाररूपा । साशांतिर्देवीदेवयोर्लक्ष्मीनारायणयोस्समा । नारीदर्शनेकथं नरागइतिचेत्मित्रदर्शनेकथंनरागइतिसमं । अलौकिकरूपत्वान्मित्रदर्शनेपिनरागश्चेत्समंकलत्रेपि । कलत्रशून्यस्येत्यनेनस्वयंनष्टः परान्नाशयतीतिन्यायावतारंसूचयति ॥ ३०१ ॥ तदुक्तमोक्षस्वरूपंदूषयन्नेवभार्यासंपत्तेर्दोषत्वंदूषयति ॥ सततेति ॥ तवमते मुक्तौसुखकरीस्याच्चेदितिसंबंधः। तर्हिभार्यापि केननिमित्तेनभयंकरी । तथाचमुक्तौसततोर्ध्वगतिवद्भार्याप्यंगीकार्येतिभावः॥३०२॥ ॥ ४५ ॥

॥ ३०३ ॥ वृथेत्यनेन वेदादिनिंदनंमहादोषकरं मत्सरादेवेतिसूचयति ॥ ३०४ ॥ अतइत्युपसंहारः । ननुवैदिकमर्यादांगीका रिणामपिभवतांकुतःपरस्परंकलहइत्यतआह ॥ वैदिकानामिति ॥ अस्फूर्तितइत्युपलक्षणं । विपरीतस्फूर्तितइत्यपिग्राह्यं । कल हशांतिस्तुब्रह्ममीमांसोक्तरीत्यासम्यगुपक्रमादीनांनिर्णयेसतिस्यात् । अतएवमध्वभाष्योपरिनभाष्यमितिभावः॥३०५॥ तर्हिमांप्रति सर्वेभवदादयएकीभूयकुतोविवदंतइत्यतआह ॥ क्वचिदिति ॥ सदसतोः प्रशस्ताप्रशस्तयोर्वादिनोः । तदनुभावयति ॥ सुरासु

**वृथावेदेषुदेवेषुसत्सुयज्ञादिकारिषु ॥ नमत्सरंकुरुमहादोषमीषत्पराकुरु ॥ ३०४ ॥ अतोवैदि कमर्यादैवांगीकार्याविवेकिना ॥ वैदिकानांतुकलहोवेदार्थास्फूर्तितःपरं ॥ ३०५ ॥ क्वचित्सद सतोश्चैकीभावःस्थानैक्यतोभवेत् ॥ सुरासुरास्सुधार्थेप्राङ्नैकीभूताःकिमंबुधौ ॥ ३०६ ॥ त्यक्तै कमत्यरूपैक्यान्निघ्नंतिबलिनोऽबलान् ॥ यथापुरंदरःपूर्वदेवान्देवर्षिहर्षकृत् ॥ ३०७ ॥ प्रतिप क्षीसद्दक्षःस्यात्प्राचोनीचोनवैभवेत् ॥ कालात्ययापदिष्टस्यनोचेत्सत्प्रतिपक्षता ॥ ३०८ ॥**

राइति ॥ यद्वामहाप्रमाणभूतोवेदःसदसतोःकथमापाततोप्यनुकूलइत्यतआह ॥ क्वचिदिति ॥ योजनातुपूर्ववत् । दैत्यानाम मृताशया देवैस्सहैकवासइव स्वेषामप्युपकारस्स्यादितिदुराशयास्मदेकानुकूलेवेदेपरेषामपिप्रवेशः । वस्तुतस्तुदेवानामेवामृतमि वास्माकमेवानुकूलोवेदइतिभावः । यद्वा वेदोक्तयज्ञकर्तव्यत्वादौउभयोस्संमत्यात्वयासहविवादइतिभावः ॥ ३०६॥ क्वचित्स्था नेएकीभूताएव मत्यैक्याभावे पुनर्विवदंतइत्येतदपिदेवासुरदृष्टांतेनैवदर्शयति॥त्यक्तेति॥३०७॥ननुतथापिसतामसतांचवैदिकत्वेन

साम्यात्तत्ववादिनाभवता मायावादीजेतुमशक्यइत्यतआह ॥ प्रतिपक्षीति ॥ प्रतिपक्षीप्रतिवादी । सदृक्षःसदृशः । तत्ववादिवत्निरवकाशतयावेदार्थवादीतियावत् । प्राचःश्रेष्ठस्य निरवकाशार्थवादिनइतियावत् । नीचःअपकृष्टः सावकाशपूर्वोत्तरविरुद्धार्थवादी । तदनंगीकारेबाधकमाह ॥ कालात्ययापदिष्टस्येति ॥ नोचेत्सदृशः ( एव ) प्रतिपक्षीनोचेत् । कालात्ययापदिष्टस्य सत्प्रतिपक्षतास्यात् । नीचस्यापिप्रतिपक्षत्वे वह्निरनुष्णःपदार्थत्वा दित्यनुमानस्यापि वह्नेरुष्णत्वग्राहिस्पार्शनप्रत्यक्षंप्रतिवा तदनुगृहीतप्रबलानुमानंप्रतिवा सत्प्रतिपक्षतास्यात् । तथाचकालात्ययापदिष्टस्योच्छेदःस्यादितिभावः ॥ ३०८ ॥ ननुमाया

महत्त्वंचगुणेनैवनाकारेणधनेनवा ॥ सावकाशैक्यवाक्यानिबाधतेकिंनभेदवाक् ॥ ३०९ ॥
मानत्वस्यस्वतस्त्वेनसा नाऽतत्वंवदेत्कचित् ॥ दोषश्चवेदे नाऽनादौबाधोप्यन्यार्थतैव तत् ॥३१०॥

वादिनामपिबहुग्रंथकर्तृत्वात्तत्ववादिसाम्यमित्यतआह ॥ महत्वंचेति ॥ गुणेनैव युक्त्यादिगुणेनैव । गुणवतएवमहत्त्वमुपपादयति ॥ सावकाशेति ॥ निरवकाशत्वगुणवती भेदवागेकैव सावकाशैक्यवाक्यानि नबाधतेकिं । बाधतएव । सावकाशैक्यवाक्यानीत्यनेननिरवकाशत्वाभावं बहुत्वं नानार्थानुकूलत्वंचध्वनयति । तथाचनिरवकाशभेदवाक्यस्ययथामहत्त्वंसावकाशैक्यवाक्यस्य निरवकाशत्वलक्षणगुणाभावेनामहत्त्वंच तथा युक्तिरहितबहुग्रंथकर्तृणांमायावादिनांनमहत्त्वं । सयुक्तिकग्रंथकर्तृणांतत्ववादिनामेवमहत्त्वं । अतोनवैदिकत्वमात्रेणोभयोस्साम्यमितिभावः ॥ ३०९ ॥ ननुमिथ्याभूतमेवाभेदं भेदवाग्वदतीत्यत

आह ॥ मानत्वस्येति ॥ भेदवाक्यजनितभेदज्ञानस्य यन्मानत्वं तद्वतितत्प्रकारकत्वलक्षणप्रमाणत्वं तस्यस्वतस्त्वेन दोषाभावे ज्ञानकरणमात्रजन्यत्वेनेत्यर्थः । साभेदवाक् अतत्वं मिथ्याभूतभेदरूपार्थं क्वचिदपिनवदेत् । आवयोर्मतेप्रामाण्यस्यस्वतस्त्वेनौत्सर्गिकत्वात् भेदवाक्यजनितंज्ञानमुत्सर्गतःप्रमैवभवेत् । अतस्तद्विषयोभेदोपिविद्यमानएवभवेन्नाविद्यमानइतिभावः । ननु दोषजन्यत्वेनापवादेन वेदवाक्यजन्यज्ञानेप्यप्रामाण्यमित्यतआह ॥ दोषश्चेति ॥ स्पष्टेनिरवकाशेचभेदवाक्ये प्रतिपत्तृदोषासंभवेन वेदरूपकरणदोषात्खलुज्ञाने दुष्टतावाच्या । अनादौवेदेच स नास्तीति वेदजन्यभेदज्ञानंप्रमैवेतिभावः । ननु भवतैवैक्यवाक्यस्यबाधउक्तः । तत्कथंनवेदस्यदुष्टत्वमित्यतआह ॥ बाधोपीति ॥ तत् वेदस्यसर्वथाऽप्रामाण्यरूपदुष्टत्वासंभवात्आपातप्रतीतविरुद्धार्थप्रच्यावनेनाविरुद्धार्थताकल्पनमेवबाधो नसर्वथाऽप्रामाण्यमेवेतिभावः । एतेन भेदवाक्यप्रतीतभेदव त्प्रामाण्यस्यस्वतस्त्वादेवैक्यवाक्यप्रतीतमैक्यमपितत्वंस्यादितिशंकापरास्ता । पूर्वोत्तरविरुद्धस्य अतएव वाक्यतात्पर्यापरिज्ञानात्त्वयैवभ्रांत्याप्रतिपन्नस्य त्वदैक्यस्य वाक्यार्थत्वस्यैवाभावात् । सावकाशेस्मिन्योग्यस्यैवकस्यचिदैक्यस्य तदर्थत्वाच्च । नहिसिंहोदेवदत्तइतिवाक्यादापातप्रतीतंसिंहदेवदत्तस्वरूपैक्यंवाक्यार्थइत्युच्यते । किंतुतयोस्सादृश्यैक्यमेव । तत्रचतद्वाक्यस्यप्रामाण्यवत् ऐक्यवाक्यस्यापि विरुद्धतयायोग्यतारहितत्ववदैक्येप्रामाण्यायोगेन जीवब्रह्मणोस्सादृश्यैक्यएवप्रामाण्यमिति स्वतस्त्वेनात्रापिप्रामाण्यनियमात्यागात् । भेदवाक्येतु अर्थांतरेप्रामाण्यासंभवात्भेदरूपार्थएव स्वतस्त्वबलात्प्रामाण्यमिति नभेदवाक्यस्यैक्य

प्रतिबंदीतिभावः ॥ ३१० इतिबौद्धवादः ॥ ७ ॥ ननुकिमिदंज्ञानप्रामाण्यस्यस्वतस्त्वंनामेत्यतआह ॥ दोषादीति ॥ आदि पदेनअप्रामाण्यनिश्चयग्रहणं । दोषाद्यप्रतिरुद्धेन ज्ञानग्राहकसाक्षिणा ज्ञानमानत्वनिर्णीतिनियमो नोस्माकंमते स्वतस्त्वमितिसं बंधः । अतिदूरत्वादिदोषदशायां ज्ञानस्यैवाग्रहणदशायां ज्ञानग्राहकज्ञानपदादिनाच प्रामाण्याऽग्रहणाद्बाधस्यादित्यतआद्यं विशेषणद्वयंसाक्षिपदंच । अनुव्यवसायमात्रेणापिप्रामाण्यग्रहणमात्रस्यद्वितीयानुव्यवसायेनप्रामाण्यनिर्णयस्यचपरेणाप्यंगीका

दोषाद्यप्रतिरुद्धेनज्ञानग्राहकसाक्षिणा ॥ स्वतस्त्वंज्ञानमानत्वनिर्णीतिनियमोहिनः ॥ ३११ ॥
अतोदूरस्थवृक्षादिज्ञानेज्ञातेपियत्पुनः ॥ प्रामाण्यसंशयस्तत्रतदस्माकंमतेभवेत् ॥ ३१२ ॥
यतोदूरत्वदोषेणस्वगृहीतेनकुंठितः ॥ ननिश्चिनोतिप्रामाण्यंतत्रज्ञानग्रहेपिसः ॥ ३१३ ॥
देशस्याविप्रकर्षोहिदूरत्वंसचसाक्षिणा ॥ गृहीतुंशक्यतेयस्मादाकाशोऽव्याकृतोह्यसौ ॥ ३१४ ॥

रात्सिद्धसाधनतास्यादित्यतोनिर्णीतिपदंनियमपदंच ॥ ३११ ॥ दोषाद्यप्रतिरुद्धेनेतिविशेषणग्रहणा दिदंसिद्धमित्याह ॥ अतइ ति ॥ तत्र वृक्षादिज्ञाने । तत्प्रामाण्यसंशयरूपज्ञानं ॥ ३१२ ॥ कुतोभवेदित्यतआह ॥ यतइति ॥ दूरत्वदोषेण दूरस्थवस्तुवि षयत्वरूपदोषेणेत्यर्थः । स्वेन साक्षिणा गृहीतेन । तत्र दूरस्थवृक्षादिज्ञाने । सः साक्षी ॥ ३१३ ॥ ननुवस्तुनोदूरस्थत्वंकथंसाक्षि वेद्यमित्यतआह ॥ देशस्येति ॥ विप्रकर्षःसामीप्याभावः । सः देशविप्रकर्षः । असौविप्रकृष्टदेशःअव्याकृताकाशोहीतिसंबंधः।



आकाशस्यसाक्षिवेद्यत्वमंधकारेपिहस्तप्रसारणादिनाउपपादितमन्यत्र ॥ ३१४ ॥ दोषशंकाकलंके साक्षी अन्यत्रापिप्रामाण्यंन गृह्णातीत्याह ॥ काचादीति ॥ एकत्र स्वकरतलरेखादिज्ञाने । तत्कार्यानुमितं दोषकार्येणा स्पष्टतयोल्लेखेनानुमितं । अन्यत्र घटपटादिज्ञानांतरे । ज्ञानमात्रग्रही ज्ञानमात्रस्यग्रहोस्यास्तीतिज्ञानमात्रग्रही । नप्रामाण्यग्रहीतिभावः ॥ ३१५ ॥ ननुसर्वत्रसा क्षिणैवप्रामाण्यग्रहे यदावस्तुगत्याप्रामाण्याभाववतिक्वचिद्ज्ञानेप्रामाण्यनिश्चयोजायतेसोपिकिंसाक्षिणैव नेत्याह ॥ विपर्ययेपी ति ॥ विपर्यये प्रामाण्याभाववतिप्रामाण्यनिश्चयस्थानइतियावत् । दूरत्वपूर्वदोषानुदर्शनात् दूरत्वपूर्वदोषप्रतिरोधेनेतियावत् ।

काचादिदोषेचैकत्रतत्कार्यानुमितंपुनः ॥ यदान्यत्रानुसंधत्तेज्ञानमात्रग्रहीतदा ॥ ३१५ ॥
विपर्ययेपिदूरत्वपूर्वदोषानुदर्शनात् ॥ उदास्तेचतुरस्साक्षीप्रामाण्यग्रहणेकिल ॥ ३१६ ॥
तदारागादिदोषेणकलुषंचचलंमनः ॥ गृह्णातितत्रप्रामाण्यमर्थग्रहणकातरः ॥ ३१७ ॥

चतुरः चेतनत्वेनविवेकी अप्रमायांप्रामाण्यग्रहणेममायाथार्थ्यस्यादितिविवेकवानित्यर्थः । प्रामाण्यग्रहणेउदास्तेकिलेतिसंबंधः । अप्रतिबद्धसाक्षिग्राह्यत्वनियमस्यैवस्वतस्त्वेनोक्तत्वात् अत्रतुप्रतिबंधकदोषसद्भावात् साक्षिणाप्रामाण्याग्रहेपि नस्वतस्त्वहानिरि तिभावः ॥ ३१६ ॥ केनतर्हितत्रप्रामाण्यभ्रमइत्यतआह ॥ तदेति ॥ तदा साक्षिणऔदासीन्यसमये । रागादिदोषेणकलुषं चं चलं अर्थग्रहणकातरमितिच मनसोहेतुगर्भविशेषणत्रयं । वस्तुगत्याराजताभावे रजतेरागवशात्तज्ज्ञानेप्रामाण्यंनिश्चिनोतीतिहेतोः

चंचलमितिच विकल्पात्मकत्वेनभ्रमशीलत्वहेतोः सुखदुःखादीनांसर्वेषांप्रत्यक्षायोग्यांतरपदार्थानां साक्षिणैवग्रहणात् ममकदा कोवाअर्थःस्यादित्यर्थग्रहणे अत्यंतोत्कंठायुक्तत्वस्यचहेतोः सूचनात् । तव वस्तुगत्याअप्रमाभूतेज्ञाने । अतिक्षुधितःपुरुषःसदन्नालाभेकदन्नमिव विवेकिना स्वमरणभियात्यक्तंसर्पं मरणशंकाशून्योमौढ्यात्स्पृशन्बालकइवच विपरीतमपीममर्थंगृह्णातीति भावः । ननुकुतएतत्कल्प्यतइतिचेत्साक्षिणोयाथार्थ्यनियमाभावे क्वचिद्व्यभिचरितार्थविषयत्वेच तद्गृहीतसुखदुःखादौकदाचिद्वैपरीत्यमपिस्यात् । अतस्साक्षिणोयाथार्थ्यनियमस्यावश्यंभावाद्व्यभिचरितस्यास्यप्रामाण्यनिश्चयस्यागत्यामानसत्वस्यैव वक्तव्य

समीपस्थपदार्थानांचक्षुरादींद्रियैश्शुभैः ॥ ग्रहणेज्ञानयाथार्थ्यग्रहेतस्याग्रहोमहान् ॥ ३१८॥
स्वतःप्रामाण्यवादेतन्नकाप्यनुपपन्नता ॥ यथानुभूतसर्वार्थवादिनांतत्ववादिनां ॥ ३१९ ॥

त्वात् ॥ ३१७॥ तर्हिंक्वसाक्षीप्रामाण्यंगृह्णातीत्यतआह ॥ समीपस्थेति ॥ ग्रहणे ज्ञातेसतीतिशेषः । तदातज्ज्ञानंगृह्णतःसाक्षिणःतत्रज्ञानयाथार्थ्यग्रहे महानाग्रहो नियमइत्यर्थः । प्रतिबंधकदूरत्वादिदोषाभावादितिभावः ॥ ३१८ ॥ तत्तस्मा त्समीपस्थार्थविषयकज्ञानेष्वेव प्रामाण्यनिश्चयनियमांगीकारात्यथानुभूतसर्वार्थवादिनांतत्ववादिनां स्वतःप्रामाण्यवादइतिसंबंधः । यथानुभूतेत्युक्त्या दूरस्थज्ञानेप्रामाण्यसंशयस्य समीपस्थपदार्थज्ञानेतदभावस्यच सर्वानुभवसिद्धत्वंस्फोरयति । काप्यनुपपन्नतानेतिसंबंधः । सर्वत्रप्रामाण्यनिश्चयंवदतांमीमांसकानामिव नास्माकंप्रामाण्यसंशयाद्यनुपपत्तिरितिभावः ॥ ३१९ ॥

समीपस्थपदार्थज्ञानेष्वपिसाक्षिणाप्रामाण्यनिश्चयानंगीकारेबाधकमाह ॥ नचेदिति ॥ समीपस्थार्थज्ञानेष्वपिप्रामाण्यनिश्चयोनचे
त् नवेषु नूतनतयादृष्टेष्वित्यनेन तज्ज्ञाने गृहीतप्रामाण्यज्ञानजातीयत्वरूपस्यपराभिमतस्य प्रामाण्यानुमापकस्याभावंसूचयति ।
गृहेस्थितेष्वेव नतुभुक्तेष्वित्यनेन समर्थप्रवृत्तिजनकत्वरूपलिंगाभावंसूचयति । निर्णयोनस्यादितिसंबंधः । उक्तरीत्याप्रामाण्यानु
मापकलिंगद्वयस्यात्राभावेन साक्षिणाप्येतज्ज्ञानप्रामाण्यानिश्चये प्रामाण्यसंशयाहितार्थसंशयस्याप्यवश्यंभावेनोक्तोयमर्थनिर्ण

नचेत्तंडुलपानीयवस्त्रभार्यासुतादिषु ॥ गृहस्थितेषुगृहिणोनवेषुस्यान्ननिर्णयः ॥ ३२० ॥ शिशुः
किंजातमात्रोंबास्तनंसंदिह्यचुंबति ॥ पशुश्चनवघासादौनविश्वसितिकिंवने ॥ ३२१ ॥ अनानु
भविकीसर्वत्रापिसंदिग्धतानृणां ॥ विनोन्मत्ताश्शिरःपित्तिपिशाचग्रस्तचेतनान् ॥ ३२२ ॥ अ
नभ्यासदशापन्नसमीपस्थे नसंशयः ॥ नतत्रतद्धीमानत्वेप्यस्तिकस्यापिसंशयः ॥ ३२३ ॥

योनस्यात् । अस्तिचात्रार्थनिर्णयः । अतस्साक्षिणाज्ञानप्रामाण्यंनिर्णेयमितिभावः ॥ ३२० ॥ ननु प्रामाण्यानुमानात्प्राक्सर्व
त्रार्थानिर्णयएवास्तुकोदोषइत्यतआह ॥ शिशुरिति ॥ जातमात्रइत्यनेन समर्थप्रवृत्तिजनकत्वादिलिंगाभावंसूचयति ॥३२१॥ उ
न्मत्तश्च शिरःपित्तीच पिशाचग्रस्तचेतनश्च तान्विना सर्वत्रार्थज्ञानेच संदिग्धता संदेहविषयता अनानुभविकीतिसंबंधः ॥३२२॥
तदेवविशदयति ॥ अनभ्यासेति ॥ अर्थइतिशेषः । तद्धीमानत्वे तस्यासंदिग्धार्थस्य याधी स्तन्मानत्वे ॥ ३२३ ॥ अर्थसंश

युक्ति- याभावेपि ज्ञानप्रामाण्यसंदेहः कुतोनस्यादित्यतआह ॥ एवंचेति ॥ एव मुक्तरीत्यासर्वार्थसंदेहस्यानानुभविकत्वेनेत्यर्थः । न मलिका
॥ ४९ ॥ न्वर्थसंदेहाभावेपि ज्ञानमानत्वसंशयोस्तु किंबाधकमित्यतआह ॥ यतइति ॥ यतस्तत्संशयोपि ज्ञानप्रामाण्यसंशयोपि अर्थसं गुणसौ०
शयेपर्यवस्यति अतइतिसंबंधः । अतःप्रामाण्यसंशयस्यार्थसंशयस्यच अंततएकविषयत्वादर्थनिश्चयेप्रामाण्यनिश्चयोप्यवर्जनीय
एवेतिभावः । तथाहि प्रामाण्यंनाम तद्वतितत्प्रकारकज्ञानत्वं तत्रतत्प्रकारकत्वांशेनकस्यापिमतेसंशयः । किंतुतद्वद्विशेष्यकत्वएव
संशयोवाच्यः । सोपितद्वत्त्वएवपर्यवस्यति । तद्वत्तासंशयोऽर्थसंशयइत्यनर्थांतरं । तथाच समीपस्थतंडुलपानीयादिषुअर्थनि

एवंचार्थेष्वसंदेहान्मानत्वेपिनसंशयः ॥ यतस्तत्संशयोप्यर्थसंशयेपर्यवस्यति ॥ ३२४ ॥
अयोग्यंमनसोमानत्वंचेत्तत्संशयःकुतः ॥ स्वायोग्यगंधेसंदेहश्चक्षुषाक्वस्यजायते ॥ ३२५ ॥

श्चयनियमात्नियमेनज्ञानप्रामाण्यनिश्चयोप्यावश्यकएव । सच समर्थप्रवृत्तिजनकत्व गृहीतप्रामाण्यज्ञानजातीयत्वयोः पराभि
मतलिंगयोरभावेन साक्षिणैववाच्यइतिकथं नास्मदुक्तप्रामाण्यस्वतस्त्वं ॥ ३२४ ॥ साक्षिमनसोरंतरिंद्रियत्वेन प्रामाण्यस्यमनो
योग्यत्वेसाक्षियोग्यत्वमपिसेत्स्यतीत्याशयेनमनोवेद्यत्वंतावत्समर्थयते ॥ अयोग्यमिति ॥ ज्ञानप्रामाण्यं मनसःअयोग्यंचेदिति
संबंधः । तर्हितत्संशयः प्रामाण्यसंशयः कुतःस्यात् नकुतश्चित् । मनोव्यतिरेकेण प्रामाण्यसंशयजनककरणाभावात् । साक्षि ॥ ४९ ॥
णःयाथार्थ्यनियमेनसंशयकरणत्वायोगात् । ननु मनसागृहीतुमयोग्येपिप्रामाण्ये संदेहस्तेनजायतांकोदोषइत्यतआह ॥ स्वायो

ग्येति ॥ स्वायोग्येगंधे चक्षुषागृहीतुमयोग्येगंधे । एवंच प्रामाण्यस्यमनोयोग्यत्वे साक्षियोग्यत्वंसुतरांसेत्स्यतीतिभावः । एतेन
क्वचित्प्रामाण्यभ्रमोमनसाजायतइत्येतदपिसमर्थितं । नन्वेवंसति सर्वत्रमनसैवप्रामाण्यस्यग्रहोस्तु किंसाक्षिवेद्यत्वांगीकारेणेति
चेत् न । मनसा क्वचिदप्रमायामपिप्रामाण्यग्रहेण सर्वत्रतेनैवप्रामाण्यग्रहणेऽनाश्वासप्रसंगेन प्रमारूपज्ञानेषुगृहीततत्तत्प्रामाण्ये
आश्वासाय नियमेनयथार्थस्य प्रामाण्यग्राहकस्य साक्षिणोवश्यमपेक्षितत्वात् । सुप्तिदशायामंगनालिंगनसर्पापसर्पणयोःफलत्वा
दर्शनेनउपरतमनस्कस्यपुंसःसौषुप्तिकस्यसुखस्यदुःखाभावस्यचानुभवायसाक्षिणएवावश्यकत्वाच्च । दोषेणकुंठितगतिःसाक्षी
तदभावे चेतनत्वेनतीव्रगतिःस्वविषयंज्ञानप्रामाण्यंसुखमिवस्वयमेवादौगृह्णातीतिपुनर्मनसस्तत्रानवकाशाच्च । ननुतद्वतितत्प्रका
रकत्वलक्षणज्ञानप्रामाण्यस्य तद्वत्तारूपबाह्यार्थघटितत्वेन साक्षिमनसोर्बहिरस्वातंत्र्यात्भवद्भिरपिज्ञानद्वारैवतद्विषयीकरणंवक्त
व्यंनतुसाक्षात् । तथाचकथंप्रामाण्यस्यमनस्साक्षियोग्यत्वमितिचेत् तर्हिसाक्षाद्विषयएवयोग्योनपरंपराविषयइत्युक्तंस्यात् ।
तथासति योगजधर्मप्रत्यासत्त्यामुनिभिर्ज्ञातसकलपदार्थानांतदिंद्रियायोग्यत्वप्रसंगेतेषामसर्वज्ञताप्रसंगात् । अश्वद्वाराग्रामंगत
स्यराज्ञोग्रामगामित्वंचनस्यात् । अतस्साक्षात्परंपरयावातदुल्लेख्यंवस्तुतद्योग्यमेवेतिवक्तव्यं । अस्तुतर्हिपरंपरयाज्ञातबाह्यपदार्थो
नामपिमनस्साक्षियोग्यता । अन्यद्वाराज्ञातेषुतेषुसाक्षीकथमर्थसत्तानिश्चयरूपइतिचेत् । न । योगजधर्मद्वारासर्वार्थनिश्चायकयोगीं
द्रियवदेवोपपत्तेः ॥ ३२५ ॥ ननु साक्षिणाघटत्वप्रकारकत्वोल्लेखेक्रियमाणे प्रकारित्वमात्रस्यसाक्षादुल्लेखेपि प्रतिसंबंधिभूतघटत्वं बाह्य

पदार्थत्वात्व्यवसायद्वारैवोल्लिख्यते। तथाचव्यवसायद्वारोपनीते प्रतिसंबंधिभूतघटत्वे घटत्वंपटत्वंवेतिकुतोनसंशयः। घटादेस्स्थै
र्यस्थापकप्रत्यभिज्ञाप्रत्यक्षस्यच उपनीततत्तांशे कथमर्थसत्तानिश्चयरूपत्वं। संशयकारणाभावादितिचेत् तर्हितद्वदेवसंशयकार
णाभावेघटत्ववैशिष्ट्यांशमपिसाक्षीनिश्चिनुयादेवेतिसाहित्यमुद्रयाह ॥ उपनीतमिति ॥ निर्णीतिकन्या प्रामाण्यनिर्णयरूपक
न्या निर्णयरूपःसाक्षीतियावत्। निर्णीतिशब्दस्यस्त्रीलिंगत्वात्कन्येत्युक्तं। निर्दोषसाक्षिरूपत्वाद्धन्येत्युक्तं। उपनीतं व्यवसायो
पनीतं। प्रामाण्यमितिशेषः। उपनयनवंतमितिध्वनिः। ज्ञानप्रामाण्यमन्वमन्यत। विषयतयामत्संबंधिकरोमीत्यंगीचकार।
अन्यत्र उदूढंकरोमीत्यंगीकारोध्वनितः। किमर्थमन्वमन्यतेत्यतआह ॥ दोषाभावादिति ॥ व्यवसायगृहीतेषुप्रागुक्तसमीप

**उपनीतंचनिर्णीतिकन्याधन्यान्वमन्यत ॥ दोषाभावाद्विरुद्धार्थकोटेराटोपमोटनात् ॥ ३२६ ॥**

स्थार्थेषुदूरत्वादिदोषाभावात्। अन्यत्राकुलीनत्वादिदोषाभावोध्वनितः। विरुद्धार्थकोटेः प्रामाण्यविरुद्धार्थः अप्रामाण्यं तत्कोटेः
आटोपमोटनात् आटोपःसंभ्रमः। तन्मोटनाच्छेदादभावादित्यर्थः। अन्यत्रविवाहविरोधिनांपुंसांद्रव्यकोटेराटोपमोटनादितिध्व
निः। यथाकन्या अकुलीनत्वादिदोषरहितपुरुषलाभे विवाहविघ्नकारिभिर्दत्तद्रव्यकोटिमप्युपेक्ष्यतंवरयेदेव। एवंसाक्षी दूरस्थत्वादि
दोषरहितवस्तुविषयव्यवसायेनोपनीतमेवप्रामाण्यं दोषजन्यायाःघटत्वाभाववतिघटत्वप्रकारकत्वरूपाप्रामाण्यकोटेरत्रासंभवात्
तांतिरस्कृत्य घटत्ववत्येवघटत्वप्रकारकज्ञानवानहमितिनिश्चिनुयादितिभावः। तथाचायंप्रयोगः। अनभ्यासदशापन्नसमीपस्था

र्थविषयकज्ञानप्रामाण्यं साक्षिणैवप्रतीयते साक्षीतरनिर्णायकाभावेसतिनिर्णीयमानत्वात् घटत्वप्रकारकत्ववदिति ॥३२६॥ नन्वस्तू क्तस्थलेसाक्षिणैवप्रामाण्यावधारणं । तथापि अनभ्यासदशापन्नज्ञानप्रामाण्यं परतोज्ञायते सांशयिकत्वा दप्रामाण्यवदितिपरोक्त प्रतिपक्षानुमानस्यकिंदूषणमित्यतआह ॥ अतइति ॥ अतो स्मदुक्तेषुसाक्षिणानिर्णीतेषुसमीपस्थपदार्थविषयकानभ्यासदशा पन्नज्ञानप्रामाण्येषुसंशयाभावात् एतादृशस्थले सांशयिकत्वहेतोरसिद्धेस्तज्ज्ञानप्रामाण्यपरतस्त्वसाधकोनेतिसंबंधः ॥ ३२७ ॥ कथंतर्हिदूरस्थजलादिज्ञानप्रामाण्येसंशयइत्यतस्तदुपपादयति ॥ दूरस्थइति ॥ दूरस्थवस्तुविषयकानभ्यासदशापन्नज्ञानप्रामा

अतस्सांशयिकत्वाख्यहेतोरेतादृशस्थले ॥ असिद्धत्वान्नमानत्वपरतस्त्वप्रसाधकः ॥ ३२७ ॥ दूरस्थेसंशयो प्यस्तिदोषश्चभ्रमकारणं ॥ यतोऽणुत्वभ्रमोनॄणांमहत्यर्थेपिजायते ॥ ३२८ ॥ तत्रतद्दोषरोधेनप्रामाण्यंप्राङ्गृ ह्यते ॥ ३२९ ॥ विशेषदर्शनाभावाद्द्विकोटिस्मृतिमान्जनः ॥ तदर्थीतत्रसंदिग्धेमनसानतुसाक्षिणा ॥ ३३० ॥

ण्ये यतः भ्रमकारणदूरस्थत्वलक्षणदोषोस्ति । चशब्देन दोषप्रतिरोधात्निर्णायकसाक्ष्यभावंसमुच्चिनोति । अतःसंशयोप्यस्ती तिसंबंधः । दूरस्थत्वस्य दोषतामुपपादयति ॥ यतइति ॥ यतोदूरस्थेमहत्यप्यर्थेऽणुत्वभ्रमोजायते । अतोभ्रमकारणत्वाद्दूर त्वंदोषइतिदोषपदस्यावृत्त्यान्वयः ॥ ३२८ ॥ दोषसत्त्वेपिकुतोननिर्णयइत्यतआह ॥ तत्रेति ॥ तत्र दूरस्थजलज्ञाने तद्दोषरो धेन दूरत्वाख्यदोषरोधेन प्राक्प्रवृत्तेःपूर्वं प्रामाण्यंनगृह्यते । साक्षिणाननिश्चीयतइत्यर्थः ॥ ३२९ ॥ तत्रप्रामाण्यसंशयमुपपाद

यति ॥ **विशेषेति** ॥ द्विकोटी प्रमात्वाप्रमात्वे । एकैककोटिनिर्णायकविशेषदर्शनाभावात्द्विकोटिस्मृतिमान् । तदर्थी जलार्थी तत्र तज्ज्ञानप्रामाण्ये मनसाकरणेन संदिग्धेइदंज्ञानंप्रमानवेतिसंदेहंकुरुते ॥ ३३० ॥ मनसःसंशयहेतुत्वंपुराणप्रक्रिययोपपादयति ॥ **विकल्परूपमिति** ॥ हीत्यनेन संकल्पविकल्पात्मकंमनइतिप्रसिद्धिंसूचयति । ननुसाक्षिणैवसंशयःकुतोनेत्यतआह ॥ **यतश्चेति** ॥ साक्षिवेद्यसुखदुःखेषु यतःसंशयोनास्ति । अतोनसाक्षिणासंदिग्धइतिपूर्वेणान्वयः ॥ ३३१ ॥ ननुसंशयधर्मिभूतंतज्ज्ञानंकथंसाक्षिणागृह्यतइत्यतआह ॥ **ज्ञानमिति** ॥ ज्ञानं प्रामाण्यसंशयधर्मिभूतं । इदंज्ञानंनिर्दोषंचेत् तर्हिइयंप्रमाप्र

**विकल्परूपंहिमनोयतआहुःपुरातनाः ॥ यतश्चसंशयस्साक्षिवेद्यदुःखसुखेषुन ॥ ३३१ ॥ ज्ञानंगृह्णंस्तदासा**
**क्षीनिर्दोषंचेदियंप्रमा ॥ इतिसामान्यतःप्रामाण्यंचगृह्णन्निवर्तते ॥ अत्रसांशयिकत्वाख्यहेतुस्स्यात्सिद्धसा**
**धनः ॥ ३३२ ॥ तत्रसांशयिकत्वेपिकुतोन्यत्रतदग्रहः ॥ दूरस्थेचंचलंचक्षुर्नहिपात्रस्थितोदने ॥ ३३३ ॥**

मितिरितिसामान्यतएवप्रामाण्यंगृह्णन्निवर्तते । सामान्यतोगृह्णन्नित्यनेन प्रामाण्यस्य सामान्यतःकथंचित्यावज्ज्ञानग्राहकसाक्षिवेद्यत्वंवक्तुंशक्यतइतिसूचितं । तत्रतन्निश्चयरूपोनभवतीतिभावः । अत्र दूरस्थवस्तुविषयकानभ्यासदशापन्नज्ञानप्रामाण्ये । सांशयिकत्वहेतुःसिद्धसाधनःस्यात् । तत्रमयापिस्वतस्त्वानंगीकारादितिभावः ॥ ३३२ ॥ ननु दूरस्थजलादिज्ञानप्रामाण्येसंशये प्रामाण्यत्वाविशेषात्समीपस्थज्ञानप्रामाण्येपिसंदेहःस्यादित्यतआह ॥ **तत्रेति** ॥ तत्र दूरस्थजलज्ञानप्रामाण्ये । अन्यत्र समीपस्थवस्तुविषयकज्ञाने तदग्रहः प्रामाण्यानिश्चयःकुतइतिसंबंधः । अत्रार्थांतरन्यासंकरोति ॥ **दूरस्थइति** ॥ दूरस्थेचंचलंचक्षुः पात्रस्थितोदनेचंचलंनहीतिचंचलपदावृत्त्यायोजना । तद्वत्समीपस्थज्ञानप्रामाण्यमपिसाक्षीनिर्णयेदेवेतिभावः ॥ ३३३ ॥ ननु दोषजेज्ञानेअर्थव्यभिचारदर्शनात् सर्वत्रापिज्ञानेअर्थव्यभिचारशंकास्यादेव । अतःकथंसमीपस्थवस्तुज्ञानेप्रामाण्यनिश्चयइत्यतआह ॥ **क्वचिदिति** ॥ सर्वत्र दोषाजन्ये अतएवाव्यभिचारिणिचज्ञाने ॥ ३३४ ॥ कुतोनोचितइत्यतआह ॥**अनुमानत्वेति**॥

**क्वचिज्ज्ञानत्वजातीयेदोषजेऽव्यभिचारिणि ॥ सर्वत्रव्यभिचारित्वशंकापंकोपिनोचितः ॥ ३३४ ॥**
**अनुमानत्वजातीयेदोषजेऽव्यभिचारिणि ॥ किंप्रामाण्यानुमानाच्चतच्छंकीत्वंनिवर्तसे ॥ ३३५ ॥**
**यदिव्याप्त्यादिदार्ढ्येनशंकांधिक्कुरुतेभवान् ॥ तर्हिनिर्दोषतादार्ढ्यात्साक्षीहक्षोभयेद्धितां ॥ ३३६ ॥**
**तत्सन्निकृष्टदृष्टेषुनप्रामाण्यग्रहेभयं ॥ प्रामाण्यग्रहणेशक्तिस्साक्षिणस्स्वेनतेजसा ॥ ३३७ ॥**

तच्छंकी अर्थव्यभिचारशंकी गृहीतज्ञानप्रामाण्यनिश्चयाभाववानितिवा । निवर्तसेकिं । अनुमानेनापिप्रामाण्यनिश्चयंनकरोषिकिं ॥ ३३५ ॥ ननुव्याप्त्यादिदार्ढ्यादनुमानगृहीतप्रामाण्येसमाश्वासःस्यादित्यतआह ॥ **यदीति** ॥ भवान्शंकांधिक्कुरुते शंकांतिरस्कृत्यमनस्समाधानंकरोतीतिभावः । तर्हिममापिसमंसमाधानमित्याह ॥ **तर्हीति** ॥ इह समीपस्थवस्तुज्ञाने तांशंकां ॥ ३३६ ॥ तत्रेत्यादिनोक्तमुपसंहरति ॥ **तदिति** ॥ तत् तस्मात् शंकाकारणाभावात् । सन्निकृष्टानिचतानिदृष्टानीतिविग्रहः ।

युक्ति-
॥ ५२ ॥

प्रामाण्यग्रहे प्रामाण्यनिश्चये । तर्हिक्कचित्परीक्षापेक्षाकुतइत्यतआह ॥ प्रामाण्यग्रहणइति ॥ स्वेनतेजसा स्वसामर्थ्येन ॥ ३३७ ॥ निरोधनाशमात्राय निरोधकदोषशंकानिरासमात्राय नतुप्रामाण्यनिश्चयायेत्यर्थः। क्वापि क्वचित्परीक्षा तद्भोगजन्यसुखानुभवाख्यप्रवृत्तिसामर्थ्यविचारः अपेक्ष्यतइतिसंबंधः । तत्रदृष्टांतः ॥ नदीरुद्धेनेति ॥ नदीरुद्धेन ग्रामंजिगमिषतापुरुषेणनौरिवेति । तदभावे दोषादिप्रतिबंधकाभावे । तदभावेस्वयंपटुरित्यत्रार्थांतरन्यासः ॥ नहीति ॥ राजपथइत्यनेननद्यादिप्रतिबंधकाभावंसूचयति । गंत्रापुरुषेण ॥ ३३८ ॥ मास्तुतर्हिप्रामाण्यनिश्चयंप्रतिपरीक्षापेक्षा । दोषाख्यप्रतिबंधकाभावस्यतुकार

निरोधनाशमात्रायनदीरुद्धेननौरिव ॥ परीक्षापेक्ष्यतेक्वापितदभावेस्वयंपटुः ॥ नहिराजपथेगंत्रागमनेनौरपेक्ष्यते ॥ ३३८ ॥ निरोधकोपिकार्यस्याभावंसंपादयेत्परं ॥ तदभावस्यापिकार्येकारणत्वंनशोभते ॥ ३३९ ॥ रुणद्धियद्धिसामग्रीसत्त्वेप्यभिमतंफलं ॥ बुधैस्तदेवसर्वत्रप्रतिबंधकमुच्यते ॥ ३४० ॥

णतास्यात् । दोषाद्यप्रतिरुद्धत्वस्यभवद्भिरप्यंगीकारादित्यतआह ॥ निरोधकोपीति ॥ कार्यस्य प्रामाण्यनिश्चयरूपस्य । तदभावस्यापि प्रतिबंधकाभावस्यापि ॥ ३३९ ॥ कुतोनशोभतइत्यतआह ॥ रुणद्धीति ॥ यद्वस्तु सामग्रीसत्त्वेपि कारणकलापसत्त्वेऽपि । अभिमतंफलं दाहादिकं । तदेव रोधकमण्यादिवस्त्वेव सर्वत्र सर्वकार्येषु । तथाचप्रतिबंधकाभावस्यनकारणसामग्र्य प्रवेशः । तस्यापिकारणसामग्र्यांप्रवेशे सामग्र्यभावेनैवकार्याभावात्सामग्रीसत्त्वेप्यभिमतफलरोधकत्वलक्षणंप्रतिबंधकत्वं प्रति

मल्लिका
गुणसौ०
॥ ५२॥

बंधकाभिमतस्यनस्यादितिभावः ॥ ३४० ॥ तदुपपादयति ॥ उष्णस्पर्शेति ॥ उष्णस्पर्शभरेण स्वयमेवदग्धुंशक्तःपावकोमं त्रादिप्रतिबद्धस्तुनदहेत् । अन्यदा मंत्रादिप्रतिबंधकाभावे उष्णस्पर्शभरेणैवदहेद्धीतिपूर्वपदावृत्त्यायोजना ॥ ३४१ ॥ ननु स तिपुष्कलकारणेकार्याभावसंपादकत्वंप्रतिबंधकत्वमितिप्रतिबंधकलक्षणंचेत् स्यादेवप्रतिबंधकाभावस्यकारणकोटावप्रवेशः । का रणीभूताभावप्रतियोगित्वंप्रतिबंधकत्वमितिपक्षे कथमुक्तोदोषइत्यतस्तल्लक्षणंदूषयति ॥ यदिति ॥ यद्यस्मात्कारणात् प्रागभा वा त्स्वप्रागभावात् उदयन्नुत्पद्यमानः नस्वनिरोधकृत् स्वप्रतिबंधकोनेतिसंबंधः । नहिस्वकारणीभूतस्वप्रागभावप्रतियोगीघटः

उष्णस्पर्शभरेणोग्रश्शक्तोदग्धुंहिपावकः ॥ मंत्रादिप्रतिबद्धस्तुनदहेदन्यदादहेत्
॥ ३४१ ॥ यत्प्रागभावादुदयन्घटोनस्वनिरोधकृत् ॥ यतस्तंतुविनाशेनपटनाशे
नतंतुषु ॥ तद्रोद्धृता यतश्चेशोनित्यःक्ष्मापातरोधकृत् ॥ ३४२ ॥

प्रतिबंधकइत्युच्यतेलोकैः । तथाचत्वदुक्तलक्षणंघटेऽतिव्याप्तमितिभावः । स्थलांतरेप्यतिव्याप्तिंदर्शयति ॥ यतइति ॥ यतो यस्मात्कारणात् । तंतुनाशेनपटनाशेजायमानेसतिपटनाशकारणीभूताभावःतंतुनाशस्तत्प्रतियोगित्वंतंतुष्वस्तीतिहेतोः तंतूनां तद्रोद्धृता पटनाशरोद्धृतानेतिसंबंधः । तंतुषुसत्स्वेवतंतुसंयोगनाशजन्यपटनाशस्यजायमानत्वेन तंतूनांपटनाशंप्रत्यप्रतिबंधक त्वात् । तथाचपटनाशकारणीभूततंतुध्वंसप्रतियोगिषु पटनाशाप्रतिबंधकेषुचतंतुष्वतिव्याप्तंपरोक्तलक्षणमितिभावः । अतिव्या

प्तिमुक्ताऽव्याप्तिमप्याह ॥ यतश्चेति ॥ नित्यइत्यनेनकारणीभूताभावप्रतियोगित्वमीश्वरस्यनास्तीतिद्योतयति । क्ष्मापातरोध कृत् कूर्मरूपेणाप्सुभूपतनप्रतिबंधकृत् । तथाचभूपतनप्रतिबंधकेत्वदुक्तलक्षणाभावादव्याप्तिरितिभावः ॥ ३४२ ॥ अतः अव्या प्त्यतिव्याप्त्यादिदोषग्रस्तत्वादित्यर्थः । पूर्वोक्तैव रुणद्धीतिपूर्ववाक्योक्तैव ॥ ३४३ ॥ ननु सामग्रीविघटकमदृष्टंप्रतिबंधकमित्यु च्यते । तत्रसतिपुष्कलकारणेकार्याभावसंपादकत्वस्यभवदुक्तलक्षणस्याप्यव्याप्तिरित्यतआह ॥ मण्यादिरिति ॥ हेतोः कार णकलापस्य विघटकं यददृष्टं तत्त्वमुख्यंप्रतिबंधकं । कार्याजकसामग्रीसंघटनप्रतिबंधद्वारापरंपरयाकार्यप्रतिबंधनात् । तत्तस्मा

अतोनकारणीभूताभावस्यप्रतियोगिता ॥ प्रतिबंधकता किंतुपूर्वोक्तैवसतांमता ॥ ३४३ ॥ मण्यादिर्मुख्य तोरोद्धातस्यैवादर्शिलक्षणं ॥ हेतोर्विघटकादृष्टंत्वमुख्यंतन्नलक्षितं ॥ ३४४ ॥ प्रतिबंधकमण्यादेरभावोयदिका रणं ॥ कारणाभावतस्तर्हिकार्याभावोभविष्यति ॥ ३४५ ॥ प्रतिबंधकताप्यत्रमण्यादेर्भण्यतेकुतः ॥ ३४६ ॥

न्मुख्यप्रतिबंधकत्वाभावान्नलक्षितं लक्षणवत्तयानप्रदर्शितं । मण्यादिस्तुसाक्षात्कार्यप्रत्येवप्रतिबंधकत्वेनमुख्यप्रतिबंधकत्वात्त स्यैवलक्षणमुक्तमितिभावः । नहिमुख्यगंगालक्षणंवदंतोऽमुख्यंतीरमपिसंगृह्णंतीतिभावः ॥ ३४४ ॥ मण्यभावस्यापिदाहकार णत्वे मणेःप्रतिबंधकत्वकथैववृथेत्येतत्सदृष्टांतमुपपादयति ॥ प्रतिबंधकेति ॥ प्रतिबंधकश्चासौमण्यादिरितिविग्रहः । कारणा भावतः प्रतिबंधकाभावाख्यकारणाभावतः कार्याभावः दाहलक्षणकार्याभावः ॥ ३४५ ॥ अत्र दाहलक्षणकार्ये । प्रतिबंधकता



निरोधकता ॥ ३४६ ॥ तत्रदृष्टांतमाह ॥ दंडाख्येति ॥ यत्र यस्मिन्देशे तत्र तस्मिन्देशे प्रतिबंधेन प्रतिबंधकेन निर्बंधं का र्याभावलक्षणनिर्बंधं कोमानवोवक्तीतिसंबंधः ॥ ३४७ ॥ कारणविघटकादृष्टे स्वोक्तप्रतिबंधकलक्षणाव्याप्तिपरिहाराय यदुक्त मदृष्टस्यामुख्यप्रतिबंधकत्वं मणेश्चमुख्यतःप्रतिबंधकत्वं तदुभयंसयुक्तिकंविविच्यदर्शयन् प्रतिबंधकाभावस्यापिकारणत्वे मणे र्द्वेधापिप्रतिबंधकत्वायोगादप्रतिबंधकत्वमेवस्यादित्याह ॥ कारणाभावहेतुश्चेत्यादिना ॥ कारणाभावहेतुः कारणसामग्री विघटकइतियावत् । कश्चिददृष्टादिः । सत्येवकारणे कारणकलापेसतीतियावत् । शक्तिस्तंभकः वह्न्यादेर्दाहादिशक्तिप्रतिबंधकः ।

दंडाख्यकारणाभावाद्यत्रकार्यंनजायते ॥ प्रतिबंधेननिर्बंधंतत्रकोवक्तिमानवः ॥ ३४७ ॥
कारणाभावहेतुश्चकश्चित्स्यात्प्रतिबंधकः ॥ सत्येवकारणेशक्तिस्तंभकोप्यस्तिकश्चन ॥ ३४८ ॥
मण्यभावस्यहेतुत्वेतदभावात्मकोमणिः ॥ नहेत्वभावहेतुत्वात्प्रतिबध्नात्यदृष्टवत् ॥ ३४९ ॥

शक्तिप्रतिबंधकत्वंनाम दाहकशक्तौसत्यामेव ततोदाहादिकार्यंभवितुंनमुंचतीतिसाक्षात्कार्यप्रतिबंधकत्वमेवेत्यर्थः । कश्चन मण्या दिः ॥ ३४८ ॥ तदभावात्मकइत्यत्र तत्पदेन दाहकारणत्वेनपराभिमतोमण्यभावोगृह्यते । अभावपदेनच तस्याभावस्याभावो गृह्यते । सचाभावाभावोभावएवेतिमणिरेवेतिभावेनोक्तं तदभावात्मकोमणिरिति । हेत्वभावहेतुत्वात् हेत्वभावसंपादकत्वाददृष्ट वन्नप्रतिबध्नातीतिसंबंधः । मण्यभावस्यहेतुत्वे मण्यभावाभावरूपोमणिः हेत्वभावात्मकएव नत्वदृष्टवत्हेत्वभावसंपादकतयाप्र

तिबंधकइतिभावः ॥ ३४९ ॥ शक्तिस्तंभकत्वेनप्रतिबंधकत्वंदूषयति ॥ कार्याभावइति ॥ यतस्तस्मिन्मणौसति कार्याभावो दाहलक्षणकार्याभावः स्वाभावाख्यहेतोः स्वस्यमणेरभावाभिधदाहहेतो रभावतोभूदितिसंबंधः । तेनकारणेन ॥ ३५० ॥ तेनशक्तिस्तंभकतागतेत्येतद्विशदयति ॥ कारणाभावमात्रेणेति ॥ मण्यभावरूप दाहकारणाभावेनैवकार्याभावस्य दाहलक्षणकार्याभावस्य सिद्धितःसंभवात् शक्तिस्तंभकता दाहकारणसामग्र्यांदाहशक्तिस्तंभकता केनकारणेनकल्प्या । मण्यभावाख्यकारणाभावेन सामग्र्याएवाभावात्कार्याभावोपपत्तौपुनर्मणेरपिकारणशक्तिस्तंभकतायानकिंचित्कल्पकमितिभावः ॥ ३५१ ॥ प्रतिबंधका

**कार्याभावोयतस्स्वाभावाख्यहेतोरभावतः ॥ सतितस्मिन्नभूत्तेनशक्तिस्तंभकतागता ॥ ३५० ॥**
**कारणाभावमात्रेणकार्याभावस्यसिद्धितः ॥ शक्तिस्तंभकताकेनकल्प्याकल्पकसंसदि ॥ ३५१ ॥**
**सर्वथाकारणाभावाद्भिन्नस्स्यात्प्रतिबंधकः ॥ नचेद्दंडाभावतश्चप्रतिबंधकताभवेत् ॥ ३५२ ॥**

भावस्यकारणत्वेप्रकारांतरेणापिमणेःप्रतिबंधकत्वंनघटतइत्याह ॥ सर्वथेति ॥ कारणाभावात्कारणस्य मण्यभावस्या भावात् प्रतिबंधकः भिन्नस्यादितिसंबंधः । मण्यभावस्यकारणत्वमतेच मण्यभावाभावात्मकोमणिःकारणस्याभावरूपएव । नतुकारणाभावाद्भिन्नइतिभावः । प्रतिबंधकस्यकारणाभावाद्भिन्नत्वानंगीकारेबाधकमाह ॥ नचेदिति ॥ दंडस्यघटंप्रतिकारणत्वाद्दंडाभावाद्यत्रघटाभावस्तत्रदंडाभावादावपिप्रतिबंधकताभवेत् । दंडाभावस्यापिप्रतिबंधकत्वंविद्वद्भिःकथ्येतेतिभावः ॥ ३५२ ॥

प्रामाण्यग्रहणेशक्तिरित्यादिनोक्तमर्थमुपसंहरति ॥ तस्मादिति ॥ यस्मात्कारणात्क्वचिदेवाप्रामाण्यशंका नसर्वत्र समीपस्थपदार्थेषुतदभावस्योपपादितत्वात् । तस्मात् अप्रामाण्यशंकापनोदायपरीक्षापेक्षणंक्वचिदेवनसर्वत्रेतिभावः । तदभावे दूरस्थवस्तुविषयत्वादिदोषप्रयुक्ताप्रामाण्यशंकाभावे । सः साक्षी ॥३५३॥ ननुप्रामाण्यानुमितेःपूर्वंसर्वज्ञानप्रामाण्यसंशयात्क्वापिप्रामाण्यंसाक्षिणागृहीतुंनशक्यतइत्याग्रहाद्वदंतंप्रतिदूषणांतरंवक्तुमुपक्रमते॥ अथेति ॥ सर्वत्र सन्निकृष्टविप्रकृष्टवस्तुविषयकज्ञाने । तेनकारणे

तस्माच्छंकापनोदायपरीक्षापेक्षणंक्वचित् ॥ तदभावेसहज्ञानैःप्रामाण्यंचसवीक्षते ॥ ३५३ ॥
अथप्रामाण्यानुमितेःपूर्वंप्रामाण्यसंशयः ॥ सर्वत्राप्यस्तितेनैतत्साक्षिणावीक्ष्यतेकथं ॥ ३५४ ॥
अतोनुमानात्तत्सिद्धिप्रामाण्यमनुमीयते ॥ इत्यक्षिणीनिमील्यैववदंतंप्रतिचोच्यते ॥ ३५५ ॥
अनानुभविकस्सोयंसंशयःकेनकल्प्यते ॥ प्रामाण्यग्रहणोपायाभावादितिमतंयदि ॥ ३५६ ॥

न । एत ज्ज्ञानप्रामाण्यं साक्षिणाकथंवीक्ष्यतइतिसंबंधः ॥ ३५४ ॥ अतः यतःसाक्षिणासर्वत्रप्रामाण्यंवीक्षितुंनशक्यतेतस्मादित्यर्थः । अनुमाना त्समर्थप्रवृत्तिजनकत्वादित्यादिरूपात् । समीपस्थपदार्थज्ञानेषुप्रामाण्यसंशयाभावस्योपपादितत्वात्अक्षिणी निमील्येत्युपहासोक्तिः ॥ ३५५ ॥ यदुक्तंसर्वत्रप्रामाण्यसंशयइति तत्रकोहेतुरितिपृच्छति ॥ अनानुभविकइति ॥ अनानुभविकः अनुभवविरुद्धः । नन्वनुमानातिरिक्तप्रामाण्यग्राहकप्रमाणाभावात्प्रामाण्यसंशयइतिशंकामनूद्यदूषयति ॥प्रामाण्येति॥

तदा अन्योन्याश्रयाख्यमहादोषःतेभविष्यतीतिसंबंधः । तदुपपादयति ॥ संशयेति ॥३५६॥ सर्वत्रज्ञानेप्रामाण्यसंशयानुपप त्त्याप्रामाण्येक्षणशिक्षणं प्रामाण्येक्षणरूपस्यसाक्षिणः शिक्षणं तदग्राहकत्वकल्पनमितिभावः ॥ ३५७ ॥ नचेत्संशयानुपपत्त्या साक्षिणःप्रामाण्याग्राहकत्वकल्पनंनचेत् घटत्वंघटत्वजातिः तद्वत्त्वंघटत्ववत्त्वं तत्प्रकारकता घटत्वप्रकारकत्वं । आदिपदेन घट त्ववद्विशेष्यकत्वं ज्ञानत्वंचे तिप्रामाण्यशरीरघटकंसर्वंगृहीतमितिद्रष्टव्यं । उपनीतं व्यवसायोपनीतं । तच्च घटत्वं घटेघटत्वव त्त्वंच । बाह्यत्वात् । अनीतंअनुपनीतं । तच्च घटत्ववद्विशेष्यकत्वादिकं । साक्षाज्ज्ञाननिष्ठत्वेनांतरत्वात् । असौसाक्षी साक्षा

तदातेऽन्योन्याश्रयाख्यमहादोषोभविष्यति ॥ संशयानुपपत्त्यैवप्रामाण्येक्षणशिक्षणं ॥ ३५७ ॥
नचेद्घटत्वतद्वत्त्वतत्प्रकारकतादिकं ॥ उपनीतमनीतंवासाक्षात्कुर्याद्धिसाक्ष्यसौ ॥ ३५८ ॥
यद्यस्तिसंशयस्तेयंतदैवास्यपराभवः ॥ पराभूतेसतिह्यस्मिन्नीक्षणंस्याद्दुरीक्षणं ॥ ३५९ ॥ प्रामा
ण्यवीक्षणाभावादेवसंशयकल्पना ॥ एवंचकथमन्योन्यसंश्रयस्त्वांजिहासति ॥ ३६० ॥

त्कुर्याद्धि । प्रतिबंधकाभावादितिभावः ॥ ३५८ ॥ तस्मात्प्रामाण्यसंशयएवप्रतिबंधकोवक्तव्यइत्याह ॥ यदीति ॥ तेतवमते अयंसंशयः प्रामाण्यसंशयः यद्यस्ति तदैवास्यसाक्षिणः पराभवः प्रामाण्याग्राहकत्वरूपःसिद्ध्यतीतिशेषः । अस्मि न्साक्षिणि पराभूतेसति प्रामाण्यनिर्णायकत्वशक्तिरहितेसति ईक्षणं अस्मदभिमतंसाक्षिणाप्रामाण्येक्षणं दुरीक्षणं अर्थसत्तायाअनिश्चायकं स्यादितिसंबंधः ॥ ३५९ ॥ साक्षिरूपेक्षणस्यदुरीक्षणत्वेसिद्धएवप्रामाण्यकोटिनिश्चायकाभावात्त्वदभिलषितसंशयोत्थानंस्यादि ॥ ५५ ॥

त्याह ॥ प्रामाण्येति ॥ तथाचान्योन्याश्रयइत्याह ॥ एवंचेति ॥ ३६० ॥ समीपस्थघटादिज्ञानप्रामाण्येसंशयोनानुभविक इत्युक्तं । तत्कुतइत्यतआह ॥ पृथ्वित्ति ॥ घटत्वादेःनिर्णायकोयःपृथुबुध्नोदराकारत्वादिःतस्यविशेषस्य । यन्मूलः यःअर्थसं शयः मूलंकारणंयस्यसः । पृथुबुध्नोदराकारत्वाख्यविशेषदर्शनेनपुरोवर्तिनिघटत्ववत्त्वस्यापिनिर्णीतत्वात् । तन्निर्णयएव प्रामा ण्यकोटेर्विशेषदर्शनमिति कथंप्रामाण्यसंशयः । नहिविशेषदर्शनेसतिसंशयइतिभावः ॥ ३६१ ॥ घटत्वप्रापकविशेषदर्शनात्घट

पृथुबुध्नोदरत्वादेर्विशेषस्यप्रदर्शनात् ॥ कथंसमीपस्थघटपटाद्यर्थेषुसंशयः ॥ यन्मूलोऽज्ञानमानत्वसंदेह
स्तेभविष्यति ॥ ३६१ ॥ यथाप्रामाण्यानुमानात्प्रामाण्यस्यविनिर्णयः ॥ तथाघटत्वप्रत्यक्षाद्घटत्वस्यापि
निर्णयः ॥ ३६२ ॥ शंकाधानंयथातत्रमूलदार्ढ्यान्नतेमते ॥ तथानिर्दोषाक्षजन्यज्ञानदार्ढ्यादिहापिन
॥३६३॥ तस्मात्प्रामाण्यशंकायाबीजंभर्जितमत्रते ॥ निर्बीजा सा लता गर्भस्रावेणैवगताभवत् ॥३६४॥
दोषशंकाकृतोप्येषुनस्यात्प्रामाण्यसंशयः ॥ समीपस्थघटाद्यर्थज्ञानेषुकुतएवसा ॥ ३६५ ॥

त्वनिर्णयमुक्त्वा प्रकारांतरेणापितन्निर्णयमुपपादयति ॥ यथेति ॥ ३६२ ॥ तत्र प्रामाण्यानुमाने । मूलदार्ढ्यात् अनुमानमूल व्याप्त्यादिदार्ढ्यात् । इहापि घटेपिशंकाधानंनेतिसंबंधः ॥ ३६३ ॥ समीपस्थघटज्ञानप्रामाण्यसंशयाभावमुपसंहरति ॥ तस्मा दिति ॥ शंकाबीजं निर्णायकाभावसहकृतसाधारणधर्मदर्शनरूपं । साशंका । लतेवलता गर्भस्रावेणैव । बीजाभावेनेतिभावः ॥ ३६४ ॥ ननुदोषजन्यत्वशंकयाप्रत्यक्षस्यदुर्बलत्वेजाते प्रामाण्यसंशयःस्यादित्यतआह ॥ दोषशंकेति ॥ एषु ज्ञानेषु दोष

शंकाकृतः प्रामाण्यसंशयइतिसंबंधः । कुतोनेत्यतआह ॥ **समीपस्थेति** ॥ हेतुगर्भविशेषणं । यतोघटादयःसमीपस्थाः अतोति दूरत्वादिदोषाभावात् समीपस्थघटाद्यर्थज्ञानेषु सा दोषशंका कुतएव नकुतोपीत्यर्थः ॥ ३६५ ॥ उक्तमर्थमुपसंहरति॥**तदिति**॥ तत्तस्मात् । सन्निकृष्टाश्चतेदृष्टार्थाश्चेतिविग्रहः । अजानतां । अज्ञानिनां । जानतां । ज्ञानिनां । चक्षुष्मतामित्यनेन स्यात्कथं चित्संशयोऽधानामितिसूचयति । दोषशंकाहि प्रामाण्यसंशय तद्विपर्ययलक्षणफलबलकल्प्या । फलंचनकेषामप्यस्तीतिभावः ॥ ३६६ ॥ उक्तंप्रामाण्यसंशयाभावमनुभवारूढंकरोति ॥ **नायमिति** ॥ अत्रायंघटइतिज्ञानेजाते नात्रघटइतिकेनचिद्रूतेनप्रो

**तत्सन्निकृष्टदृष्टार्थज्ञानमानत्वसंशयः ॥ अजानतांजानतांवानास्तिचक्षुष्मतांसतां ॥ ३६६ ॥**
**नायंघटइतिप्रोक्तेभवत्येवेतियत्पुनः ॥ भवंतिप्रतिवक्तारस्तत्रकिंकारणंवद ॥ ३६७ ॥ यद्यर्थेत**
**त्रविश्वासस्तर्हितेनचसाक्षिणा ॥ ग्रहणे नतरांतस्यविघ्नो द्वैमातुरोह्यसौ ॥ ३६८ ॥**

क्तेसति अयंघटोभवत्येवेतिपुनःप्रतिवक्तारोभवंतिलोकाः । तस्मादेतादृशस्थलेज्ञानप्रामाण्यसंशयःसर्वानुभवविरुद्धइतिभावः । तत्र एवंप्रतिवचने ॥ ३६७ ॥ तस्मात्तादृशस्थलेज्ञानप्रामाण्यसंशयाभावोवश्यंवाच्यइत्याह ॥ **यदीति** ॥ तत्र तादृशस्थले ज्ञा तेर्थे यदिविश्वासः अयमेतादृशोभवत्येवेतिविश्वासः । संशयाभावस्याप्युपलक्षणमेतत् । तर्हितेननिश्चयरूपेण पूर्वव्यवसायेन निर्धारणरूपैतादृशज्ञानग्राहकसाक्षिणाच तस्यार्थस्यग्रहणे उभाभ्यामपितदर्थावधारणेकृतेसतीतियावत् । तस्य ताभ्यांनिर्णीते

घटत्ववत्त्वरूपस्य विघ्नः अभावशंका नतरां अतिशयेननेतिसंबंधः । साहित्यरससंपादनायविघ्नइत्युक्तं । कथंनविघ्नइत्यतःसा हित्यमुद्रयातमुपपादयति ॥ द्वैमातुरइति ॥ व्यवसायानुव्यवसायरूपमातृद्वयोपेतइत्यर्थः । मातृद्वयपोषितत्वाद्द्वैमातुराख्यो विघ्ननिवारकोविनायकइतिध्वनिः । यथाद्वैमातुरंदृष्ट्वाविघ्नस्स्वयमेवपलायनंकरोति । एवंसाधकदृढप्रमाणद्वयसाधितमर्थसद्धा वंदृष्ट्वाशंकापिशाचीदूरापास्तेतिभावः ॥ ३६८ ॥ प्रामाण्यस्यपरतस्त्वेअनवस्थामप्याह ॥ किंचेत्यादिना ॥ वित्तव्ययायास साध्ये बहुवित्तव्ययायाससाध्ये । वित्तव्ययश्चआयासश्चेतिविग्रहः । अल्पप्रयोजनेकृष्यादौसंदेहादपिप्रवृत्तिदर्शनात् ततोवैलक्ष

किंचवित्तव्ययायाससाध्येकर्मणिकर्मिणां ॥ प्रामाण्यनिश्चयोवश्यंनिश्शं
कार्यैप्रवृत्तये ॥ ३६९ ॥ सचेत्स्वतोनर्तार्हिस्यादनवस्थाख्यदूषणं ॥ ३७० ॥

ण्यायैतद्विशेषणं । बहुवित्तव्ययायासासाध्येकर्मणिफलसंदेहान्नकस्यापिप्रेक्षावतःप्रवृत्तिरितिभावः । कर्मणि यागादौ निश्शंका यैप्रवृत्तये वश्यंप्रामाण्यनिश्चयः पुरुषप्रवर्तके ज्योतिष्टोमस्यस्वर्गसाधनत्वज्ञाने यत्प्रामाण्यं तन्निश्चयोवक्तव्यः ॥ ३६९ ॥ सः प्रामाण्यनिश्चयः स्वतः ज्ञानग्राहकात्साक्षिणएवनचेत् तर्हि अनवस्थाख्यदूषणंस्यात् । एतज्ज्ञानप्रामाण्यं प्रामाण्यानुमित्या निर्णेयं तस्याअनुमितेरपिप्रामाण्यमनुमित्यंतरेणेत्यनवस्थेतिभावः । अस्माकंत्वपौरुषेयतयादोषाभावस्थलीयत्वात्एतज्ज्ञान प्रामाण्यं दोषाभावस्थलीयज्ञानांतरप्रामाण्यंचगृह्णन्साक्षी चिद्रूपत्वेनस्वप्रकाशतया स्वात्मानंस्वप्रामाण्यंचसहैवगृह्णातीतिनानव

स्थितिः। परस्यतुक्कापिज्ञानेस्वप्रकाशत्वानंगीकारात्सुस्थैवानवस्था ॥३७०॥ ननु किंप्रामाण्यनिश्चयेन आवश्यकार्थनिश्चयादेवप्रवृत्तिसंभवादितिकस्यचिच्छंकामनूद्यदूषयति ॥ यदीति ॥ ननुप्रामाण्यनिश्चयरहितार्थनिश्चये प्रामाण्यसंशयाहितार्थसंशयस्याप्यवर्जनीयत्वात्कथमर्थनिश्चयादेवप्रागुक्तनिश्शंकप्रवृत्तिरितिचेत्सत्यं । दूषणांतरमपिवक्तुंपुनरारंभइतिद्रष्टव्यं। तर्हि प्रामाण्यसंदेहस्थलेप्यावश्यकादर्थनिश्चयादेवप्रवृत्तिस्स्यादितिसंबंधः। यत्र यस्मिन्स्थले तत्र तस्मिन्प्रामाण्यसंदेहस्थलेउपांतगमने प्रामाण्यानुमापकप्रवृत्तिसामर्थ्याख्यहेतुनिश्चयार्थसमीपगमने अर्थनिश्चयोनस्यात्किं । स्यादेवेत्यर्थः ॥ ३७१ ॥ ३७२ ॥ अतः प्रवर्तकार्थनि

यद्यर्थनिश्चयादेवप्रवृत्तिरितिमन्यसे ॥ तर्हिप्रामाण्यसंदेहस्थलेप्यर्थस्यनिश्चयात् ॥ ३७१ ॥ आवश्यकात्प्रवृत्तिस्स्या यत्रप्रामाण्यसंशयः॥ तत्राप्युपांतगमनेकिंनस्यादर्थनिश्चयः ॥३७२॥ अतःप्रामाण्यनिर्णीत्यैप्रवर्तेतनकश्चन ॥ ३७३ ॥ यद्यर्थनिश्चयाश्वासःप्रामाण्यस्यविनिश्चये ॥ अनवस्थातर्हिसुस्थानिश्शंकासुप्रवृत्तिषु ॥ ३७४ ॥

श्चयस्यापिप्रामाण्यानुमितेःप्रागेवावश्यकत्वात् ॥ ३७३ ॥ ननुप्रामाण्यसंदेहस्थले जातोप्यर्थनिश्चयः ज्ञानप्रामाण्यानुमितेःपूर्वं प्रामाण्यसंशयाहितार्थसंशयस्याप्यवतरणात्अजातप्रायः । अतःप्रामाण्यानुमितिरप्यपेक्षितेतिचेत्तर्ह्यावश्यकार्थनिश्चयादेवप्रवृत्तिरितिमतंगतं । किंतुनिश्चितप्रामाण्यमेवज्ञानं निश्शंकप्रवृत्तिजनकमितिमन्मतमेवत्वयाप्यनुसृतं । एवंचघट्टकुटीप्रभातदृष्टांतेनपुनरस्मदुक्तानवस्थैवसुस्थेत्याह ॥ यद्यर्थनिश्चयाश्वासइति ॥ यदि प्रामाण्यनिश्चयेसति प्रामाण्यनिश्चयेसत्येवेत्यर्थः । ॥ ५७ ॥

अर्थनिश्चयाश्वासइतिसंबंधः । आश्वासोनाम अनेनगृहीतोर्थःइत्थमेवेत्यवधारणं । तर्हि ज्ञानस्यप्रामाण्यनिश्चयरूपायामनुमितावप्यर्थनिश्चयाश्वासः तत्प्रामाण्यविनिश्चयरूपानुमित्यंतरादेव। तत्रापितथेत्यनवस्थासयादित्यर्थः । तर्हि निश्शंकासुप्रवृत्तिषुनिश्शंकप्रवृत्त्यर्थमितियावत्। तत्तदर्थनिश्चयार्थंतत्तज्ज्ञानप्रामाण्यनिश्चयानुसरणेऽनवस्थासुस्थेत्यर्थः ॥३७४॥ अपिचअर्थनिश्चयस्यैवप्रवर्तकत्वंवदन्प्रष्टव्यः किंयादृशतादृशार्थनिश्चयादेवनिश्शंकप्रवृत्तिरितिब्रूषे उतातिदूरस्थत्वादिदोषाभावस्थलीयार्थनिश्चयादिति। तत्रनाद्यः । पीतश्शंखइतिनिश्चयात् प्रादेशपरिमितश्चंद्रइत्यादिनिश्चयाच्चनिश्शंकप्रवृत्त्यदर्शनात्। द्वितीयस्तु प्रामाण्यनिश्चयावि

किंचार्थनिश्चयव्याप्तःप्रामाण्यस्यापिनिश्चयः ॥ ३७५ ॥ प्रकारत्वेविशेष्यत्वेनकदाप्यस्तिसंशयः ॥ घटत्ववत्त्वनिर्णीतिर्विशेष्येयावशिष्यते ॥ प्रामाण्यनिर्णयोह्येषसएवह्यर्थनिर्णयः ॥ ३७६ ॥ अतो गृहीतप्रामाण्यंज्ञानमेवप्रवर्तकं ॥ प्रवृत्तेरर्थनिर्णीतिजन्यत्वोक्तौचकिंनते ॥ ३७७ ॥

नाभूतएवेति तस्यप्रवर्तकत्वे प्रामाण्यनिश्चयस्यैवप्रवर्तकत्वमुक्तंस्यादितिभावेनाह ॥ किंचेति ॥ प्रामाण्यस्यनिश्चयोपि अर्थनिश्चयव्याप्तइतिसंबंधः ॥ ३७५ ॥ कथमित्यतस्तदुपपादयति ॥ प्रकारत्वइति ॥ विशेष्ये घटे या घटत्ववत्त्वनिर्णीतिःअवशिष्यते । एषएवप्रामाण्यनिर्णयोहि । सएव घटेघटत्ववत्त्वनिर्णयएव। तस्मादर्थनिर्णयःप्रामाण्यनिर्णयाविनाभूतइतिभावः ॥३७६॥ अप्रामाण्यशंकाशून्यार्थनिश्चयएवप्रवर्तकोस्तु किंप्रामाण्यनिश्चयेनेतिकेचित्वदंति । तद्दृश्यमानगौरवदोषदुष्टमपिदोषांतरेणदूषयति

॥अतइति॥ अर्थनिश्चयस्यप्रामाण्यनिश्चयव्याप्तत्वादित्यर्थः । अप्रामाण्यशंकाशून्यंज्ञानंप्रवर्तकमितिवदतापिअर्थनिश्चयःप्रवर्तक इत्यवश्यंवक्तव्यं । ज्ञानप्रवृत्त्योःसमानविषयकत्वनियमात् । सचप्रामाण्यनिश्चयव्याप्तइतिनिश्चितप्रामाण्यमेवज्ञानंप्रवर्तकमित्यं गीकार्यं । आवश्यकत्वाल्लाघवाच्चेतिभावः । तदेवविशदयति ॥ प्रवृत्तेरिति ॥ तेमते प्रवृत्तेः यागादिप्रवृत्तेः अर्थनिर्णीतिजन्य त्वोक्तौ गृहीतप्रामाण्यंज्ञानमेवप्रवर्तकमितिनकिं भवत्येवेतिपूर्वावृत्त्यायोजना ॥ ३७७ ॥ उक्तामनवस्थामुपसंहरति ॥ तदिति॥ त न्निश्चितप्रामाण्यस्यैवज्ञानस्यप्रवर्तकत्वात् तद्ग्रहे तस्यप्रामाण्यस्यग्रहे अनवस्थितिर्नेतिसंबंधः । अन्यथाअनवस्थितिरितिभावः।

तज्ज्ञानग्राहकेणैवतद्ग्रहेनानवस्थितिः ॥ अन्येनतुग्रहेत्युग्रांकस्तरेत्तांसुदुस्तरां॥ ३७८ ॥ घटेघ
टत्वसत्त्वेहिघटज्ञानस्यमानता ॥ पटादौचपटत्वादेस्सत्त्वेतज्ज्ञानमानता ॥ ३७९ ॥ तत्तद्वत्त्वं
तेषुतेषुव्यवसायेऽवसीयते ॥ ततोऽनुव्यवसायेपितद्धानंस्याद्धितद्बलात् ॥ ३८० ॥

अन्येन ज्ञानग्राहकसाक्ष्यतिरिक्तेनानुमानादिना ग्रहे प्रामाण्यग्रहेतामनवस्थां । अत्युग्रत्वेहेतुः सुदुस्तरामिति ॥ ३७८ ॥ निर्णी तिकन्याधन्येत्येतदुपपादयन् ज्ञानद्वारैवग्रहणात्कथमर्थसत्तानिश्चयरूपत्वमितिशंकांप्रतिबंद्यानिराकरोति ॥ घटइत्यादिना ॥ घटज्ञानस्यायंघटतइतिज्ञानस्य तदज्ञानमानता घटादिज्ञानमानता ॥ ३७९ ॥ तत्तद्वत्त्वं घटत्वपटत्वादिमत्त्वं । तेषुतेषु घटपटा दिवस्तुषु । व्यवसायेअवसीयतेनिश्चीयते । तद्बलात् उपनायकव्यवसायबलात् । निश्चयरूपेण व्यवसायेनोपनीतं तथैवकथंनु

साक्षीननिश्चिनुयात् । चक्षुष्मतोदितमार्गेणांधोपितन्निश्चित्यगच्छति । नह्यंधादप्यंधःसाक्षी । येननिर्णयोपनीतमपिननिर्णयेदि तिभावः ॥ ३८० ॥ अनेनकिंसिद्धमित्यतः प्रामाण्यस्वतस्त्वंसिद्धमित्याह ॥ एवंचेति ॥ ज्ञानयाथार्थ्यं ज्ञानस्ययाथार्थ्यं यथा वस्थितार्थविषयीकारित्वरूपंप्रामाण्यं । निष्प्रकारकनिर्विकल्पकस्यानुपनायकत्वात्तद्व्यवच्छेदायोक्तं ज्ञानंयदिस्यात्सविकल्पक मिति ॥ ३८१ ॥ अस्य प्रामाण्यस्य ज्ञानद्वारा ज्ञानोपसर्जनतयैवेत्यनेनस्वातंत्र्येणाभानंद्योतयति । तर्हि चक्षुषा सुरभि चंदनं चेत्याकारा चंदनांशंसौरभ्यांशंचविविच्यवस्तुसत्तयैवोल्लिखंती ज्ञानोपनीतसौरभ्यनिर्णीतिः कथंजायतइतिसंबंधः ॥ ३८२ ॥

एवंचज्ञानयाथार्थ्यंज्ञानग्राहकसाक्षिणा ॥ कथंनगृह्यतेज्ञानंयदिस्यात्सविकल्पकं ॥ ३८१ ॥ यद्यस्यनिर्ण योनस्याज्ज्ञानद्वारैववेदनात् ॥ ज्ञानोपनीतसौरभ्यनिर्णीतिस्तर्हिचक्षुषा ॥ सुरभीदंचंदनंचेत्याकाराजाय तेकथं ॥ ३८२ ॥ घटोयमितिधीर्देशकालयोरुपनीतयोः ॥ निर्णयायकथंशक्तानहितत्राप्यनिश्चयः ॥ ३८३॥ उपनायकतज्ज्ञानदार्ढ्यात्तत्संशयोनचेत् ॥ दृढज्ञानोपनीतेऽर्थेकथमत्राप्यनिर्णयः ॥ ३८४ ॥

ज्ञानद्वाराग्राहकस्यापितत्सत्तानिर्णयरूपत्वंचस्थलांतरेपिदर्शयति ॥ घटोयमिति ॥ घटोयमितिधीः चाक्षुषधीः उपनीतयो र्देश कालग्राहकज्ञानांतरोपनीतयोः स्वातंत्र्येणचक्षुरयोग्ययोर्निर्णयायार्थसत्तानिर्णयाय कथंशक्ता। तत्रापिनशक्तेत्यतआह ॥नहीति॥ तत्रापि घटोयमितिचाक्षुषज्ञानेपि अनिश्चयं उपनीतदेशकालयोरनिर्णयोनहीतिसंबंधः । अत्राप्यनिर्णयेदेशकालव्यवस्थैवघटादे र्नसिद्ध्येदितिभावः ॥ ३८३ ॥ उपनायकज्ञानदाढर्यात्सौरभकालादावर्थसत्तानिश्चयइतिचेत्तर्हिसमंममापीत्याह ॥ उपनायके

ति ॥ तज्ज्ञानं तस्यसौरभादेर्ज्ञानं उपनायकंचतत्तज्ज्ञानंचेतिविग्रहः । तत्संशयः सौरभ्यादिसंशयः । दृढज्ञानं निश्चयरूप
व्यवसायः । तेनोपनीतेअर्थे घटत्ववत्त्वादौ अत्रसाक्षिणि अनिर्णयस्तत्सत्तानिर्णयरूपत्वाभावःकथमितिसंबंधः ॥ ३८४ ॥ किंच
योगुरुमुखात्कमपिग्रंथंश्रुतवान्सःनैवंवक्तुमर्हतीत्याशयेन ज्ञानोपसर्जनतयाप्रतीतेप्यर्थेविश्वासोभवतीत्यत्रदृष्टांतांतरमाह ॥ ज्ञा
तोमयेति ॥ मयागुरूक्तार्थोज्ञातएवेतिसाक्षिणायःपुरुषोवेत्ति तस्यपुरुषस्यतस्मिन्नर्थे गुरूक्तेर्ज्ञानस्यचोपसर्जनतयासाक्षिणाभा
तेर्थे यथाविश्वासोस्ति तथैव मयाज्ञातोघटः ज्ञातःपटइत्यादावनुव्यवसायरूपेज्ञाने ज्ञानस्यूततया पूर्वज्ञानगर्भीकृततया भातः

ज्ञातोमयागुरूक्तार्थइतियोवेत्तिसाक्षिणा ॥ यथातस्यास्तिविश्वासस्तस्मिन्नर्थे तथैवहि ॥ ३८५ ॥
ज्ञातोघटःपटोज्ञातइत्यादावपिसाक्षिणा ॥ ज्ञानस्यूततयाभातोप्यर्थःकिंनावसीयते ॥ ३८६ ॥ इति
शुश्रुमधीराणां तदुक्तमृषिणेतिच ॥ श्रुत्यास्वोक्तार्थदार्ढ्यार्थंपूर्वैरप्युक्ततोच्यते ॥ ३८७ ॥

विषयीकृतः अर्थस्तद्वृत्तादिः साक्षिणा किंनावसीयतइतिसंबंधः । गुरूक्तोर्थोममसाक्षिणिसम्यङ्निश्चितोभूदितिगुरुप्रीत्यैस्वमनो
निश्चयंदर्शयितुंहीदंवचनं । एवंवदतोपिमनसितत्वसंदेहेगुरुमुखाच्छ्रवणार्थंकोपिनयतेतिभावः ॥ ३८५ ॥ ३८६ ॥ अन्योपसर्ज
नतयाअर्थग्राहकस्यतदर्थसत्तानिश्चयरूपत्वंश्रौतमतरीत्यादर्शयति ॥ इतीति ॥ इतिशुश्रुमधीराणांयेनस्तद्विचचक्षिरे तदुक्तमृ
षिणापवमानःप्रजापतिरित्यादिश्रुत्याच स्वोक्तोयोयमर्थः तद्दाढर्यार्थं पूर्वैर्ऋष्यादिभिरप्युक्तता स्वोक्तार्थस्योच्यते ॥ ३८७ ॥

तथाचपूर्वेषांवाचोगोचरताज्ञानेपितदर्थसत्तायथेयते निर्णीयते तथाप्रकृतेपि पूर्वज्ञानगोचरोयमर्थइतिज्ञानेप्यर्थसत्ता ज्ञायतामिति
संबंधः । राजनीत्याबाधकांतरंचाह ॥ नचेदिति ॥ अन्योपनीततयाभान मर्थसत्तानिश्चायकंनचेत् तत्तद्देशीयवार्ताविज्ञानाय
चारान्गूढपुरुषा न्धनंदत्वाचारयंतोनृपाअकोविदास्स्युः । तेषांचारमुखेनैव तत्तद्देशवृत्तांतज्ञानात् । स्वातंत्र्येणतज्ज्ञानाभावात्
अन्योपसर्जनतयाज्ञानस्याप्रयोजकत्वे चारांश्चारयंतोनृपाः कथंकोविदाःस्युरितिभावः । निर्दोषतत्तद्वाक्यरूपचरमप्रमाणेआश्वा
सश्चे न्निर्दोषप्रत्यक्षरूपप्रथमप्रमाणेपिकुतोनाश्वासः । अतोयत्किंचिदेतत् ॥ ३८८ ॥ दृढज्ञानोपनीतेर्थेअर्थसत्तानिश्चयोप्यस्तीत्ये

वाचोगोचरताज्ञानेप्यर्थसत्तायथेयते ॥ ज्ञानगोचरताज्ञानेप्यर्थसत्तातथेयतां ॥ नचेच्चारांश्चारयंतोनृपाश्च
स्युरकोविदाः ॥ ३८८ ॥ किंचेदंनिरणायीतिप्रोक्ते र्थेसत्त्वनिर्णयः ॥ अस्त्येवनिकटस्थेषुधीश्चनिश्चयरूपिणी
॥ ३८९ ॥ अतोविनिश्चितोर्थोयमित्यनुव्यवसायवान् ॥ अर्थसत्तारूपमेवतत्प्रामाण्यंचनिर्णयेत् ॥ ३९० ॥

तदनुभवारूढंकरोति ॥ किंचेति ॥ इदमेवंनिरणायि निर्णीतमितिप्रोक्तेसति अर्थेसत्त्वनिर्णयः अर्थसत्तानिर्णयइतियावत् । अस्त्येवे
त्यनेनान्यथा स्वव्याहतिरितिद्योतयति । निकटस्थेषुपदार्थेषु निश्चयरूपिणी इदमित्थमेवेतिनिश्चयरूपिणी धीश्चास्तीतिक्रियावृत्त्या
योजना॥३८९॥अतः निश्चयरूपव्यवसायबलात् एवमर्थोविनिश्चितइत्यनुव्यवसायवान्पुरुष स्तेनानुव्यवसायेना र्थसत्तानिश्चयरूप
मेव तत्प्रामाण्यं पूर्वव्यवसायप्रामाण्यं निर्णयेत् निश्चिनुयादेव । तथाचैतादृशस्थलेप्रामाण्यस्वतस्त्वंसिद्धमेवेतिभावः ॥ ३९० ॥

अधुना उपनीतार्थेअनुव्यवसायस्यार्थसत्तानिश्चयरूपता नास्तीतिवदतस्तार्किकस्य स्वव्याहतिमाह ॥ किंचेति ॥ साक्षिणि ज्ञानप्रामाण्यमनुमिनोमीत्यनुव्यवसायरूपेज्ञाने प्रामाण्यानुमित्यापि पराभिमतप्रामाण्यानुमानजन्यप्रामाण्यानुमित्यापि उपस्थिततदग्रहः उपस्थापितज्ञानप्रामाण्यनिश्चयाभावःस्यादितिसंबंधः । तत्रहेतुः ॥ यतइति ॥ तत्र प्रामाण्यानुमित्यनुव्यवसायेपि उपनीतं त त्प्रामाण्यं ईयते गृह्यतेसाक्षिणा ॥ ३९१ ॥ अनुमित्युपनीतमपिप्रामाण्यं साक्षिणा माग्राहि कोदोषइत्यतआह॥नेति॥ ते तवमते प्रामाण्येनुमितेसत्यपि प्रमावा न्प्रमारूपजलज्ञानवानह मित्येवमाकारा निश्चयात्मिका प्रामाण्यसत्तानिश्चयरूपा अनु

किंचप्रामाण्यानुमित्याप्युपस्थिततदग्रहः ॥ साक्षिणिस्या द्यतस्तत्राप्युपनीतंतदीयते ॥ ३९१ ॥
नकिंप्रमावानहमित्याकारानिश्चयात्मिका ॥ जायतेऽनुव्यवसितिप्रामाण्येऽनुमितेपिते ॥ ३९२ ॥
व्याप्तिजानुमितेर्दार्ढ्यादुपनीतस्यनिर्णये ॥ अक्षजानुभवेदार्ढ्यंकिंनास्त्यत्रोपनेतरि ॥ ३९३ ॥

व्यवसितिर्नजायतेकिमितिसंबंधः । तथाचानुभवविरोधइतिभावः ॥ ३९२ ॥ शंकते ॥ व्याप्तिजेति ॥ उपनीतस्यानुमित्युपनीतस्य निर्णये साक्षिणेतिशेषः । उत्तरमाह ॥ अक्षजेति ॥ अत्र प्रमानुव्यवसायेनप्रामाण्यग्रहणस्थले उपनेतरिअक्षजानुभव इतिसंबंधः । ननुप्रामाण्यानुमित्यनंतरंपुनःप्रामाण्यसंशयाभावादस्तुतदनुव्यवसायेप्रामाण्यनिश्चयः । अक्षजन्यज्ञानानुव्यवसाये प्रामाण्यस्यप्रागनिश्चितत्वेन प्रामाण्यसंशयात् उपनायकव्यवसाये नदार्ढ्यमितिशंकांप्राक्परिहृतामपिप्रतिबंदीस्थापनायपुनःपरि

॥ ६० ॥

हरति ॥ नापीति ॥ ज्ञानदार्ढ्यस्योपनायकज्ञानदार्ढ्यस्य । कुतोनेत्यतआह ॥ दृढेति ॥ अतिदूरत्वादिदोषाभावात् दृढं रूढंउत्पन्नं यज्ज्ञानं अक्षजानुभवरूपं तच्छक्त्याहिंसनात् अनुत्थानादित्यर्थः ॥ ३९४ ॥ तदनंगीकारेप्रागुक्तान्योन्याश्रयदोषंस्मारयति ॥ घटत्ववत्त्वइति॥ घटत्ववत्त्वे प्रामाण्यशरीरप्रविष्टघटत्ववत्त्वे संदेहः प्रामाण्यसंशयइतियावत् । तन्निश्चयविच्युतौ तस्यघटत्ववत्त्वस्ययोनिश्चयः पूर्वव्यवसायरूप स्तस्यविच्युतौतिरस्कारेसतिस्यादितिसंबंधः । संदेहा त्प्रामाण्यसंदेहात् तच्च्युते र्व्यवसायरूप निश्चयच्युतेर्दोषमन्योन्याश्रयं । प्रामाण्यसंशयबलादेवहि घटत्ववत्त्वनिश्चयरूपव्यवसायतिरस्कारः । सतिचतस्मि न्संशयविरोधि

नापिप्रामाण्यसंदेहाज्ज्ञानदार्ढ्यस्यविप्लवः ॥ दृढरूढज्ञानशक्त्यासंशयस्यैवहिंसनात् ॥ ३९४ ॥
घटत्ववत्त्वेसंदेहस्स्यात्तन्निश्चयविच्युतौ ॥ संदेहात्तच्च्युतेश्चोक्तौकिंदोषंनानुपश्यसि ॥ ३९५ ॥
किंप्रत्यक्षममानंतेकिंवादुर्बलमन्यतः ॥ साभासत्वंद्वयोश्चास्तिमानत्वंचोभयोस्समं ॥ ३९६ ॥

निश्चयाभावात्प्रामाण्यशरीरनिविष्टघटत्ववत्त्वसंदेहरूप प्रामाण्यसंशयइत्यन्योन्याश्रयइतिभावः॥३९५॥अनुमित्यनुव्यवसायस्य प्रामाण्यसत्तानिश्चयरूपत्वे प्रत्यक्षानुव्यवसायस्यापितन्निश्चायकत्वंस्यादेव । अविशेषादित्याह ॥ किंप्रत्यक्षमिति ॥ तेमतेप्रत्यक्षममानंकिं अन्यतोनुमानादेर्दुर्बलंकिंवेत्याक्षेपः । द्वयोः प्रत्यक्षानुमानयो स्साभासत्वं क्वचिदाभासप्रत्यक्षानुमानसहितत्वं मानत्वं सदोषस्याभासत्वेपि निर्दोषस्यमानत्वंच उभयोस्समं । नचवाच्यं अनुमित्यासाक्षात्प्रामाण्यमेवोपस्थाप्यते । अक्षजव्यवसायेनतु

नेति अतःकथमविशेषइति । प्रकारित्वविशेष्यित्वज्ञानत्वानांसाक्षाज्ज्ञानधर्माणामुपस्थापकांतरानपेक्षणेन प्रामाण्योपस्थापनस्या पि जलनिष्ठजलत्ववत्त्वमात्रोपस्थापनेपर्यवसानेना क्षजव्यवसायादविशेषात् ॥ ३९६ ॥ किंचप्रत्यक्षानुमानयोस्साम्यमंगीकृत्योक्तं । वस्तुतस्तु प्रबलप्रत्यक्षोपनीतेऽर्थसत्तानिश्चयाभावे दुर्बलानुमयोपनीतेसुतरांसनस्यादित्याह ॥ प्रबलेति ॥ आनीते उपनीते नतरा मतिशयेननेत्यर्थः ॥ ३९७ ॥ किंचद्वितीयव्यवसायानुव्यवसायेप्रामाण्यस्यनिश्चये प्रथमव्यवसायानुव्यवसाये कुतोननिश्चीयते । उभयोरपिव्यवसाययोर्मात्रयापिविशेषाभावादित्याह ॥ ज्ञातस्यैवेति ॥ ज्ञातस्येत्युपलक्षणं । अनुव्यवसि

प्रबलाक्षोपनीतेऽर्थेनिर्णयोयदिनेष्यते ॥ दुर्बलानुमयाऽऽनीतेविश्वासोनतरांतदा ॥ ३९७ ॥
ज्ञातस्यैवपुनर्ज्ञानेप्रामाण्यंगृह्यतेकिल ॥ तादृश्यायेदृढज्ञानेकुतोवातन्नगृह्यते ॥ ३९८ ॥ परत
स्त्वस्यरक्षार्थंयद्येषनियमस्तव ॥ स्वतस्त्वपरिरक्षार्थंयुक्तियुक्तोममाप्ययं ॥ ३९९ ॥

तस्येत्यपिग्राह्यं । पुनर्ज्ञाने अनुव्यवसायेचसतीत्यपिग्राह्यं । तादृशि द्वितीयज्ञानसदृशे ॥ ३९८ ॥ ननुतज्ज्ञानविषयकज्ञाना जन्यज्ञानग्राह्यत्वाभावःपरतस्त्वं । प्रथमानुव्यवसायेनचप्रामाण्यग्रहणे तज्ज्ञानविषयकंज्ञानं प्रथमानुव्यवसायएव तदजन्यं ज्ञानं तदेव तेनच प्रामाण्यग्रहणे मदभिमतपरतस्त्वभंगस्स्यात् । तस्यरक्षार्थं प्रथमानुव्यवसायेन प्रामाण्याग्रहणनियमों गीक्रियतइतिशंकामनूद्यदूषयति ॥ परतस्त्वेति ॥ तर्हिस्वतस्त्वपरिरक्षार्थं तज्ज्ञानविषयकज्ञानाजन्यज्ञानग्राह्यत्वलक्षणस्वत ॥ ६१ ॥

स्त्वस्यपरिरक्षार्थं युक्तियुक्तः पूर्वोक्तयुक्तियुक्तः अयं प्रथमानुव्यवसायेनप्रामाण्यग्रहणनियमः । प्रथमानुव्यवसायेव्यवसायोप नीतत्वात् घटत्ववत्त्वंननिश्चीयते । द्वितीयानुव्यवसायेतुपूर्वानुव्यवसायेनैवोपनीतत्वाद्धटत्ववत्त्वस्यार्थसत्तानिश्चयोभवतीतिक श्चित् । इदमतीवपरिहास्यं । साक्षाद्धटत्ववत्त्वग्राहिणाव्यवसायेनोपनीतंघटत्ववत्त्वंननिश्चीयतेकिल साक्षात्स्वायोग्यघटत्ववत्त्वस्य पूर्वव्यवसायोपस्थापितस्यग्राहिणा ऽतएवतस्यार्थसत्तानिश्चयमकुर्वता प्रथमानुव्यवसायेनोपस्थापितंघटत्ववत्त्वं साक्षात्तद्ग्राहकत याभिमतेन द्वितीयानुव्यवसायेना र्थसत्ताघटिततयानिर्णीयतेकिल । इदंच साक्षादर्थंदृष्ट्वाकेनचिदुक्तेवाक्येऽनाश्वासःकिल तद्वा

किंचप्रवृत्तिसामर्थ्यात्प्रामाण्यानुमितिस्तव ॥ प्रवृत्तेश्चसमर्थत्वंकेननिर्णीयतेवद ॥ ४०० ॥
नहितत्रानुमातेस्तिसाक्षिणाकेवलेनचेत् ॥ पितातवानुमानस्यसाक्षीरक्ष्योहिसर्वथा ॥ ४०१ ॥

क्यद्वारातमर्थंवदतःपरस्य परंपरावाक्येसुतरांविश्वासःकिलेति लौकिकमाभाणकमनुकरोति । नचवाच्यंप्रथमव्यवसायेनद्वितीय व्यवसायस्यसंवादाद्दार्ढ्यमिति । संवादकस्यतस्यदार्ढ्येस्वानुव्यवसायेपिसुदृढतयास्वार्थमुपस्थापयेदेव । नोचेदंधानुगांधवद्विती यस्यापिकस्तेनोपकारः ॥ ३९९ ॥ इदानींप्रामाण्यग्राहकसाक्षिणोऽवज्ञाने तवप्रामाण्यानुमापकहेतुसिद्धिरेवनस्यात् । अतस्सो वश्यंमान्यइत्याह ॥ किंचेति ॥ प्रवृत्तिसामर्थ्यात् प्रवृत्तेस्सामर्थ्या त्फलवत्त्वा त्फलवत्प्रवृत्तिजनकत्वादितियावत् ॥ ४०० ॥ तत्प्रवृत्तेस्समर्थत्वमनुमानेनगृह्यतइत्यतआह ॥ नहीति ॥ प्रवृत्तेर्हिफलं जलपानजन्यसुखं । तच्चसाक्षिणावा साक्षिप्रतिनिधि

नामनसावा गृह्यतइति तवाप्यनुमतमिति हीत्यनेनसूचयति । केवलेना नुमानाद्यनुपजीविनासाक्षिणाचेत् तर्हितवानुमानस्य पिता पितेवपिता । ग्राहकइत्यर्थः । साक्षी सर्वथारक्ष्योहीतिसंबंधः । हीत्यनेन साक्षिणागृहीतेऽर्थेनिश्चयाभावे तवहेतोर सिद्धिस्स्यादितिसूचयति ॥ ४०१ ॥ परमुखेनैवसाक्षिणाप्रामाण्यनिश्चयोभवतीतिवाचयितुंतंपृच्छति ॥ दूरइति ॥ उपांतेसमीपे सा अप्रामाण्यशंकाकुतोनेतिसंबंधः । ननुधर्मिज्ञानाद्यभावात्संशयाभावइत्यतआह ॥ ज्ञानइति ॥ ज्ञानेज्ञातइत्यनेन धर्मिज्ञा नमुक्तंभवति । अर्थतःप्रयोजनात् । अर्थेच्छोरर्थप्राप्तीच्छावतः । बुभुत्सया प्रामाण्याऽप्रामाण्यान्यतरकोटिबुभुत्सया । अन्योऽ

दूरेप्रामाण्यशंकाचेन्नोपांतेसाकुतोन्नृणां ॥ ज्ञानेज्ञातेऽर्थतोऽर्थेच्छोःकोटिस्मृत्याबुभुत्सया ॥ प्राप्तशंकातरो मूलंछेत्तुंकोऽन्यःपरश्वधः ॥ ४०२ ॥ अतोत्रतन्निरोधायविशेषावसितिर्ध्रुवा ॥ संशयस्यह्यनुत्थानमेककोट्य वधारणे॥४०३॥तस्मात्कथंननिर्णीतसमीपस्थार्थधीषुसा॥अतोत्रसंशयोच्छित्त्यैवाच्यःप्रामाण्यनिश्चयः॥४०४॥

नुव्यवसायेनैवप्रामाण्यनिश्चयात् ॥ ४०२ ॥ तदेवविशदयति ॥ अतइति ॥ यतःप्रामाण्यशंकासंभाविताऽतइत्यर्थः । अत्र समीपस्थघटादिज्ञाने । तन्निरोधाय प्रामाण्यशंकानिरोधाय विशेषावसितिः प्रामाण्यरूपकोटिविशेषनिश्चयः । ध्रुवेत्यनेनाप्रामा ण्यकोटिनिश्चयस्यानानुभविकत्वात्प्रामाण्यकोटेरेवनिश्चयोवश्यंवक्तव्यइतिसूचयति । तत्रहेतुमाह ॥ संशयस्येति ॥ ४०३ ॥ उक्तमर्थमुपसंहरति ॥ तस्मादिति ॥ सा प्रामाण्यकोटिः । अतो गत्यंतराभावात् । अत्र समीपस्थघटादिज्ञाने ॥ ४०४ ॥

नन्वत्रापिसमर्थप्रवृत्तिजनकत्वादिनानिर्णयोभविष्यतीत्यतआह ॥ नेति ॥ अन्य त्प्रवृत्तिसामर्थ्यात् । तच्चगृहीतप्रामाण्यज्ञानजातीयत्वं । तदपिनास्तीत्याह ॥ यतइति ॥ तत्रहेतुः ॥ नवार्थनूत्नज्ञानत्वादिति ॥ नवोयोयमर्थः तस्य नूत्नंनूतनं प्राथमिकमितियावत् । गृहीतप्रामाण्यज्ञानजातीयत्वंतदास्यात् । यद्येतज्ज्ञानात्पूर्वंज्ञानमुत्पन्नंस्यात् । तज्ज्ञानस्यप्रामाण्यंचगृहीतंस्यात् । नचैतदत्रघटते । अर्थस्यापिनवत्वा ज्ज्ञानस्याप्यतएवपूर्वमनुत्पन्नत्वेनास्यैवज्ञानस्यप्राथमिकत्वात् । तस्मादत्रज्ञानग्राहकेणैवग्राह्यत्वलक्षणंस्वतस्त्वंकस्त्यजेदित्यर्थः ॥४०५॥ सन्निकृष्टार्थेसमर्थप्रवृत्तिजनकत्वादिकंप्रामाण्यानुमापकंनास्तीत्युक्तं । तर्हि

नात्रप्रवृत्तिसामर्थ्यमन्यद्वास्त्यनुमापकं ॥ यतोगृहीतप्रामाण्यज्ञानजातीयतापिन ॥
नवार्थनूत्नज्ञानत्वात्स्वतस्त्वंकस्त्यजेत्ततः ॥ ४०५ ॥ समीपगमनेसत्येवार्थसामर्थ्य
शोधनं ॥ तत्प्रमानुमितेःपूर्वंप्रामाण्यंसाक्षिणेक्ष्यते ॥ ४०६ ॥

दूरस्थेभविष्यतीत्यतआह ॥ समीपेति ॥ दूरस्थेपिसमर्थप्रवृत्तिजनकत्वाख्यहेतुनिर्णयाय दूरस्थजलादिसमीपगमनेसतीत्यर्थः । अर्थसामर्थ्यशोधनं समर्थप्रवृत्तिजनकत्वावधारणमितियावत् । तदासन्निकृष्टघटादिज्ञानप्रामाण्यनिर्णयवत्त्वदभिमतानुमितेःपूर्वमेवसाक्षिणातत्रप्रामाण्यनिर्णयोवाच्यः । अन्यथाहेतोरनिर्णयप्रसंगात् । दूरस्थत्वादिदोषाभावाच्चेत्याह ॥ तदिति ॥ यतोनुमितेःपूर्वंसाक्षिणाप्रामाण्यग्रहणेबाधकाभावः यतश्च हेतुसिद्धावर्थसत्ताऽवश्यंपरेणापिनिर्णेया तस्मादित्यर्थः ॥ ४०६ ॥ साक्ष्यु

च्छिष्टकृताहारा साक्षिसिद्धप्रामाण्यग्राहिणीतियावत् । उच्छिष्टेत्यनेनतदनुमानस्यसिद्धसाधनतांध्वनयति । अंगीकृत्यचेदमुदितं । वस्तुतस्तुतद्धेतोरनवसरदुःस्थतैव । नह्यापणंगतस्स्वकरस्थकदलीपक्कंभक्षयित्वैवकश्चिन्निश्चिनुयात् । अस्य साक्षिणः । तत् निश्शंकप्रत्यक्षतयासर्वप्रमाणमूलत्वात् । अक्षाद्यध्यक्षः व्यवसायरूपप्रत्यक्षानुमानाद्यध्यक्षः । तत्तत्प्रामाण्यग्राहकत्वेनेतिभावः ॥ ४०७ ॥ यदिप्रामाण्यस्यस्वतस्त्वं तर्ह्यप्रामाण्यस्यापिस्वतस्त्वंस्यादितिप्रतिबंदींपरिहरति ॥ अप्रामाण्येति ॥ अतः यतोयुक्तियुक्तंन अतइत्यर्थः । त दप्रामाण्यस्वतस्त्वं ॥ ४०८ ॥ कुतोनयुक्तियुक्तमित्यतआह ॥ **भ्रमेति** ॥ भ्रमरूपंयज्ज्ञानं तेनज्ञेयं

**साक्ष्युच्छिष्टकृताहारातेऽनुमास्योपजीविनी ॥ साक्षीतदक्षाद्यध्यक्षोनोपेक्ष्योयंमुमुक्षुभिः ॥ ४०७ ॥**
**अप्रामाण्येस्वतस्त्वं नयुक्तियुक्त मतोनतत् ॥ ४०८ ॥ भ्रमज्ञानज्ञेयरूप्यत्वाद्यभावोह्यमानता ॥**
**तत्सत्त्वग्राहिणीभ्रांतिस्साक्षीचांतःस्वतंत्रदृक् ॥ उपनायकशून्येनबाह्यंतद्गृह्यतेकथं ॥ ४०९ ॥ अतो**
**नुमानतोरूप्यत्वाभावोपस्थितिर्यदा ॥ तदातदपिगृह्णीयादितिसर्वमनाकुलं ॥ ४१० ॥**

यच्छुक्तेरूप्यत्वादि तदभावः अमानताहीतिसंबंधः । तदभाववतितत्प्रकारकत्वरूपाप्रामाण्यस्यतदभावएवपर्यवसानादितिहिशब्देनसूचयति । तदभावोपिभ्रमोपनीतःकिंनस्यादित्यतआह ॥ **तादिति** ॥ तस्यरूप्यत्वादेःसत्त्वग्राहिणी नतुतदभावग्राहिणीत्यर्थः । भ्रमानुपनीतोपितदभावस्साक्षिणागृह्यतामित्यतआह ॥ **साक्षीति** ॥ अंत श्शरीरांतःस्थसुखादिविषये स्वतंत्रदृक्स्वातंत्र्येणदर्शनं । तस्मादुपनायकशून्येनसाक्षिणा बाह्यं तद प्रामाण्यं कथंगृह्यतइतिसंबंधः ॥ ४०९ ॥ अतइति ॥ यतस्साक्षि



णोबहिरस्वातंत्र्य मतइत्यर्थः । अनुमानतः इदंरूप्यंन दह्यमानत्वात् पाठ्यमानत्वादित्याद्यनुमानतः । तदप्यप्रामाण्यमपि । सर्वमनाकुलमितिज्ञप्तौप्रामाण्यस्वतस्त्वस्योपसंहारः ॥ ४१० ॥ ७ ॥ उत्पत्तावपिप्रामाण्यस्वतस्त्वंसमर्थयितुमारभते ॥ **नापीति** ॥ कुतोनेत्यतआह ॥ **असल्लिंगेति** ॥ असच्चतल्लिंगंच बाष्पारोपितधूमादिकं तस्यपरामर्शइतिविग्रहः । वस्तुगत्याऽधूमस्यापितस्यवह्निव्याप्यधूमवानित्येवपरामृश्यमानत्वाल्लिंगपरामर्शइत्युक्तं । यादृच्छिकानुमा । प्रमारूपेतिशेषः ॥ ४११ ॥ यादृच्छिकानु

**नापिप्रमायाजनकोदोषाभावोगुणोपिवा ॥ असल्लिंगपरामर्शाद्यतोयादृच्छिकानुमा ॥ ४११ ॥ सल्लिंगस्यप**
**रामर्शोगुणस्तेऽनुमितौमतः ॥ तदभावेपिजातेयमनुमायत्प्रमात्मिका ॥ सर्वत्रचप्रमायास्तद्गुणजत्वकथा**
**वृथा ॥ ४१२ ॥ योधर्मोव्यतिरेकेणव्यभिचारी सकार्यकृत् ॥ कथंस्या त्कारणंयस्मादन्वयिव्यतिरेकिच**
**॥ ४१३ ॥ दंडेसतिघटाभावादन्वयस्यनिरूपणं ॥ यस्मिन्सत्येवयदितिप्राज्ञाःप्राहुर्विवेकिनः ॥ ४१४ ॥**

मितिरूपप्रमायांगुणाभावंविशदयति ॥ **सल्लिंगस्येति** ॥ तदभावेपि सल्लिंगपरामर्शाभावेपि यत्प्रमात्मिकेयमनुमाजातेतिसंबंधः । तत्तस्मात्सर्वत्रापि प्रमायागुणजन्यत्वकथा वृथेतिसंबंधः ॥ ४१२ ॥ तदुपपादयति ॥ **यइति** ॥ धर्मोगुणरूपः व्यतिरेकेणव्यभिचारी । गुणाभावेपिप्रमोदयादितिभावः । सगुणः । कार्यकृत् प्रमारूपकार्यकृत् । कुतइत्यतआह ॥ **कारणमिति** ॥ यस्मात्कारण मन्वयि व्यतिरेकिचेतिसंबंधः ॥ ४१३ ॥ नन्वन्वयनिरूपणंकथमित्यतआह ॥ **दंडइति** ॥ दंडेसतिघटइतिनान्वयः ।

दंडेसत्यपिघटाभावात् । किंत्वन्वयस्यनिरूपणं यस्मिन्सत्येव यत्तत्तस्यकारणमित्यन्वयनिरूपणंविवेकिनआहुरितिसंबंधः ॥ ४१४ ॥ तच्चोपपन्नमित्याह ॥ दंडइति ॥ दंडाभावे कुत्रचि त्क्वापि घटोनेतिसंबंधः । अतः यतएवमुक्तेनव्यभिचारः अत इत्यर्थः । एवं यस्मिन्सत्येवेत्युक्तरीत्या । अन्यथा यस्मिन्सति यदित्यन्वयोक्तिः व्यभिचारतोनेतिसंबंधः ॥ ४१५ ॥ व्यभिचार मेवविशदयति ॥ दंडइति ॥ दंडेसतिघटइत्यन्वयस्य कारणएवदंडेऽभावात् अन्वयभंगरूपोव्यभिचारइत्यर्थः । एतादृशान्व यस्याकारणेरासभेपिसत्त्वात् अलक्ष्यगमनरूपव्यभिचारोपीत्याह ॥ रासभइति ॥ सत्यपिरासभे घटस्स्वकारणान्मृदादेर्जाय

दंडेसत्येवहिघटोदंडाभावेनकुत्रचित् ॥ अतोन्वयोक्तिर्मान्यैवंनान्यथाव्यभिचारतः ॥ ४१५ ॥
दंडेसत्यपिमृत्पिंडाद्यभावेयद्धटोपिन ॥ रासभेसत्यपिघटोजायतेचस्वकारणात् ॥ ४१६ ॥ अतो
त्रदोषेसतिचभ्रमाभावोनदूषणं ॥ दोषेसत्येवतुभ्रांतिरितिसोपियतोन्वयी ॥ ४१७ ॥

तेचेतिसंबंधः । तस्माद्यस्मिन्सतिय त्त त्तस्यकारणमित्यन्वयस्यनिरूपणं रासभेऽतिप्रसक्तमितिभावः ॥ ४१६ ॥ अस्तुयस्मिन्स त्येवयदित्यन्वयनिरूपणं तथापिप्रकृतेकिमागतमित्यतआह ॥ अतइति ॥ यतोऽन्वयनिरूपणमेव मतइत्यर्थः । अत्र यादृच्छि कप्रमायां सतिच सत्यपि भ्रमाभावः भ्रमलक्षणकार्याभावो नदूषणं दोषस्यभ्रमान्वयघातकंनेत्यर्थः । सोपि दोषोपि । तस्मा द्दोषेसत्येवभ्रमो दोषाभावे नभ्रमइति दोषान्वयव्यतिरेकानुविधानाद्भ्रमस्यदोषजन्यत्वंसिद्धमितिभावः । गुणस्यतु सल्लिंगप

रामर्शस्य याद्दच्छिकप्रमारूपानुमितावभावेन गुणेसत्येव प्रमेत्यन्वयस्य गुणाभावेप्रमाभावइतिव्यतिरेकस्यचाभावेन प्रमायागुण जन्यत्वंभग्नमित्यपिद्रष्टव्यं ॥ ४१७ ॥ एतेनान्यदपिसिद्धमित्याह ॥ एवंचेति ॥ तदभावे ज्ञानसामग्र्यभावे नभवेत् । प्रमेत्य नुवर्तते । ममापि मत एवमेवान्वयव्यतिरेकनिरूपणमलंहीतिसंबंधः ॥ ४१८ ॥ तस्मादिति ॥ यस्मा ज्ज्ञानसामग्र्यांसत्या मेव प्रमा तदभावेतदभावइत्यन्वयव्यतिरेकनिरूपणं तस्मादित्यर्थः । भ्रमस्यसामग्र्यां ज्ञानसामान्यसामग्रीरूपप्रमासामग्र्यपि

एवंचज्ञानसामग्र्यांसत्यामेवप्रमाभवेत् ॥ तदभावेतुनभवेदित्येवालंममापिहि ॥ ४१८ ॥ तस्मा
द्भ्रमस्यसामग्र्यांप्रमासामग्र्यपिप्रमां ॥ सामान्यरूपांकुर्यादित्याक्षेपोनिर्निबंधनः ॥ ४१९ ॥
सुहृद्भावेनपृच्छंतंप्रतितुप्रतिबंधिका ॥ एकाफलबलात्तत्रनापरेत्युत्तरंवदेत् ॥ ४२० ॥ याद्दच्छि
केयद्दच्छैवभ्रमस्यप्रतिबंधिका ॥ दोषस्यजागरूकत्वात्तद्रोधेतदपेक्षणं ॥ ४२१ ॥

सामान्यरूपांप्रमां । आक्षेपोनिर्निबंधनः । तस्मिन्सति तदित्यन्वयस्यानिरूपणादितिभावः ॥ ४१९ ॥ भ्रमसामग्र्यां ज्ञानसा मान्यसामग्रीरूपप्रमासामग्र्याअपिसत्त्वा त्कथंप्रमारूपकार्याभावइतिसुहृद्भावेनपृच्छामीतिचेत्तत्राह ॥ सुहृद्भावेनेति ॥ एका भ्रमसामग्री फलबलात् प्रमानुत्पादलक्षणफलबलात् । प्रतिबंधिका प्रमोत्पत्तेःप्रतिबंधिका । अपरा भ्रमसामग्रीप्रविष्टप्रमासा मग्री प्रतिबंधिका प्रमोत्पत्तिप्रतिबंधिकानेत्युत्तरंवदेदित्यर्थः ॥ ४२० ॥ एवंतर्हियाद्दच्छिकसंवादिप्रमायां विद्यमानाभ्रमसामग्री

कथंनप्रमोत्पत्तिप्रतिबंधिकेत्यतआह ॥ **याद्दच्छिकइति** ॥ भ्रमस्य भ्रांतेः । भ्रमकारणदोषस्यचेत्यपिद्रष्टव्यं । यद्दच्छाप्रतिबद्धोदोषः भ्रमंजनयितुं प्रमांप्रतिबद्धुंचनाशक्नोदितिभावः । अतएवात्रयद्दच्छापेक्षणमित्याह ॥ **दोषस्येति** ॥ जागरूकत्वात् विद्यमानत्वादितियावत् । तद्रोधे दोषशक्तिप्रतिरोधे तदपेक्षणं उत्तेजकेसति मणिशक्तिप्रतिबंधेनदाहवदत्रापिप्रमोत्पत्तेरितिभावः । तथाच याद्दच्छिकप्रमायां दोषस्याप्रतिबंधकत्वान्नतदभावापेक्षणमितिभावः ॥ ४२१ ॥. तदा प्रमासामग्र्येव ज्ञानसामग्रीरूपप्रमासामग्र्येव शक्ता प्रमोत्पादनेसहजशक्तिमती स्वफलं प्रमालक्षणस्वकार्यं साधयेदित्यर्थः । एतदेवविशदयति ॥अतइति॥

**प्रमासामग्र्येवशक्तास्वफलंसाधयेत्तदा ॥ अतोयाद्दच्छिकीसाभूत्तन्मात्रेतदपेक्षणात्**
**॥ ४२२ ॥ अन्यत्रसापिनापेक्ष्यागुणात्तत्क्वप्रमोदयः ॥ ४२३ ॥ यतोवह्न्यनुमासेयं**
**ततोधूमत्वधीबलात् ॥ तज्जन्मवाच्यं नान्यस्माद्यद्धूमस्याग्निलिंगता ॥ ४२४ ॥**

यतो याद्दच्छिकप्रमायामेवयद्दच्छापेक्षाऽतइत्यर्थः । सा दोषेसत्यपिजायमानाप्रमा । तन्मात्रेताद्दशमात्रे । तदपेक्षणात् । यद्दच्छापेक्षणात् ॥ ४२२ ॥ अन्यत्रयाद्दच्छिकप्रमायाअन्यत्र घटपटादिप्रमास्वितियावत् । सापि यद्दच्छापि । एतेन यद्दच्छाया अपिप्रमामात्रेऽनपेक्षणात् नतस्याःप्रमाजनकगुणत्वमितिसूचयति । तत्तस्मात् दोषाभावस्यगुणस्यचोक्तरीत्या व्यभिचारेणप्रमाकारणत्वायोगात्यद्दच्छायाःक्वाचित्कत्वेनगुणत्वायोगात् क्व गुणात्प्रमोदयइतिसंबंधः ॥४२३॥ ननुभवेदयंदोषाभावस्यगुणस्यचप्रमाकारणत्वाभावः । यदिबाष्पारोपितधूमज्ञानस्य याद्दच्छिकवन्ह्यनुमितिरूपप्रमांप्रतिकारणत्वंस्यात् । तदेवकुतइत्यतआह ॥ **यतइति** ॥ यद्यपि कारणांतराभावात् जन्यज्ञानेचकारणस्यावश्यकत्वात् धूमभ्रमजन्यत्वमनिच्छतापिवक्तव्यं । तथापि युक्त्यासाधनं युक्तिमल्लिकायास्स्वभावइतिद्रष्टव्यं । यतश्चेयं याद्दच्छिकप्रमारूपावह्न्यनुमा । ततो वह्न्यनुमितित्वात् । तज्जन्म वह्न्यनुमितिजन्म । अन्यस्मा द्धूमज्ञानादन्यस्मात् । तत्रहेतुः ॥ **यदिति** ॥ यद्यस्माद्धूमस्याग्निलिंगता तस्माद्बाष्पेधूमत्वप्रकारकज्ञानादेवतज्जनिरितिभावः ॥ ४२४ ॥ प्रकारांतरेणापितदुपपादयति ॥ **यथेति** ॥ यथान्यत्र याद्दच्छिकप्रमातोन्यत्र वह्निभ्र

**यथान्यत्रभ्रमाकारासाधीर्धूमभ्रमादभूत् ॥ तथैवेयं जनौ कोपिनविशेषोनयोर्द्वयोः ॥ ४२५ ॥**
**प्रवृत्त्युत्तरकालंतुविसंवादादसौभ्रमः ॥ संवादेनप्रमासेयमितिनिर्णीयतेबुधैः ॥ ४२६ ॥ उत्पत्ति**
**उत्पत्तिस्तूभयोरेकप्रकारानात्रसंशयः ॥ तस्मादुक्तोगुणोन्योवाकल्पनीयोनजन्मनि ॥ ४२७ ॥**

मस्थलइत्यर्थः । साधीः वह्न्यनुमितिरूपाधीः । इयं याद्दच्छिकवह्न्यनुमितिरूपाप्रमा । प्रमाऽप्रमारूपयोरनयोर्द्वयोर्वह्न्यनुमित्योरित्यर्थः । जनौउत्पत्तौ ॥ ४२५ ॥ तर्ह्येकस्याःप्रमात्व मपरस्याअप्रमात्वंच कुतोज्ञायतइत्यतआह ॥ **प्रवृत्तीति** ॥ असौ याद्दच्छिकप्रमातिरिक्ता धूमभ्रमजन्यावह्न्यनुमितिः सेयं याद्दच्छिकप्रमारूपावह्न्यनुमितिः । अतिदूरस्थलीयज्ञानप्रामाण्यत्वात् प्राक्साक्षिणाप्रामाण्याग्रहणंनदोषइतिभावः ॥ ४२६ ॥ उभयो र्भ्रमाभ्रमयोः । सलिंगस्यपरामर्शइत्यादिनोक्तमर्थमुपसंहरति

॥ तस्मादिति ॥ यस्मादियं यादृच्छिकप्रमारूपा वह्न्यनुमिति स्सल्लिंगपरामर्शलक्षणगुणं दोषाभावं चांतरेण धूमज्ञानमात्रेणै
वोत्पन्ना तस्मादित्यर्थः । उक्तोगुण स्सल्लिंगपरामर्शलक्षणः । अन्योदोषाभावः । जन्मनि प्रमोत्पत्तौ नकल्पनीयइत्युक्त्या याता
किंकाणांस्वमतदुराग्रहेणगुणांतरकल्पना सापिनेतिसूचयति । वह्निप्रकारिकायाअस्याधूमत्त्वप्रकारकज्ञानादेवोत्पत्तिसंभवेनकल्प
नायानिर्मूलत्वात् ॥ ४२७ ॥ याऽनुमितिरूपाप्रमा सेयमितिसंबंधः ॥ ४२८ ॥ यादृच्छिकप्रमायांदोषाभावस्यान्वयतोव्यतिरेकत
श्चव्यभिचारेण अन्यत्रघटपटादिप्रमासुविद्यमानोपिदोषाभावो नकारणमभूदित्याह ॥ प्रमयेति ॥ यस्य दोषाभावस्य प्रमयाना

लिंगभ्रमाख्यानुमानदोषेसत्येवयाभवत् ॥ दोषाभावानपेक्षैवसेयंयादृच्छिकप्रमा ॥ ४२८ ॥
प्रमयानान्वयोयस्यव्यतिरेकोपियस्यन ॥ दोषाभावस्सकुत्रापिनप्रमांप्रतिकारणं ॥ ४२९ ॥
एवंचभावाभावाख्यगुणज्ञा नैवयाप्रमा ॥ तत्स्वतस्त्वंमहत्त्वत्वमित्याहुस्तत्ववादिन॰ ॥ ४३० ॥

न्वय स्सत्येवतस्मिन्प्रमेत्यन्वयोनेत्यर्थः । यस्य दोषाभावस्यच व्यतिरेकोपि दोषाभावाभावे प्रमायाअभावइतिव्यतिरेकोपिने
त्यर्थः । उभयोरपियादृच्छिकप्रमायांव्यभिचारात् । स व्यभिचारीदोषाभावः । दोषाभावइत्युपलक्षणं । सल्लिंगपरामर्शरूपगुण
स्याप्यत्रैवान्वयतोव्यतिरेकतश्चव्यभिचारा त्तद्वा तादृग्वागुणांतरमपि नकुत्रापिकारणमितिभावः ॥ ४२९ ॥ तस्मादुत्पत्तावपि
स्वतस्त्वमेवतत्वमित्याह ॥ एवंचेति ॥ याप्रमा तत्स्वतस्त्वं तस्याः प्रमायाः ज्ञानसामान्यसामग्रीमात्रजन्यत्वंस्वतस्त्वं महत्

॥ ६६ ॥

युक्तियुक्तत्वेनसर्वजनैर्माननीयमित्यर्थः ॥ ४३० ॥ कार्यस्य प्रमारूपकार्यस्य ॥ ४३१ ॥ तथापि उक्तरीत्या गुणंविनैवप्रमाया स्संभवेपि दुराग्रही स्वमतपरिरक्षणायानानुभविकमपिकंचिद्गुणंवक्त्याग्रहवान् तस्याप्युत्तरंब्रूमइतिसंबंधः । कोत्रकल्पितोगुणः किंचतस्योत्तरमित्यतआह ॥ यद्यर्थेति ॥ अत्र याद्दच्छिकसंवादिप्रमायां । अर्थसत्ता वह्निरूपस्यार्थस्यविद्यमानता । उत्तरमाह ॥ तथापीति ॥ गुणा दर्थसत्ताख्यत्वदुक्तगुणात् । जनिः याद्दच्छिकसंवादिवन्ह्यनुमितिजन्म ॥ ४३२ ॥ कुतोनजनिरित्यत आह ॥ परोक्षेति ॥ परोक्षाचसा ऽनुमितिश्चेतिविग्रहः । तेमते । अर्थः विषयः । यद्यस्मा न्नकारणं तस्मान्नगुणाज्जनिरितिपू

कार्यस्यैवंव्यवस्थित्यासर्वमासीदनाकुलं ॥ ४३१ ॥ तस्यापिचोत्तरंब्रूमोयस्तथापिदुरा
ग्रही ॥ यद्यर्थसत्तात्रगुणस्तथापिनगुणाज्जनिः ॥ ४३२ ॥ परोक्षानुमितेर्जन्मन्यर्थोयत्ते
नकारणं ॥ अन्यथाभाव्यनुमितेरसंभवमनुस्मर ॥ ४३३ ॥

र्वेणान्वयः । परोक्षज्ञानंप्रत्यर्थस्याजनकत्वांगीकारात् । अर्थस्याजनकत्वेच तत्सत्तायास्सुतरामजनकत्वमितिभावः । तदनंगीका रेबाधकमाह ॥ अन्यथेति ॥ भाव्यनुमितेः भविष्यद्वृष्ट्यादिविषयकानुमितेः । व्यापकवतिव्याप्यज्ञान मनुमितौगुण स्सच याद्दच्छिकानुमितावप्यस्तीतिकश्चित् । तदप्यनेनैवनिरस्तं । साध्यवत्त्वापरपर्यायस्यव्यापकवत्त्वस्य परोक्षविषयतयाजनकत्वा योगेन तज्ज्ञानस्यचात्माश्रयतयाजनकत्वायोगेन व्याप्यज्ञानमात्रस्यचभ्रमसाधारण्येन जनकगुणासिद्धेः ॥ ४३३ ॥

पक्षधरमतमाशंक्यदूषयति ॥ नापीति ॥ ईश्वरसंबंधिन्यर्थधीः ईश्वरप्रमेत्यर्थः। अत्र यादृच्छिकसंवाद्यनुमितिप्रमायां । यद्यस्माद्धी त्वेन ईश्वरज्ञानत्वेन सा ईश्वरधीः तस्मादीश्वरप्रमायागुणत्वेनहेतुत्वकल्पनमनुचितमितिभावः । किंचार्थसत्ता गुण इतिवदता प्रमायां स्वस्वविषयसत्ता गुणइत्युक्तंस्यात् । तत्रचयस्यकस्यचिद्विषयस्यसत्तायां सर्वांशेनापि प्रमेत्युच्यतेवा उत यावद्विषयि णीप्रमा तावतस्सर्वस्यापिसत्ता गुणइत्युच्यतेवा । नाद्यः । इदमंशसत्तया रजतांशेपिप्रमाप्रसंगात् । नद्वितीयः । रजतंजानामी तिभ्रमानुव्यवसाये नेदंरजतमितिबाधप्रत्ययेच प्रमयोल्लिख्यमानतयाविषयस्य रजतस्य सत्ताभावेनव्यभिचारात् यत्रयत्रार्थस

नाप्यैश्वरार्थधीरत्रगुणोभवितुमर्हति ॥ यद्धीत्वेनाखिलेकार्येसाहेतुर्नगुणत्वतः ॥ ४३४ ॥
गुणत्वेनापिहेतुत्वेकल्पनागौरवंभवेत् ॥ स्वतस्त्वेनान्यथासिद्धेःकल्पकंचनकिंचन ॥ ४३५ ॥

त्ता तत्रैवप्रमेतिव्याप्तेरेकांशेनभंगेपि गुणकारणतावादस्यभग्नत्वेनतत्रैवस्वतस्त्वापरिहारात् । अगत्यात्रैकांशसत्तयैवसर्वांशेपिप्र मोदयांगीकारे तदंशेन व्यभिचारापरिहारात् । भ्रमेप्यगत्येदमंशसत्तयैवरजतांशेपिप्रमोदयप्रसंगात् । सर्वासामपिप्रमाणां सर्वां शेनापि गुणंविनैवोदयस्यन्यायप्राप्तत्वाच्च । तथाचेयमुभयतःपाशारज्जुः । अस्माकंतु प्रमायागुणजन्यत्वनियमाभावेन नसर्व त्रप्रमायाअर्थसत्तानियमापेक्षा । अतएवजगत्सत्यत्वं प्रमाविशेषेणैवसाधयंति । अनयैवदिशा विशेष्यनिष्ठविशेषणेंद्रियसन्निक र्षादेःप्रत्यक्षप्रमायांगुणतापिनिरसनीया ॥ ४३४ ॥ ननुप्रमायागुणजन्यत्वान्यथानुपपत्त्येश्वरबुद्धेरीश्वरज्ञानत्वेनगुणत्वेनच ॥ ६७ ॥

कारणत्वंकल्प्यतइत्यतआह ॥ स्वतस्त्वेनेति ॥ स्वतस्त्वेन प्रमायाज्ञानसामान्यसामग्रीमात्रजन्यत्वरूपस्वतस्त्वेन । कल्पक मीश्वरज्ञानस्यगुणत्वकल्पकं ॥ ४३५ ॥ यतोनुमा लैंगिकी लिंगजन्यत्वाल्लैंगिकीत्युच्यते। यत स्सा यादृच्छिकप्रमारूपानुमा। लिंगभ्रमा लिंगज्ञानात्प्रकृतापेक्षयाभ्रमादित्युक्तं । लिंगज्ञानादित्युपलक्षणं । व्याप्तिज्ञानधर्मिज्ञानरूपसामग्र्याश्चेत्यपिद्रष्टव्यं । एवेत्यनेनार्थसत्तादिकंव्यावर्तयति । तर्ह्यर्थसत्तायाःकुत्रोपयोगइत्यतआह ॥ अर्थसत्तादयइति ॥ आदिपदेनसंवादादेर्ग्रहणं । तद्धीमानत्वस्य तादृशानुमितिमानत्वस्य । दूरत्वादिदोषग्रस्ततयाप्राक्साक्षिणोपेक्षितस्येतिभावः ॥ ४३६ ॥ ईश्वरज्ञानस्यगुण

लिंगभ्रमादेवसाभूदनुमालैंगिकीयतः ॥ अर्थसत्तादयस्तद्धीमानत्वस्यानुमापकाः ॥४३६॥ किंचार्थधीत्वत
स्सास्यात्तत्तदर्थेषुकारणं ॥ ज्ञानधीत्वेनचज्ञाने नगुणोसौभ्रमेपियत् ॥ तत्त्वदुक्तगुणोत्थाभूदेवमप्यनुमा न
सा ॥ ४३७ ॥ करोमीदमिदंचेतितत्तत्कार्यंकरोत्यपि ॥ अन्यबुद्ध्यान्यकरणमभ्रांतस्यकथंवद ॥ ४३८ ॥

त्वंप्रकारांतरेणदूषयति ॥ किंचेति ॥ सा ईश्वरधीः । अर्थधीत्वतः इममर्थंकरोमीत्यर्थज्ञानत्वतः । तत्तदर्थेषु घटपटाद्यर्थेषु । ज्ञानेजनयितव्ये ज्ञानधीत्वेने दंज्ञानंकरोमीतिज्ञानविषयकधीत्वेन तस्मिन्ज्ञानेकारणंस्यात् । कर्तारोहितत्तत्कार्यमेवंसंकल्प्यकु र्वंति । अतस्संभावितत्वादिदंपक्षद्वयमाशंकितं । असा वेतादृशी ईश्वरधीरपिनगुणः प्रमाजनकीभूतोगुणोन । तत्रहेतुः ॥ भ्र मेपीति ॥ यद्यस्मा ज्ज्ञानंकरोमीतिज्ञानधीत्वेनेश्वरज्ञानस्यकारणता भ्रमेप्यस्ति । तस्माद्भ्रमसाधारणत्वान्नगुणइतिपूर्वेणसंबंधः उपसंहरति ॥ तदिति ॥ त्वदुक्तः प्रमामात्रकारणीभूतः ॥ ४३७ ॥ ननुज्ञानेप्यर्थधीत्वेनैवकारणता । तच्चप्रमायामेवघटतेन

भ्रमइतिमंदाशंकांनिराकरोति ॥ करोमीति ॥ इदंघटलक्षणकार्य मिदंपटलक्षणकार्यंच करोमीति तत्तत्कार्य घटपटलक्षणकार्य मेवकरोति । अपिस्संभावनायां । अन्यबुद्ध्या अर्थंकरोमीत्यर्थबुद्ध्या अन्यकरण मन्यस्यज्ञानस्य करणमभ्रांतस्येश्वरस्यकथंस्यात् । अतोज्ञानधीत्वेनैवज्ञानंकरोति । सच भ्रमसाधारणत्वान्नगुणइतिभावः । ननुप्रमांकरोमीतिधीः प्रमायांगुणः । सचभ्रमे नास्तीतिचेत् तर्हिभ्रमंकरोमीतिधीः भ्रमेगुणः । सचप्रमायांनास्तीतिसममतोयत्किंचिदेतत् ॥ ४३८ ॥ ननुप्रमायांकल्प्यमानगुणस्यभ्रमेसंभवेपितदनपेक्षयैवभ्रमंकुरुते । प्रमांतुनतथेतिफलबलात्कल्प्यतइतिपरस्याशंकामनूद्यसोपहासंदूषयति ॥ गुणानपेक्ष

गुणानपेक्षएवासौभ्रमंकुर्यात्किलप्रभुः ॥ गुणैःकिलप्रमांकुर्या न्नस्वतंत्रेन्यतंत्रता ॥ ४३९ ॥ भ्रमज्ञानंयथाकुर्यात्प्रमांकुर्यात्तथैवहि ॥ द्विप्रकारतयाकर्तुंकिंसतार्किककिंकरः ॥ ४४० ॥ अर्थप्रमायदिगुणःप्रमायामैश्वरीयते ॥ भ्रांतार्थोरजतादिस्सन्नन्यथाख्यातिवादिनः ॥ अर्थसत्ताप्रमाचैशीतद्भ्रमेप्यस्तितेमते ॥ ४४१ ॥

इति ॥ असौप्रभुः गुणानपेक्षएवभ्रमंकुर्यात्किल । गुणैःप्रमांकुर्यात्किल । किलेत्यनेन फलस्य स्वतस्त्वेनान्यथोपपत्तिरूपमस्वारस्यंसूचयति । दोषांतरंचाह ॥ नेति ॥ स्वतंत्रे ईश्वरेऽन्यतंत्रता गुणफलादितंत्रतानेतिसंबंधः ॥ ४३९ ॥ तद्विशदयति ॥ भ्रमज्ञानमिति ॥ यथागुणंविनैवभ्रमरूपंज्ञानंकुर्यात् तथागुणंविना प्रमामपिकुर्याद्धीतिसंबंधः । सईश्वरो द्विप्रकारकतया तार्किकाभिलषितप्रकारद्वयघटिततया कर्तुं तार्किककिंकरःकिं । नेतिसंबंधः ॥ ४४० ॥ किंचार्थसत्ता र्थप्रमाच तार्किकमतेभ्रमेप्य

स्ति । अतोभ्रमसाधारणत्वान्नद्वावपिगुणावित्याह ॥ अर्थप्रमेति ॥ यद्यैश्वरीअर्थप्रमा प्रमायांगुणइतीर्यते तर्हि । भ्रांतार्थः भ्रां
तिविषयोर्थः रजतादिः रजतसर्पादिः अन्यथाख्यातिवादिनस्तार्किकस्य मते सन्नेव । अन्यथाख्यातिवादिनइतितत्रहेतुगर्भंवि
शेषणं । अन्यत्रसतएवा न्यत्रख्यातिर्ह्यन्यथाख्यातिः । तत्तस्मा दर्थस्यासत्त्वाभावात् अर्थसत्ता ऐशी सर्वज्ञेश्वरसंबंधिनी तत्प्र
माच तेतार्किकाभिमतस्यतव मते भ्रमेप्यस्तीतिसंबंधः । तेनभ्रमाभ्रमौच त्वदुक्तगुणसंजातौ त्वदुक्तगुणाभ्यामर्थसत्ताऽर्थप्रमा
रूपाभ्यामुत्पन्नौ जातौअभूतामितिसंबंधः । द्वयोर्भ्रमाभ्रमयोः । तत् प्रमात्वं॥ ४४१ ॥ननुतत्रसतोर्थस्यप्रमैव गुणः । भ्रमेच

त्वदुक्तगुणसंजातौद्वौचजातौभ्रमाभ्रमौ ॥ गुणजत्वात्प्रमात्वंचेद्द्वयोरपिकुतोनतत् ॥ ४४२ ॥
यदि तत्रसतोर्थस्यप्रमैशीतेगुणस्तदा ॥ लघ्वीतत्रार्थसत्तैवगुणोभून्नतुतत्प्रमा ॥ ४४३ ॥
साचानुमायांहेतुर्नगुणजासाप्रमाकथं ॥ ४४४ ॥ गुणस्यसत्त्वमात्रेणप्रामाण्यंभण्यतेयदि ॥
तदासामान्यसामग्रीमात्रजन्याप्रमामम ॥ सर्वाप्यभूत्स्वतस्त्वस्यकेनवाह्वानिरुच्यतां ॥ ४४५ ॥

नतत्रसतोर्थस्यप्रमास्ति । रजतादेर्देशांतरेसत्त्वादितिचोद्यमनूद्यदूषयति ॥ यदीति ॥ ऐशी तत्रसतोर्थस्यप्रमेतिसंबंधः । तदात
र्हिलघ्वी अर्थसत्तैव गुणोभून्नतुतत्प्रमा गौरवादितिभावः ॥ ४४२ ॥ ४४३ ॥ साच तत्रार्थसत्ताचा नुमायां यादृच्छिकसंवा
दिन्यामनुमितौ हेतुर्न । परोक्षज्ञानस्यविषयाजन्यत्वादितिभावः । तथाच साप्रमा गुणजाकथं । नकथंचिदित्यर्थः ॥ ४४४ ॥
पुनश्शंकते ॥ गुणस्यसत्त्वमात्रेणेति ॥ प्रामाण्यं यादृच्छिकानुमितेःप्रामाण्यं गुणस्य तत्रार्थसत्तारूपगुणस्य सत्त्वमात्रेण ।

तदातर्हि । त्वयापिगुणस्यकारणत्वानंगीकारात् । ज्ञानसामान्यसामग्रीमात्रजन्या सर्वापिप्रमा ममाभूदितिसंबंधः ॥ ४४५ ॥ किंच तत्रसतोर्थस्यवा तत्प्रमायावागुणत्वे श्रुतिजन्यप्रमायाअपि ईदृशगुणेनैव प्रमात्वसंभवा दाप्तोक्तत्वगुणसिद्ध्यर्थंश्रुतीना मनित्यत्वकल्पनंचतवमतेव्यर्थमित्याह ॥ ईदृगिति ॥ ईदृग्गुणा दर्थसत्तादिरूपगुणा च्छ्रुतीनांच मानता जानतांमते भवेत् । ततश्च केनकारणेन तासां जनिरुत्पत्तिःकल्प्येतिसंबंधः । आप्तोक्तत्वस्यैवगुणत्वेहितत्कल्प्यं । अर्थसत्तादेरपिगुणत्वेवृथातत्कल्प नेतिभावः । तेननिर्निमित्तंश्रुतीनामुत्पत्त्यंगीकारेण हीनता पूर्वोत्तरविवेकहीनतापितेऽभूदित्यर्थः ॥ ४४६ ॥ अधुना तत्रसतो

ईदृग्गुणाच्छ्रुतीनांच मानता जानतांभवेत् ॥ केनतासांजनिःकल्प्यातेनतेहीनताप्यभूत्
॥ ४४६ ॥ अनुभूतारोपकालेगुर्वीसाप्यस्तितेमते ॥ लघुश्चपक्षोहंतित्वांगुरुश्चापिनिहंत्य
हो ॥ ४४७ ॥ उपादानापरोक्षत्वेनैव सा कारणंकिल ॥ ४४८ ॥

र्थस्यप्रमा गुणइतिगौरवग्रस्तपक्षांगीकारेपि तार्किकमतेभ्रमसाधारण्यमेवेत्याह ॥ अनुभूतेति ॥ सा तत्रसतोप्यर्थस्यप्रमा । लघु श्चपक्षः अर्थसत्तायागुणत्वपक्षः । गुरुश्चार्थसत्ताप्रमायागुणत्वपक्षश्च । नापिप्रतीयमानविशेष्याभिन्नसदर्थोवा तत्प्रमावागुणः । ॥ ६९ ॥ यादृच्छिकसंवाद्यनुमितावेवभावेनप्रकृतानुपयोगात् । अर्थपदेनविशेष्यस्यैवग्रहेरजतभ्रमेऽतिप्रसंगतादवस्थ्यं । अभिन्नपदस्था ने निष्ठपददानेपि रजताधारशुक्तिशकले जायमानानुभूयमानारोपेऽतिप्रसंगतादवस्थ्यमेव ॥ ४४७ ॥ युक्तिसंचारायैतावच्चर्चितं

वस्तुतस्तुतार्किकेणेश्वरज्ञानस्य गुणता वक्तुंनशक्यतइत्याह ॥ उपादानेति ॥ उपादानापरोक्षज्ञानत्वेने श्वरप्रमा कारणं तत्तत्कार्यकारणं । किलेत्यनेनोपादानापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यानीति तदीयप्रक्रियांसूचयति ॥ ४४८ ॥ युक्तिमप्याह ॥ कर्तृज्ञानमिति ॥ कर्तृज्ञानं कर्तुर्ज्ञानं तथैवो पादानापरोक्षज्ञानत्वेनैव । अनुत्पन्नकार्येषु पूर्वमनुत्पन्नानि पश्चादुत्पत्स्यमाना निवा घटादिकार्याणितेष्वित्यर्थः । नचेत् उपादानापरोक्षज्ञानत्वेन कर्तृज्ञानं कारणंनचेदित्यर्थः । कुलालस्य घटादिकर्तृत्वंन शोभते । अनुत्पन्नघटादिकार्यापरोक्षासंभवेन मृदाद्यपरोक्षज्ञानेनैवतस्यकर्तृत्वावश्यंभावादितिभावः ॥ ४४९ ॥ अस्तूक्तविधयै

कर्तृज्ञानंतथैवानुत्पन्नकार्येषुकारणं ॥ नचेद्घटादिकर्तृत्वंकुलालस्यनशोभते ॥ ४४९ ॥ ज्ञानोपादानमात्माते
तद्धीत्वेनैश्वरीमितिः ॥ कारणंस्यादर्थधीत्वेनापिहेतुत्वकल्पनं ॥ त्वच्छास्त्रगौरवायैवभारस्तेगौरवायन
॥ ४५० ॥ पुंनिष्ठस्तुगुणोलोकेपुंसितज्ज्ञानधर्मिणि ॥ गुणोन्यत्रानुमान्यत्रचित्रंशास्त्रप्रवर्तनं ॥ ४५१ ॥

वकर्तृता तथापिप्रकृतेकिमायातमित्यतआह ॥ ज्ञानोपादानमिति ॥ तेमते आत्माजीवः ज्ञानोपादानं । तद्धीत्वेन ज्ञानोपा दानात्मगोचरधीत्वेन । साचनगुणो भ्रमसाधारणत्वादितिभावः । त्वच्छास्त्रगौरवाय तवशास्त्रविस्ताराय भारः अप्रामाणिक कल्पनारूपत्वेनभारभूतं । एतादृशाप्रामाणिकार्थनिरूपणार्थंशास्त्रमेवबहुकृतंस्यात् । तेतवगौरवायन । गौरवग्रस्तप्रमेयनिरूपणेन त्वंविद्वज्जनमध्ये लघुस्स्याइतिभावः ॥ ४५० ॥ ईश्वरप्रमायागुणत्वकथनेऽदृष्टकल्पनाचेत्याह ॥ पुंनिष्ठइति ॥ लोकेऽजनादि

युक्ति- गुणः तज्ज्ञानधर्मिणि । अंजनजन्यज्ञानवति पुंसि पुरुषे पुन्नयनइत्यर्थः । प्रकृतेतु गुणो ग्राह्यप्रमालक्षणोगुणः अन्यत्रेश्वरे । मल्लिका
॥ ७० ॥ अनुमा। याद्दच्छिकानुमा अन्यत्रानुमातरिपुरुषे । तथाच चित्रंशास्त्रप्रवर्तनमितिसंबंधः । तथासति देवदत्तनयनगुणेन यज्ञदत्त गुणसौ०
स्यप्रमास्यादितिभावः ॥ ४५१ ॥ ईशप्रमायागुणत्वांगीकारेदोषांतरंचाह ॥ सर्वज्ञेति ॥ नृणांगुणश्चेत्प्रमाजनकगुणश्चेत् तर्हिक्व भ्रमोनृणांभवेत् । सर्वज्ञेतिहेतुगर्भविशेषणं । यत्रशुक्तौ रजतभ्रमोनृणां तत्राप्यैश्वरी शुक्तिरूपार्थप्रमास्त्येव । सर्वज्ञत्वादीश्वरस्य । साच यस्यपुरुषस्यभ्रमोभवेत् तस्यैव तत्रत्यशुक्तिप्रमायांत्वदुक्तरीत्यागुणोभूत् । तथाचतस्यशुक्तिप्रमैवस्यान्नरजतभ्रमइ

सर्वज्ञेशप्रमा नृणांगुणश्चेत्क्वभ्रमोभवेत् ॥ गुणेसतिप्रमावश्यंभावाद्दोषविरोधिनि ॥ ४५२ ॥
प्रसिद्धगुणसंत्यागेनाप्रसिद्धगुणोहनं ॥ नगुणश्शोधितधियांसुधियांकुधियामपि ॥ ४५३ ॥
दोषेसत्यप्रमासर्वादोषाभावे नसाक्वचित् ॥ तत्स्वतस्त्वंनतत्तत्वमितितत्वविदांमतं ॥ ४५४ ॥

तिभावः । तत्रकारणमाह ॥ गुणेसतीति ॥ दोषविरोधिनि गुणेसति प्रामावश्यंभावादितियोजना । ईश्वरप्रमा तस्यगुणश्चेत्तदीयदोषंनिरुध्यतस्यप्रमांजनयेत् । गुणस्यदोषविरोधित्वावश्यंभावादितिभावः ॥ ४५२ ॥ दोषांतरंचाह ॥ प्रसिद्धेति ॥ प्रसिद्धगुणसंत्यागेन अनुमानमात्रेगुणत्वेनपरसमयप्रसिद्धसल्लिंगपरामर्शाख्यगुणत्यागेन ॥ ४५३ ॥ अप्रामाण्यप्रतिबंदींपरिहरति ॥ दोषइति ॥ दोषेसति दोषेसत्येवेत्यर्थः । सा अप्रमा क्वचिन्नेतिसंबंधः । तत्तस्मा दप्रमायाअव्यभिचरितदोषान्वयव्य ॥ ७० ॥

तिरेकानुविधायित्वात् तत्स्वतस्त्वं तस्याऽप्रामाण्यस्य स्वतस्त्वं ॥ ४५४ ॥ ज्ञानसामान्यसामग्र्याउत्सर्गतःप्रमाजनकत्वमुपपादयति ॥ ज्ञानेति ॥ यद्यस्माद्बुधाः कार्यस्योपार्जिकामेव सामग्रींविदुः । तत् ज्ञानसामान्यसामग्री ध्रुवंज्ञानंजनयेदितिसंबंधः । बुधाइत्यनेन सामग्र्याःकार्यार्जकत्वनियमादितिवाक्यंसूचयति । तथाच ज्ञानानुत्पादकत्वे ज्ञानसामान्यसामग्र्येव सानस्यादितिभावः ॥ ४५५ ॥ तर्हिसामग्री भ्रममेवजनयत्वित्याशंक्याह ॥ ज्ञानंचेति ॥ ज्ञेयसापेक्षं ज्ञेयापेक्षयासहितं । ज्ञानंच यथा

ज्ञानसामान्यसामग्री ज्ञानंसंजनयेद्ध्रुवं ॥ कार्यस्योपार्जिकामेवयत्सामग्रींविदुर्बुधाः ॥ ४५५ ॥
ज्ञानंचज्ञेयसापेक्षंज्ञेयंचास्तियथायथा ॥ तथैवविषयीकुर्यात्स्वयोग्यंसतिसाधने ॥ ४५६ ॥
घटोयमितिहिज्ञानेचक्षुषाचघटेनच ॥ तत्संसर्गेणैवचालमेवमेवस्थलांतरे ॥ ४५७ ॥ सेयंज्ञा
नस्यसामान्यसामग्रीसाचधीःप्रमा ॥ तन्नप्रमाख्यबोधस्यसाधनेन्यानुधावनं ॥ ४५८ ॥

यथाज्ञेयंचास्ति तथैव स्वयोग्यज्ञेयं साधने इंद्रियादौ सति विषयीकुर्यादितियोजना ॥४५६॥ तदेवविशदयति ॥ घटोयमिति॥ तत्संसर्गेण चक्षुर्घटसंसर्गेण । एवमेव स्थलांतरे पटादिज्ञानस्थले ॥ ४५७ ॥ सेय मुक्ता ज्ञानस्य सामान्यसामग्री । इंद्रियार्थसन्निकर्षरूपत्वात् । उक्तासर्वापिसामग्री सामान्यसामग्रीत्यर्थः । साचधीः एवंचक्षुर्घटसन्निकर्षेसति जाता धीः प्रमा यथार्थेति संबंधः । अविद्यमानघटत्वाभावस्य स्वायोग्यत्वा त्तज्ज्ञानमजनयंती ज्ञानसामान्यसामग्री स्वसामग्रीत्वरक्षणाय स्वयोग्यघटा

दिज्ञानमेवजनयति । अतःपरिशेषात् प्रमाजनकत्वमेव सामान्यसामग्र्यास्स्वभावइतिसिद्धमितिभावः । तत्तस्मात्सामान्यसामग्र्या प्रमाजनकत्वस्वभावात् प्रमाख्यबोधस्यसाधने उत्पादने अन्यस्य सामान्यसामग्रीव्यतिरिक्तगुणादेरनुधावनमनुसरणंनेति संबंधः ॥ ४५८ ॥ तत्रदृष्टांतमाह ॥ गोवत्सेति ॥ गोभिर्धेनुभिः । गोवृषैर्गोवृषभैः । विजातीयस्यवत्सस्य तस्यामेवगवि विजातीयस्य गोविजातीयस्य महिषाद्याकारवत्सस्य । तत्सदृक्षः महिषोवा । अपरः कश्चित्पिशाचोपिवा महिषाकारवत्सस्यमहिषः

गोवत्सजननेगोभिर्गोवृषैरेवपूर्यते ॥ विजातीयस्यवत्सस्यतत्सदृक्षोपरोपिच ॥ ४५९ ॥ महि
षोवापिशाचोवाकश्चिन्निश्चीयतेयतः ॥ अतस्स्वयोग्यार्थबोधेचक्षुषान्यन्नमान्यते ॥ ४६० ॥
स्वायोग्यविपरीतार्थधीषुदोषोप्यपेक्ष्यते ॥ ४६१ ॥ इंद्रियस्यार्थसंबंधोज्ञानसामान्यकारणं ॥
यच्चक्षुरश्शुक्तिसंयोगि साच रूप्योपमा रुचा ॥ प्रतीत्याव्यवहृत्याचारोप्यंरूप्योपमंकिल ॥४६२॥

शृंगपुच्छादिभिर्विकृतस्यतुवत्सस्य पिशाचइतिविवेकः । यतोनिश्चीयतेऽतइतिसंबंधः ॥ ४५९ ॥ ४६० ॥ स्वायोग्यविजातीयकार्येएव विजातीयकारणांतरापेक्षणादितिभावः.। अन्यद्गुणादिकं । स्वायोग्यविपरीतार्थधीष्वत्यंतासत्त्वेनचक्षुरयोग्यविपरीतार्थरजतादिभ्रमेषु ॥ ४६१ ॥ नन्वयंघटइतिप्रमायांविशेषणीभूतघटेनापिसन्निकर्षश्चक्षुषोस्ति । भ्रमेतुरजतचक्षुस्सन्निकर्षाभावाद्विशेषणसन्निकर्षोनास्ति । अतःकथमुक्ता प्रमासामग्री सामान्यसामग्रीत्यतस्तदुपपादयति ॥ इंद्रियस्येति ॥ ज्ञानसामान्यकारण 

भूतेंद्रियार्थसन्निकर्षोभ्रमेप्यस्ति । य द्यस्मा च्चक्षुश्शुक्तिसंयोगि । साचशुक्तिः रुचा कांत्या रजतोपमा । आरोप्यं शुक्तिकायामारोप्यंरजतं प्रतीत्याव्यवहृत्याच रजतत्वप्रकारकप्रतीत्युल्लेख्यत्वेन रजतमित्यभिधाविषयत्वेनच रूप्योपमं प्रधानभूतरूप्यसदृशं । किलेत्यनेनास्यसर्वस्यप्रमेयस्य व्यवहारसिद्धतांदर्शयति । तथाच चक्षुस्सन्निकृष्टशुक्तिशकलसदृश सद्रूप्यसादृश्य मारोप्येप्यस्ति । तस्मात्परंपरयाऽऽरोप्यरजतमपि चक्षुस्सन्निकृष्टमेवेति विशेषणसन्निकर्षस्यापि भ्रमसाधारणत्वात्सामान्यसामग्रीत्वं । नहिसर्वत्रैकविधएवसन्निकर्षइतिनियमोस्ति । क्वचित्संयोगः क्वचित्समवायः क्वचिद्विशेषणविशेष्यभावश्चेति त्वयाप्यंगीकारादितिभावः ॥ ४६२ ॥ उक्तसादृश्यस्यावश्यकतामाह ॥ इत्थमिति ॥ इत्थं पूर्वोक्तसादृश्यघटितत्वेन तस्यांशुक्तौ रूप्यभ्रमः रू

इत्थंरूप्यभ्रमस्तस्यांमण्यादेर्नभ्रमोत्रतत् ॥ ४६३ ॥ चक्षुस्स्थपीतपित्तेनयो
गाच्छंखेपिपीतधीः ॥ अतःपारंपर्यतोर्थसंबंधोस्तिभ्रमेपिच ॥ ४६४ ॥

प्यभ्रमएवास्ति । तत्तस्मा त्सादृश्यस्यापेक्षितत्वादेवा त्रशुक्तौ मण्यादेर्विसदृशस्य भ्रमोनेतिसंबंधः । अथवा यद्यस्मात्तस्यांशुक्तौ रूप्यभ्रमएवास्ति । अत्रशुक्तौ मण्यादेर्विसदृशस्यभ्रमोन । तत्तस्मा त्सादृश्यस्य निरुपाधिकभ्रमेऽन्वयव्यतिरेकानुविधायकत्वात् इत्थं प्रागुक्तप्रमेयमित्थमेवेत्यर्थः । अन्यथाख्यातिमतेतु चक्षुस्सन्निकृष्टशुक्त्या साक्षात्सादृश्यमेवसंबंधइतिद्रष्टव्यं ॥ व्याप्तिग्रहणस्थले चक्षुस्सन्निकृष्टधूमसादृश्यस्यवा धूमत्वसामान्यप्रत्यासत्तेर्वा ऽतीतानागतधूमसंबंधत्वांगीकारान्नेदमपूर्वं । वस्तुतस्समानस्यभावस्सामान्यमितिव्युत्पत्तेस्सामान्यमपिसादृश्यघटकमेव ॥ ४६३ ॥ सोपाधिकभ्रमेपि चक्षुस्सन्निकर्षमुपपादयति

॥ चक्षुस्स्थेति ॥ चक्षुस्स्थं यत्पीतंपित्तं तेनयोगा च्छंखेपिपीतधीः पीतश्शंखइतिधीर्भवति यतो ऽतः पीतश्शंखइतिभ्रमेपि पा
रंपर्यतः चक्षुस्संयोगश्शंखे तस्मिंश्च नायनपित्तसंबंध स्तत्रचपीतिमेतिपरंपरया शंखेपिपीतगुणसंबंधोस्ति। अतःपीतश्शंखइतिभ्र
मइतिभावः। तथाच विशेष्येंद्रियसन्निकर्षोविशेषणेंद्रियसन्निकर्षश्चेति द्वयमपिज्ञानसामान्यसामग्रीत्युक्तंभवति ॥४६४॥ तर्हिंभ्रमे
पिसादृश्यादिनैवालंकिंदोषेणेत्यतआह ॥ सादृश्यमिति ॥ सादृश्यं शुक्तौरजतसादृश्यं शुक्तिसदृशोयोयमन्योर्थोरजतादिः त
ज्ज्ञापनाय स्वयंपटु । रजतंकीदृशमित्युक्ते शुक्तिसदृशमित्युक्तेयथाशुक्तिस्तथेति स्वनिष्ठसादृश्यप्रतियोगितया तज्ज्ञापनाय

सादृश्यंसदृशान्यार्थज्ञापनायस्वयंपटु ॥ तदेकत्वज्ञापनायदोषाश्लेषमपेक्षते ॥ ४६५ ॥ अतो
न्यस्यान्यताबोधेदोषोप्यन्विष्यतेबुधैः ॥ अत्यंतमसतोर्थस्यसत्ताधीःकथमन्यथा ॥ ४६६ ॥
विशेषणाभेदबोधेविशेष्येंद्रियसंगमः ॥ प्रमास्वलंमेसामान्यसामग्रीसाभ्रमेपियत् ॥ ४६७ ॥

दोषंनापेक्षतइतिभावः । तदेकत्वज्ञापनाय यच्छुक्तिसदृशंरजतादितस्यैकत्व मभेद स्तज्ज्ञापनाय रजसमेवेदमितिज्ञापनायेत्य
र्थः । दोषाश्लेष काचादिदोषसंबंधमप्यपेक्षते । चक्षुरपेक्षतइतियोजना ॥ ४६५ ॥ तदेवविशदयति ॥ अतइति ॥ अन्यताबोधे
अन्याभेदबोधे । अन्यथा दोषाभावे अत्यंतमसतः सर्वदाअविद्यमानस्यार्थस्यशुक्तिरजततादात्म्यस्य ॥ ४६६ ॥ प्रकारांतरेणप्र
माज्ञानसामान्यसामग्रीजन्यत्वमुपपादयति ॥ विशेषणेति ॥ विशेषणं घटादि विशेष्यं अयमित्युल्लिख्यमानःपुरोवर्ती ।

तत्र विशेषणस्यघटादे र्विशेष्येण पुरोवर्तिनासहाभेदबोधे विशेषणतादात्म्यबोधे घटोयमितितादात्म्यबोधइतियावत् । विशेष्यं पुरोवर्ति । इंद्रियं चक्षुरादि । तयोस्संगमस्संबंधः प्रमासु घटोयमित्यादितादात्म्यप्रमासु मेमम मते अलं पर्याप्तं । विशेषणघट स्यैव पुरोवर्तिविशेष्यात्मकत्वेनातिप्रसंगाभावात् । पृथग्विशेषणसन्निकर्षरूपगुणोनापेक्ष्यतइतिभावः । विशेष्यसन्निकर्षश्चभ्रम साधारणत्वात् ज्ञानसामान्यसामग्रीत्याह ॥ सामान्येति ॥ सा विशेष्येंद्रियसन्निकर्षरूपा सामग्री ज्ञानसामान्यसामग्री । तत्र हेतु भ्रमेपीति ॥ यद्यस्मात्कारणात् भ्रमेपि विशेष्येंद्रियसंयोगरूपा सामग्र्यस्ति । विशेष्यभूतशुक्तिशकलेनेंद्रियसन्निकर्षस्य

अतोघटोयमित्याद्याघटाद्यैक्यप्रमामम ॥ साक्षात्कारिज्ञानहेतुमात्रजन्याखिलाभवत् ॥ ४६८ ॥
भ्रमेविशेष्यशुक्त्यक्षिसंयोगोस्ति विशेषणं ॥ रजतंतु न तत्संगि भिन्नत्वात्तन्नतस्यधीः ॥ ४६९ ॥

तत्रापिसत्त्वात् ॥ ४६७ ॥ तादात्म्यप्रमास्थलेउपपादितमर्थमुपसंहरति ॥ अतइति ॥ अत उक्तरीत्या विशेष्येंद्रियसन्निकर्षे णैवपूर्तेः तस्यच विशेष्येंद्रियसन्निकर्षो विशेषणज्ञानं तयोरसंसर्गाग्रह इत्युक्तसामान्यसामग्रीरूपत्वादित्यर्थः । साक्षात्कारज्ञान हेतुमात्रजन्या साक्षात्कारज्ञानसामान्यसामग्रीजन्येतियावत् ॥ ४६८ ॥ अप्रमायाउक्तसामान्यसामग्रीजन्यत्वाभावमुपपादय ति ॥ भ्रमइति ॥ विशेष्याचसा शुक्तिश्चेतिविग्रहः । विशेषणंरजतंतु तत्संग्यक्षिसंगि नेतिसंबंधः । भिन्नत्वा द्विशेष्यशुक्तिभिन्नत्वात् । अतः प्रमायामिव विशेष्यसन्निकर्षएव विशेषणसन्निकर्षोनाभूदितिभावः । तत्तस्माद्विशेषणभूतरजतसन्निकर्षाभावात् तस्य रज

तस्य धीः प्रमायांक्लृप्तसामान्यसामग्रीमात्रतः प्रमायांक्लृप्ता या सामान्यसामग्री विशेष्यसन्निकर्षमात्ररूपा तन्मात्रतस्तस्मादेवेत्यर्थः । नभवेदितियोजना । प्रमायामिव विशेष्यविशेषणयो रभेदाभावेन विशेष्यसन्निकर्षस्यैवविशेषणसन्निकर्षत्वाभावा त्पृथक्सन्निकर्षस्यच रजतरूपविशेषणस्यात्यंतासत्त्वेनासंभवा दसन्निकृष्टेचार्थे चक्षुषोज्ञानजनकत्वादर्शनादितिभावः । तथाचाक्ष्णाऽसन्निकृष्टरजतबोधनाय दोषोप्यवश्यमपेक्ष्यतइतिभावेनाह ॥ असन्निकृष्टेति ॥ असन्निकृष्टंयद्रजतं तद्दृष्ट्यै ॥ ४६९ ॥ ४७० ॥ दंडीकुंडलीत्यादिविशेषणसंसर्गप्रमायांतु विशेषणतादात्म्यप्रमायामिव नविशेष्यसन्निकर्षमात्रेणालं । पृष्ठनिहितदंडेदंडीतिज्ञा

प्रमायांक्लृप्तसामान्यसामग्रीमात्रतोभवेत् ॥ असन्निकृष्टतद्दृष्ट्यैदोषोप्येष्टव्यएवहि ॥ ४७० ॥
विशेषणस्यभेदेक्ष्णातत्संसर्गोप्यपेक्ष्यते ॥ सापिसामान्यसामग्रीयद्भ्रमेप्यस्तितादृशि ॥ ४७१ ॥
वस्तुतःकाकिनिगृहेकाककोकिलवत्तयोः ॥ प्रमायांचभ्रमेचाक्ष्णःकिंनकाकगृहान्वयः ॥ ४७२ ॥

नाभावात् । अतो विशेषणसन्निकर्षोप्यधिकोपेक्षितः । सचतादृशसंसर्गारोपेपिविद्यमानत्वान्नविशेषसामग्रीत्याह ॥ विशेषणस्येति ॥ भेदे विशेष्याद्भेदे । तत्संसर्गः विशेषणसंसर्गः । सापि विशेषणसंसर्गघटितापि । यद्यस्मा त्तादृशि तत्संसर्गप्रमासदृशि संसर्गारोपरूपइतियावत् । अस्ति तस्मा द्भ्रमसाधारणत्वात् सामान्यसामग्रीतिपूर्वेणान्वयः ॥ ४७१ ॥ संसर्गप्रमायां संसर्गभ्रमेच विशेषणसन्निकर्षस्यसाधारण्यंप्रदर्शयति ॥ वस्तुतइति ॥ वस्तुतस्स्वभावतः । काकिनि काकवति काककोकिलवत्तयोः ॥ ७३ ॥

प्रमायांभ्रमेच काकवदिति काकसंसर्गप्रमायां काकेकोकिलत्वमारोप्य कोकिलवदितिविशेषणसंसर्गभ्रमेचा क्ष्णः काकगृहान्वयः विशेषणीभूतकाकसंसर्गः विशेष्यभूतगृहसंसर्गः पृथक्पृथक्किं नेतिसंबंधः । तस्माद्विशेषणप्रमायां विशेषणभ्रमेच विशेष्यविशेषणयोरुभयोरपि संसर्गस्साधारणएवेतिभावः ॥४७२॥ तर्हिभ्रमेदोषोपिनापेक्षितःकिंनेत्याह॥ तत्रापीति ॥ कोकिलवद्गृहमितिज्ञानेपि कोकिलः काकाभिन्नतयाज्ञायमानःकोकिलोऽसंगी चक्षुरसंगी । त त्तस्मात्कोकिलसंसर्गाभावा त्तद्भ्रांतिर्दोषजैवेतियोजना । उक्तमर्थमुपसंहरति ॥ अतइति ॥ उक्तंसमस्तं प्रमायाज्ञानसामान्यसामग्रीमात्रजन्यत्वं अप्रमायाश्चदोषसहितज्ञानसामान्यसा

तत्रापिकोकिलोऽसंगीतद्भ्रांतिर्दोषजैवतत् ॥ अतश्चोक्तंसमस्तंचतत्वमासीदनाकुलं ॥ ४७३ ॥ यथाघटा
दिकार्येषुदंडत्वेनैवलाघवात् ॥ हेतुता दंडदार्ढ्यादि त्ववच्छेदकमेवते ॥ ४७४ ॥ तथाचक्षुश्चचक्षुष्ट्वेनैवहे
तुर्लघुत्वतः ॥ अदुष्टत्वंतुतन्निष्ठमवच्छेदकमस्तुमे ॥ ४७५ ॥ अभावगुणजाप्येवं या न सा नगुणांतरात्
॥ ४७६ ॥ भ्रमेत्वत्यंतासतोपिसत्तायाबोधसाधने ॥ दोषस्यहेतुतावश्यंवाच्या तत्परतोप्रमा ॥ ४७७ ॥

मग्रीजन्यत्वं ॥ ४७३ ॥ दोषाभावस्य यादृच्छिकसंवादिनिव्यभिचारात् नप्रमाकरणतेत्युक्तं । प्रकारांतरेणापितस्यकारणतांनिराकरोति ॥ यथेति ॥ दंडस्येतिशेषः ॥ ४७४ ॥ दृष्टांतमुक्त्वादार्ष्टांतिकमाह ॥ तथेति ॥ हेतुःप्रमाहेतुः । तन्निष्ठंचक्षुर्निष्ठं ॥ ४७५ ॥ दोषाभावस्यावच्छेदकत्वेकिंसिद्धमित्यतआह ॥ अभावेति ॥ याप्रमा । गुणांतरात् भावरूपगुणात् । सा प्रमा तदुत्पन्नानेत्यर्थः ॥ ४७६ ॥ अप्रामाण्यपरतस्त्वमावश्यकमित्याह ॥ भ्रमेत्विति ॥ अत्यंतासतोपीत्यनेन सन्निकर्षाभावंसूचयति।

तत्तस्मा द्दोषस्यावश्यंभावात् ॥ ४७७ ॥ दोषाभावस्यप्रमाकरणत्वाभावंप्रकारांतरेणसाधयति ॥ यद्वेति ॥ प्रतिबधकंः प्रमाप्र तिबंधकः ॥ ४७८ ॥ व्यभिचाराद्दोषाभावस्यगुणस्यचनकारणतेत्युक्तं । तद्विशदयन्नुक्तपक्षद्वयंसहसंगृह्णाति ॥यादृच्छिकेति॥ यादृच्छिकश्चासावर्थनिर्बाधबोधश्चेतिविग्रहः । यादृच्छिकप्रमायामितियावत् ॥ ४७९ ॥ अत्रैव प्रमारूपयादृच्छिकानुमितावेव तद्गुणांतरं ॥ ४८० ॥ तस्मादुक्तविधयाप्रमायागुणजन्यत्वाभावात् । द्विरूपज्ञानस्य प्रमाऽप्रमारूपज्ञानस्य सामग्रीचद्विरू

यद्वाचक्षुःप्रमाहेतुर्दोषस्तुप्रतिबंधकः ॥ प्रतिबंधस्यचाभावोनहेतुरितिसाधितं ॥ ४७८ ॥ यादृ
च्छिकार्थनिर्बाधबोधेस्मिन्दृष्टिलिंगजे ॥ व्यभिचारात्प्रमाहेतुर्दोषाभावोनकुत्रचित् ॥ ४७९ ॥
गुणांतरंचसल्लिंगपरामर्शादिशब्दितं ॥ यतोत्रैवन तच्चातोनप्रमाकारणंक्वचित् ॥ ४८० ॥ तस्मा
द्विरूपज्ञानस्यसामग्रीचद्विरूपिणी ॥ सामान्या प्रायिकेज्ञानेयतस्सर्वत्रसर्वदा ॥ ४८१ ॥

पिणी । ज्ञानस्यप्रमाऽप्रमारूपतयाद्विरूपत्वेन तृतीयज्ञानकोटेरभावात् सामग्र्यपि प्रमासामग्री भ्रमसामग्रीचेति द्विरूपिण्येव । ननुप्रमासामग्र्यतिरिक्तज्ञानसामान्यसामग्रीमादायत्रिरूपिणी । किंतुसामान्यसामग्रीप्रमायां दोषघटितसामग्र्यप्रमायामित्येवालं। सामान्यसामग्र्याएव प्रमासामग्रीत्वमुपपादयति ॥ सामान्येति ॥ प्रायिके बाहुल्येनजायमाने ज्ञाने प्रमारूपज्ञाने । सामा न्या ज्ञानसामान्यसामग्री युक्ता । उभयोरपिसामान्यरूपत्वेन योग्यंयोग्येनसंबध्यतइतिन्यायादितिभावः । प्रमायांप्रायिकत्वं

साधयति ॥ यतइति ॥ यतो नृणां सर्वत्र सर्वदा प्रमैवभवति । नहि कोपिमनुष्य स्स्वस्वगृहकलत्रपुत्रवित्तादौ सर्वदाभ्राम्य ति । यतःपशुपक्ष्यादयोपिस्वगोष्ठस्वनीडादौनभ्रांताभवंति । अतः प्रमायाऔत्सर्गिकत्वेन सामान्यरूपत्वमितिभावः । क्वाचि त्केतु अतिदूरत्वादिदोषवशात्कदाचिज्जायमानेभ्रमेतु । तत स्सामान्यसामग्रीतोऽपरा दोषसहिताविशेषसामग्रीतियोजना । भ्र मस्य तत्सामग्र्याश्च विशेषरूपत्वादितिभावः । भ्रमस्यक्वाचित्कत्वमुपपादयति ॥ काचादीति ॥ एवंच प्रमाभ्रमयोस्सामान्य विशेषरूपयोस्तादृशसामग्रीजन्यत्वावश्यंभावा देकत्रस्वतस्त्व मपरत्र परतस्त्व मितियुक्त्यंतरमेतदितिभावः ॥ ४८१ ॥४८२॥

प्रमैवप्रायशोनृणां क्वाचित्केतुततोपरा ॥ काचादिदोषजाभ्रांतिर्नहिसर्वस्यसर्वदा ॥ ४८२ ॥
उत्पत्तावपिचज्ञप्तौतस्मात्सद्भिरुदीरितं ॥ स्वतस्त्वंपरतस्त्वंचतत्त्वंवित्त्वस्यसाधकं ॥ ४८३ ॥
विमतासन्निकृष्टापूर्वार्थादोषजदृष्टिदृक् ॥ ज्ञानप्रामाण्यार्थसत्त्वोल्लेखेननियतामता ॥ ४८४ ॥

प्रामाण्यस्यस्वतस्त्वसाधनमुपसंहरति ॥ उत्पत्ताविति ॥ प्रामाण्यस्य स्वतस्त्व मप्रामाण्यस्यपरतस्त्वं । वित्त्वस्य विदोभा वोवित्त्वं । विद्वत्त्वस्येत्यर्थः ॥ ४८३ ॥ ज्ञप्तौस्वतस्त्वेऽनुमानमाह ॥ विमतेति ॥ विमता स्वतस्त्वपरतस्त्वविप्रतिपत्तिधर्मि भूता । विमतामेवश्रृंगग्राहकतयादर्शयति ॥ सन्निकृष्टेति ॥ सन्निकृष्टश्चासावपूर्वार्थश्च तस्य अदोषजा यादृष्टि स्तस्याःदृक् अनुव्यवसायइतियावत् । सन्निकृष्टेतिदोषाजन्यत्वेहेतुसूचनं । अपूर्वेत्यनेना नभ्यासदशापन्नत्वंसूचयति । अदोषजेत्यनेन दोष

जन्यसंशयादिज्ञानानुव्यवसायेबाधःपरिहृतः । अपूर्वेत्यनेनद्वितीयानुव्यवसायमादायसिद्धसाधनतापिपरिहृता । ज्ञानप्रामाण्य
स्या र्थसत्तोल्लेखेना र्थसत्तानिश्चयरूपेणयोयमुल्लेखः तेननियतेतिसाध्यं । प्रामाण्यसंशयघ्नाप्रामाण्याग्राहिप्रमात्वतः प्रमात्वादि
तिहेतुः । घटादिज्ञानेव्यभिचारपरिहारायप्रामाण्यसंशयघ्नेति । अप्रामाण्यनिश्चये व्यभिचारपरिहारार्थ मप्रामाण्याग्रहीत्युक्तं ।
मानसविपरीतानुव्यवसाये व्यभिचारपरिहारार्थंप्रमात्वतइति । या इत्थं सातथा । यथेदंज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वादिति
तवानुमेति ॥ ४८४ ॥ ४८५ ॥ ननुयस्मिन्ज्ञानेऽनुव्यवसायेनातद्वतितत्प्रकारकत्वरूपाप्रामाण्यंनगृह्यते किंतुतद्वतितत्प्रकारकत्वल

प्रामाण्यसंशयघ्नाप्रामाण्याग्राहिप्रमात्वतः ॥ यथातवानुमेत्युक्तस्वतस्त्वेस्त्यनुमापिमें ॥ ४८५ ॥
प्रामाण्यस्यविरोध्येवाप्रामाण्यंभण्यतेयतः ॥ तत्साकुत्सितशंकांचहुंकारेणैववारयेत् ॥ ४८६ ॥

क्षणप्रामाण्याभावएवगृहीतोनुव्यवसायेन । तस्मिन्ननुव्यवसायेव्यभिचारः । तत्राप्रामाण्याग्रहेपि प्रामाण्याभावस्यग्रहणेन ज्ञा
नंप्रमानवेतिसंशयाजननेनोक्तहेतोर्विद्यमानत्वा दुक्तसाध्यस्यचाभावाद्व्यभिचारइत्यतआह ॥ प्रामाण्यस्येति ॥ अप्रामाण्याग्रा
हिप्रमात्वादित्यत्रा प्रामाण्यपदेन प्रामाण्यविरोध्येवाप्रामाण्यंभण्यते यत स्तस्मादितिसंबंधः । तथाचप्रामाण्यसंशयघ्न प्रामाण्य
विरोध्यग्राहिप्रमात्वादितिनिष्कृष्टंहेतुस्वरूपं । तथाच प्रामाण्यविरोधिनःप्रामाण्याभावस्यैवग्रहणेना प्रामाण्याग्राहिप्रमात्वस्यैवा
भावात्तादृशानुव्यवसायेनव्यभिचारइतिभावः । समानप्रकारकयोरेव निवर्त्यनिवर्तकभावांगीकारात् संशयघ्नपदेनैव व्याप्यद ॥ ७५ ॥

र्शनस्यापिव्यावर्तितत्वान्नतद्व्यावृत्त्यर्थंपृथग्विशेषणमितिद्रष्टव्यं ॥ ४८६ ॥ दूरस्थसमीपस्थघटज्ञानानुव्यवसाययोराकारवैचि
त्र्याच्चैकत्रप्रामाण्यग्रहणमावश्यकमित्यनुकूलतर्कंवक्तु माकारवैचित्र्यंदर्शयति ॥ जानामीति ॥ घटमेवाहंजानामि नत्वन्य
मित्याकृत्यैव साऽनुव्यवसितिः यद्यस्मात्कीर्त्यते समीपस्थघटादिदर्शिभिःपूर्वैर्जनैः ॥ ४८७ ॥ दूरस्थेतु परं केवलं घटंजानामी
तिधी स्संमुग्धाकारेणैवजायते । नतुसावधृतिः घटमेवेत्यवधारणसहिता । तत्र दूरस्थवस्तुदर्शने ॥ ४८८ ॥ नन्वेवंव्यवहारवै

जानामिघटमेवाहमित्याकृत्यैवकीर्त्यते ॥ यत्सा तत्साधयेदेव कृत्स्नापि ज्ञानमानतां ॥ ४८७ ॥ दूरस्थे
तुघटंजानामीतिधीर्जायतेपरं ॥ नतुसावधृतिस्तत्रमानत्वावधृतिश्चन ॥ ४८८ ॥ व्यवहारस्यवैचित्र्येकथंनज्ञा
नचित्रता ॥ अतोनुकूलस्तर्कोपिकर्कशीकुरुतेनुमां ॥ ४८९ ॥ प्रमा नगुणतोजन्याज्ञानत्वादप्रमायथा ॥ इत्यु
त्पत्तौचानुमितिर्बाधाभावाद्ववेद्दिनः ॥ ४९० ॥ दोषाभावोपियद्दोषीकोसावत्रगुणोगुणी ॥ ४९१ ॥

चित्र्येपि कुतोनुव्यवसाययोः प्रामाण्यग्रहणाग्रहणरूपवैचित्र्यमित्यतआह ॥ व्यवहारस्येति ॥ घटमेवाहंजानामीति घटमहं
जानामीति द्विप्रकारकाभिलपनरूपव्यवहारस्य । अतो विचित्रव्यवहारसिद्धानुव्यवसायवैचित्र्यस्यसर्वजनसिद्धत्वात् । अनु
कूलतर्कः ग्राह्यप्रामाण्यवैचित्र्याभावे ग्राहकानुव्यवसायवैचित्र्यंनस्यादित्यनुकूलतर्कइत्यर्थः ॥ ४८९ ॥ उत्पत्तिस्वतस्त्वेऽनुमान
माह ॥ प्रमेति ॥ प्रमा जन्यप्रमा ॥ ४९० ॥ इदानींसाहित्यमुद्रयागुणंनिराकरोति ॥ दोषाभावइतिं ॥ यद्यस्मा द्दोषाभा

त्वोपिदोषी प्रमान्वयव्यतिरेकव्यभिचाररूपदोषवान् । तस्मात्प्रमायां कोसौ गुणो गुणी अन्वयव्यतिरेकाख्यगुणवानित्यर्थः । ये दोषाभावमपि सदोषंचक्रु स्तेगुणं सदोषंकथंनकुर्युः । अतिविरुद्धयोर्भावाभावयोर्घटनंकुर्वतो भावयोःकथंघटनांनकुर्युरितिविरोधाभासस्फोरणेनसाहित्योक्तिः । भावाभावरूपयोरुभयोरपिगुणयोर्व्यभिचारात् स्वतस्त्वे नकश्चित्क्षुद्रोपद्रवइतिहृदयं ॥४९१॥ यद्बलादेतावच्चर्चितं तन्मूलशास्त्रंस्तौति ॥ विस्तरस्त्विवति ॥ अस्यसर्वस्य प्रमेयस्य । तत्तटस्थाणुमणिसंग्राहिणः तस्य मूलशास्त्रमहा

विस्तरस्त्वस्यसर्वस्यमूलशास्त्रमहार्णवे ॥ द्रष्टव्यस्तत्तटस्थाणुमणिसंग्राहिणोवयं ॥ ४९२ ॥ ॥ ७ ॥
अत्रप्रतीतरजतस्यात्रसत्त्वं न बाधकात् ॥ साधकाभावतश्चान्यत्रापिसत्ता नसेत्स्यति ॥ ४९३ ॥
नह्यत्रदृष्टंरजतमन्यत्रास्तीतिधीर्नृणां ॥ प्रतीतिरेवहिगतिस्तत्तदर्थव्यवस्थितौ ॥ ४९४ ॥ इंद्रियस्यैवसंबंधाद्विशेषणविशेष्ययोः ॥ द्वयोश्चधीर्भवे त्तत्रप्राग्विशेषणधीर्वृथा ॥ ४९५ ॥

र्णवस्य तटस्थो वायुप्रेरणयातटेआगतोऽणुर्मणि र्युक्तिरूपमौक्तिकं तत्संग्राहिणइत्यर्थः ॥ ४९२ ॥ ७ ॥ अन्यथाख्यातिवादिनामित्यनेन स्वस्यतत्रास्वरसःप्राक्सूचितः । तमिदानीमुपपादयति ॥ अत्रप्रतीतेत्यादिना ॥ अत्र पुरोवर्तिदेशे । बाधकात् नेदं रजतमित्यनुभवात् । अन्यत्रपुरोवर्तिदेशादन्यदेशे ॥ ४९३ ॥ साधकाभावमेवदर्शयति ॥ नह्यत्रेति ॥ नन्वन्यत्रास्तीतिबुद्ध्यभावेपि तत्रतदंगीकारेकोदोषइत्यतआह ॥ प्रतीतिरेवेति ॥ ४९४ ॥ ननुविशिष्टज्ञानस्यविशेषणज्ञानजन्यत्वनियमा दस्यैव

विशेषणस्यप्राग्ज्ञानायान्यत्रसत्त्वंवाच्यमित्यत स्सएवनियमोनापेक्षितइत्याह ॥ इंद्रियस्यैवेति ॥ तत्र विशेषणविशेष्ययोरुभयोरपींद्रियसंबंधस्थले । प्रा ग्दंडीतिविशिष्टज्ञानात्पूर्वं ॥ ४९५ ॥ ननुविशेषणत्वनिर्वाहाय पूर्वंतस्यज्ञानमित्यतआह ॥ पूर्वमिति ॥ पूर्वं अनुमितेःपूर्वं। अनुमानमात्रेधर्मिज्ञानस्य कारणत्वादितिभावः । ततृतस्मात् । प्राक्ज्ञातस्यापिपर्वतस्यविशेष्यत्वात् ॥ ४९६ ॥ तर्ह्यनुमानेकुतोविशेषणज्ञानानुसरणमित्यतोऽन्यथासिद्धंतदित्याह ॥ व्याप्तिज्ञानायेति ॥ व्यापकत्वेन व्याप्यंहेतुं प्रति व्यापकाख्यापरसंबंधित्वेन । व्याप्यव्यापकभावरूपव्याप्तिज्ञाने व्यापकस्यापिज्ञेयतयानिविष्टत्वात् तज्ज्ञानं नतुभाव्यनुमि

पूर्वंज्ञातोप्यनुमितौविशेष्यःपर्वतोयतः ॥ प्राग्विशेषणधीरर्थसाक्षात्कारेवृथैवतत् ॥ ४९६ ॥ व्या
प्तिज्ञानायवह्न्यादेर्व्यापकत्वेनधीःपुरा ॥ अपेक्ष्यते परं साध्यवैशिष्ट्येधीर्नसिद्धधीः ॥४९७॥ अस
न्निकृष्टदृष्टिंचयोदोषस्साधयेद्भ्रमे ॥ सतस्याज्ञाततामात्रान्नबिभेतीतिमेमतिः ॥ ४९८ ॥

तिरूपविशिष्टज्ञानोपयोगितयेतिभावः। पुरा अनुमितेःपूर्वं। साध्यवैशिष्ट्ये पर्वतस्यसाध्यवैशिष्ट्ये। विषयसप्तमीयं। विशिष्टविषयेधीरित्यर्थः। सिद्धधीः प्राग्ज्ञातस्यधीः। अनुमितिविशेषणस्यसाध्यस्य पूर्वंज्ञातत्वनियमांगीकारे हेतोस्सिद्धसाधनतास्यादितिसूचनाय सिद्धधीरित्युक्तं ॥ ४९७ ॥ ननुतर्हिमास्तु प्रमास्थलेविशेषणज्ञानस्योपयोगः। इंद्रियसंबंधेनैवचरितार्थत्वात् । भ्रमेविशेषणेंद्रियसंबंधाभावात्तदुपयोगइत्यतआह ॥ असन्निकृष्टेति ॥ असन्निकृष्टदृष्टि मिंद्रियासंबंधिरजतदर्शनं। सः प्रत्यक्षे अ

युक्ति- साधारणकारणेंद्रियसन्निकर्षाभावेपिरजतादिकंदर्शयन् तस्य रजतस्य अज्ञाततामात्रात् पूर्वज्ञानाभावमात्रात् । मात्रपदेन विशेष मल्लिका
णज्ञानस्यप्रमायामनुपयोगदर्शनेनानावश्यकत्वंसूचयति । असाधारणकारणमप्यनपेक्षमाणस्यदोषस्य संदिग्धकारणानपेक्षाकिंवा गुणसौ०
॥ ७७ ॥ च्येतिभावः ॥ ४९८ ॥ ननुपुरोवर्तिन्यसतोरजतस्यान्यत्राप्यसत्त्वे सर्वथाऽसत्त्वप्रसंगेन कथंतद्दर्शनमितिचोद्यं प्रतिचोद्येनपरि
हरति ॥ सर्वत्रेति ॥ तर्हि सर्वत्रासतएकत्रज्ञानाभावे । तत्र पुरोवर्तिदेशे । भूतलेऽविद्यमानघटस्य तत्रैवादर्शनादितिभावः ।
दोषाच्चेत् तत्रासतोपितत्रज्ञानंचे त्तद्बलात् दोषबलात् । तत्रासंतंतत्रदर्शयितुंसमर्थोदोषः कथमन्यत्रासंतमेकत्रनदर्शयेत् । अ

सर्वत्राप्यसतोज्ञानंयदिचैकत्रनेष्यते ॥ तर्हितत्रासतोज्ञानंकथंतत्रेतिचिंत्यतां ॥ दोषाच्चेत्तद्बलादेवसर्वत्रा
प्यसतोस्तुधीः ॥ ४९९ ॥ असत्प्रतीतौमानंचप्रतीतिरियमेवनः ॥ अत्रप्रतीतंयन्मूर्तमिदंनान्यत्रनात्रच
॥ ५०० ॥ किंचरूप्यस्यशुक्तेश्चतादात्म्यमसदीक्ष्यते ॥ नचेत्प्रवृत्तिरभिलापोवातत्रकथंनृणां ॥ ५०१ ॥

स्यचप्रकारस्यघटादौदृष्टत्वेनसुलभत्वात्सुखेनेदंदर्शयेदितिभावः ॥ ४९९ ॥ नन्वसतःप्रतीतौकिंप्रमाणमित्यतआह ॥ असत्प्रती
ताविति ॥ इय मिदंरजतमित्यादिरूपा । तदुपपादयति ॥ अत्रेति ॥ यद्यस्मादत्रपुरोवर्तिदेशे प्रतीतंमूर्तं रजतसर्पादि विभु
त्वरहितमित्यर्थः । अन्यत्रदेशांतरे न । अत्र पुरोवर्तिदेशेचनेतियोजना । नेदंरजतमितिबाधकादत्रन । अत्रप्रतीयमानमूर्तत्वरू ॥ ७७ ॥
पबाधकात्अन्यत्रन । घटादिमूर्तद्रव्येषुतथादर्शनादितिभावः ॥ ५०० ॥ प्रकारांतरेणाप्यसत्प्रतीतिमुपपादयति ॥ किंचेति ॥

नचे न्नेक्ष्यतेचे त्प्रवृत्ति श्शुक्तौ । अभिलापः इदंरजतमित्यादिरूपः ॥ ५०१ ॥ व्याश्रयस्य व्यधिकरणस्य । नचेच्छुक्त्यभिन्न
त्वधीर्नचेत् । केवलंव्यधिकरणप्रकारकधीश्चेदित्यर्थः ॥ ५०२ ॥ पुरोवर्त्युल्लेखिनी पुरोवर्तिशुक्त्यादिविषयिणी व्याश्रयधीरिति
संबंधः । रजतस्मृतिस्तुनतथेतिभावः । दूषणमाह ॥ इदंचेति ॥ शाब्दीधीरित्युपलक्षणं । रजतखंडस्यापितत्रैवसत्त्वेचाक्षुषीत्य

व्याश्रयस्यापिरूप्यस्यशुक्त्यभिन्नत्वधीर्भ्रमे ॥ नचेत्तर्हिभवेद्रूप्यस्मरणंचभ्रमस्तव ॥ ५०२ ॥
पुरोवर्त्युल्लेखिनीचयदिव्याश्रयधीर्भ्रमः ॥ इदंचरजतंचेतिशाब्दीधीस्स्यात्तदाभ्रमः ॥ ५०३ ॥
असंसर्गाग्रहंचापियदिभ्रांतावपेक्षसे ॥ तदामीमांसकाचार्यस्यांतेवासीत्वमप्यभूः ॥ ५०४ ॥
यदाक्षीरस्थनीरस्यक्षीरेणैक्यंप्रतीयते ॥ तदातादात्म्यमात्रस्यासत्त्वं तद्वेचनाऽसती ॥ ५०५ ॥
यतःक्षीरंचतत्रास्तिनीरंचास्तिनिगूहितं ॥ अतस्तादात्म्यमात्रस्या सत्त्वं तत्रतयोस्तुन ॥ ५०६ ॥
यदितादात्म्यवत्तस्यप्रतियोगीचतत्र न ॥ तदातस्यापिचासत्त्वमितितत्त्वविदोविदुः ॥ ५०७ ॥

पिद्रष्टव्यं ॥५०३॥ पक्षांतरमाशंक्यदूषयति ॥असंसर्गेति॥ अस्मिन्पक्षे मीमांसकमतप्रवेशापत्तिरितिभावः ॥५०४॥ भ्रमविशे
षणीभूतरजताद्यप्यसदेवेतिप्रायिकीव्याप्तिः क्वचिदपवादोप्यस्तीत्याह॥ यदेति ॥ तद्वे क्षीरनीरे ॥ ५०५॥ अतःक्षीरनीरयोःप्र
तियोग्यनुयोगिनोस्सत्वात् तत्रै तादृशस्थले तयोः प्रतियोग्यनुयोगिनोःन । असत्त्वंनेत्यर्थः ॥ ५०६ ॥ तर्हिंकुत्रप्रतियोग्यसन्नि

त्यतआह ॥ यदीति ॥ तत्र यत्रप्रतीति स्तस्मिन्देशे । तस्यापि प्रतियोगिनोपि ॥५०७॥ अत उक्तरीत्या तादात्म्यप्रतियोगिनो रेवासत्त्वात् अधिष्ठानस्यक्वाप्यसत्त्वाभावाच्च सतासंवलितं मिश्रं ईक्ष्य मीक्षितुंयोग्यं । अधिष्ठानादेस्सर्वस्याप्यसत्त्वंयोवक्ति तंदूषयति ॥ अधिष्ठानस्येति ॥ ५०८ ॥ यतो यस्मात् । इदंताऽऽधारशुक्त्यादिरित्यनेनाधिष्ठानत्वंस्फोरयति । अर्थकृदर्थक्रियाकारी । तथाशुक्त्यादिवदर्थक्रियाकारी तन्मात्रं तादात्म्यं तत्प्रतियोगिभूतरजतादिकंच । मात्रपदेनाधिष्ठानंव्यावर्तयति ।

अतस्सतासंवलितमसच्चेक्ष्यंनसंशयः ॥ अधिष्ठानस्यचासत्त्वंयोवदेन्नसयुक्तिमान् ॥५०८॥ इदंताधारशुक्त्यादिर्यतस्सर्वत्रचार्थकृत् ॥ रूप्यादिर्नतथा तस्मात्तन्मात्रमसदीर्यते ॥ यथावस्थितसर्वार्थवादिभिस्तत्ववादिभिः ॥ ५०९ ॥ ७ ॥ यद्गुणोनप्रमाहेतुर्दोषाभावश्चनेष्यते ॥ अनाप्ततार्किकोक्तत्वादाप्तोक्तत्वंगुणो नतत् ॥ ५१० ॥ तस्मान्नित्यैववेदाख्यविद्या विद्यावतांमते ॥ नित्यायांचकथंद्वैतमद्वैतंकिलतेप्रियं ॥ ५११ ॥

यथावस्थितसर्वार्थवादिभिरित्यनेन तत्ववादित्वमुपपादयति ॥ ५०९ ॥ यदर्थंप्रामाण्यस्वतस्त्वमुक्तंतदिदानीमाह ॥ यदिति ॥ गुणो ऽर्थसत्तादि दोषाभावश्च प्रमाहेतुर्नेष्यतइतिसंबंधः । त त्तस्मात्कारणात् अनाप्तस्तार्किकस्तदुक्तत्वादाप्तोक्तत्वं वेदेनगुणइतिसंबंधः ॥ ५१० ॥ ततोपिकिंप्रकृतइत्यतआह ॥ तस्मादिति ॥ तस्मा दाप्तोक्तत्वस्यगुणत्वाभावात् । नित्यायां वेदविद्यायां द्वैतं तत्वावेदकत्वाऽतत्वावेदकत्वाख्यद्विप्रकारकत्वं कथं । नित्यायामित्यनेन पौरुषेयविद्यायांविप्रलंभादिमूलत्वसंभवात्त्याक्ता

दृशीकल्पना । अपौरुषेयत्वेनादुष्टायांश्रुतौकथमुक्ताकल्पनेतिसूचयति । ते तव सर्वत्राद्वैतंकिल सर्वत्रभेदमसहमानोवेदेकिमर्थं वाक्यभेदंकरोषीतिभावः ॥ ५११ ॥ ननुनित्यत्वेपिवेदस्यकुतोनातत्वावेदकत्वमित्यतस्तदुपपादयति ॥ तदिति ॥ त त्प्रामाण्य स्वतस्त्वसमर्थना त्त्वयाप्यंगीकारा त्स्वतस्त्वेन प्रामाण्यस्यस्वतस्त्वेन सर्वत्रश्रुतौ प्रामाण्यंगृह्यतइतिसंबंधः । तच्च गृहीतंप्रामा ण्यं पुंदोषमूलदोषस्य पुरुषदोषनिबंधनवाक्यदोषस्या भावात् अपौरुषेयतयात्वयामयाचांगीकृतश्रुतावभावा न्नचाल्यते नापोद्यते।

तत्स्वतस्त्वेनसर्वत्रप्रामाण्यंगृह्यतेश्रुतौ ॥ पुंदोषमूलदोषस्याभावा त्तच्चनचाल्यते ॥ ५१२॥ अतत्वावेदक त्वोक्तिरतोवेदे नशोभते ॥ अतत्वावेदकस्तस्यगुरुरेवेतिमेमतिः ॥ ५१३ ॥अकामःकाम्यविधिनाकुतोवान प्रवर्तते ॥ लिङ्लोट्तव्यप्रत्ययांतपदोपेतविधेर्बलात् ॥ ५१४ ॥ यदीष्टसाधनंतस्यतन्नेत्येवाप्रवर्तकं ॥ तर्ह्या वश्यकमिष्टस्यहेतुत्वंबोधयेद्धियत् ॥ तदेववाक्यंमानंस्याल्लोटायुक्तंलटापिवा ॥ ५१५ ॥

दोषैकापोद्यत्वात्प्रामाण्यस्येतिभावः ॥ ५१२ ॥ अतउक्तरीत्यासकलवेदवाक्येषुप्रामाण्यस्यावश्यकत्वात् । अतत्वावेदकत्वोक्ति रप्रामाण्यापरपर्यायातत्वावेदकत्वकथनं । तर्ह्यतत्वावेदकंकिंस्यादित्यतस्सोपहासमुत्तरमाह ॥ अतत्वावेदकइति ॥ तस्य मायि नो गुरुरेवातत्वावेदकः अतत्वस्य बाधितस्यप्रमेयस्यावेदको बोधकइति मेमतिरितिसंबंधः ॥ ५१३ ॥ द्वासुपर्णेत्यादिसिद्धार्थबो धकश्रुतिप्रामाण्यस्थैर्याय कार्यतावादिनएवमुखेन सिद्धार्थबोधकत्वेनैवमानत्वंवाचयितुमाह ॥ अकामइत्यादिना ॥ ५१४ ॥

॥ ५१५ ॥ क्रियांतरविधिं कारीर्यास्वर्गकामोयजेतेत्यादिविधिं ॥ ५१६ ॥ ५१७ ॥ ५१८ ॥ अवैदिकाचार्यस्मरणदोषपरिहारा य स्वाचार्यं सूर्यतयावर्णय न्नुक्तमर्थमुपसंहरति ॥ तस्मादिति ॥ चार्वाकाद्युदितमार्गस्यसर्वस्याप्रामाणिकत्वात् । आचार्यतरणि सरणिः मध्वाचार्याख्यतरणे स्सूर्यस्य मार्गइत्यर्थः । तस्यसूर्यत्वमुपपादयति ॥ यइत्यादिना ॥ यआचार्यसूर्यः स्वा न्स्वभक्त जना न्वितिमिरा न्विगताज्ञानाख्यांधकारा न्कुर्वन्हृद्व्योम्नि तदीयहृदयाख्याकाशे सदाजृंभते । तस्याचार्यतरणेरितिपूर्वेणार्थत

यागेविधिःकुतो वेदेक्रियांतरविधिंविना ॥५१६॥ यद्यस्तिस्वर्गहेतुत्वंयागएवेतिमन्यसे ॥ तर्हिसिद्धविधेः
पृष्ठलंबीतववविधिर्ह्यभूत् ॥ ५१७ ॥ अतस्तेनैवविधिनावाक्सर्वामानतांव्रजेत् ॥ अस्त्यायुरितिवाक्यंचनो
चेन्मानंभवेन्नते ॥५१८॥ तस्मादाचार्यतरणिसरणिश्शोभतेतरां ॥ यस्स्वान्वितिमिरान्कुर्वन्सदाहृद्व्योम्निजृं
भते ॥५१९॥ गृष्ट्योर्मिथोविरोधेहिहत्वैकामपराङ्मुखीं ॥ विरोधशांतिंकःकुर्याद्विनाम्लेच्छकुमारकान् ॥५२०॥
तृणपिण्याकदानेनकृत्वार्थांतरलालसां ॥ ततःप्रच्यावयेदेकांक्रुद्धाप्यऽन्याध्वनाव्रजेत् ॥ ५२१ ॥

स्संबंधः ॥ ५१९ ॥ अपौरुषेयतयानिर्दोषेवेदे एकभागस्यातत्वावेदकत्वकथनमयुक्तमित्यत्रदृष्टांतमाह ॥ गृ(घृ)ष्ट्योरिति ॥ प्रथमप्रसूतयोर्गवोः । विनाम्लेच्छकुमारकानित्यनेन दार्ष्टांतिकेपितस्यबौद्धत्वंध्वनयति ॥ ५२० ॥ किंतुसावकाशस्यार्थांतरकथने नोभयोरपिवेदभागयोःप्रामाण्यमेवरक्षणीयमित्यत्रापिदृष्टांतमाह ॥ तृणपिण्याकेति ॥ अर्थांतरलालसां कृत्वेतिसंबंधः । ततो 

विरोधात् । अन्याक्रुद्धापि कोपात्तृणादिकमसहमानापीत्यनेन दार्ष्टांतिकेपिनिरवकाशत्वंध्वनयति ॥ ५२१ ॥ दार्ष्टांतिकंयोज यति ॥ एवमिति ॥ तयो स्सावकाशनिरवकाशश्रुत्योः कलहं विरोधं ॥ ५२२ ॥ ननुतत्वावेदकत्वातत्वावेदकत्वाभ्यांविरोध शांतिःकिंनस्यादित्यतआह ॥ अतत्वेति ॥ एका निरवकाशश्रुतिः । अपरा सावकाशश्रुतिः । आदिपदेना नुवादकत्वादिकं ग्राह्यं । अमानत्वप्राप्त्या अतद्वति तत्प्रकारकज्ञानजनकत्वरूपाप्रामाण्यप्राप्त्याअसुत्याजनं प्राणसमप्रामाण्यत्याजनं । श्रुतेः अत

एवंश्रुत्योर्विरोधेपियावागन्यार्थवर्तिनी ॥ तांतदर्थपरांकृत्वामोचयेत्कलहंतयोः ॥ ५२२ ॥ अत
त्वावेदिकात्वेकातत्वस्यावेदिकापरा ॥ इत्याद्युक्तिस्त्वमानत्वप्राप्त्याऽसुत्याजनंश्रुतेः ॥ ५२३ ॥
साद्दश्यैक्येस्थानमत्योरैक्येव्याप्त्यैक्यपूर्वके ॥ सावकाशैक्यवाग्भेदवाक्कुस्वार्थपरायणा ॥५२४॥
एकीभूतास्तुकुरवएकीभूतौनृपाविमौ ॥ ऐक्याद्वयस्यक्रभुमानित्याद्युक्तिर्विचार्यतां ॥ ५२५ ॥

त्वावेदकत्वेनोक्तश्रुतेः । एतेनध्वनितंबौद्धत्वंस्पष्टीकृतमितिद्रष्टव्यं ॥ ५२३ ॥ एवमपिप्रकृतेकिमायातमित्यतआह ॥ साद्दश्यै क्यइत्यादिना ॥ साद्दश्यैक्ये साद्दश्यरूपैक्ये स्थानमत्योरैक्ये स्थानैक्ये मत्यैक्येचेत्यर्थः । व्याप्त्यैक्ये व्याप्तिरूपैक्ये । पूर्वइ त्यनेन स्वातंत्र्यैक्यवैशिष्ट्यैक्ययोर्ग्रहणं । उक्तार्थषट्के ऐक्यवा क्सावकाशेतिसंबंधः । स्वार्थपरायणा अन्यार्थेऽवकाशशून्या निर वकाशेत्यर्थः ॥ ५२४ ॥ एकीभूतास्तुकुरवइतिस्थानैक्ये एकशब्दप्रयोगस्योदाहरणं । इमौनृपावेकीभूताविति मत्यैक्ये एकशब्द

युक्ति- ॥ ८० ॥

प्रयोगस्योदाहरणं । ऐक्याद्वयस्यऋभूमानित्यनेन शय्यासनाटनविकत्थनभोजनादिष्वैक्याद्वयस्य ऋभुमानितिविप्रलब्धः ॥ सख्यु
स्सखेव पितृवत्तनुजस्य सर्वंसेहे महामहतया कुमतेरघंमे इतिभागवतोक्त्या व्याप्त्यैक्ये ऐक्यपदप्रयोगस्योदाहरणं । ऋभुमा
न्देवश्रेष्ठःकृष्ण श्शयनादिव्यापारेष्वैक्या दविनाभावा त्सहैवसंचरणादित्यर्थः । वयस्य स्सखेतिविप्रलब्धो वंचितोपि महामह
तया महामहिमतया कुमतेर्मे सर्वमघं सख्युःसखेव तनयस्यपितृव त्सेहइतिश्लोकार्थः । अत्र सादृश्येऐक्यप्रयोगस्यसिंहोदेव
दत्तइत्यादौ एकस्मिन्ग्रामेऽविशिष्टस्यापियवनस्य शक्त्यास्वातंत्र्येसत्यस्मिन्ग्रामेऽयमेकएवेति स्वातंत्र्यैक्ये एकपदप्रयोगस्य इतर

लिंगानुशासनंयस्मादेकेमुख्यान्यकेवलाः ॥ इत्याहभेदएवैक्यंमुख्यतावाततोभवेत् ॥ ५२६ ॥
यदातवैक्यशब्दोयंभेदंवक्त्यखिलेशितुः ॥ वक्तिसर्वोत्तमत्वंवा प्रतिवक्तिकथंभवान् ॥ ५२७ ॥

कार्येष्वस्वतंत्रस्यापिकस्यचि त्तपोविद्यादिनोत्तमत्वेसति अस्मिन्ग्रामेऽयमेकएवेति एकपदप्रयोगस्यचोदाहरणानि प्रसिद्धत्वान्नो
क्तानि। अत्रनिमित्तपंचकं स्वातंत्र्येचविशिष्टत्वे स्थानमत्यै क्ययोरपि। सादृश्येचैक्यवाक्सम्यक्सावकाशायथेष्टत इत्यनुव्याख्यानो
क्तरीत्यासंगृहीतं। व्याप्त्यैक्यंतु भागवतोक्तंग्रंथकृतैवसंगृहीतमितिद्रष्टव्यं ॥५२५॥इदानीमेकमेवाद्वितीयमित्यादौविद्यमानमेकपदं
लिंगानुशासनबलान्मुख्ययावृत्त्यासर्वोत्तमत्वं भेदंवावक्तीतितवैवविरोधीतिभावेनाह ॥ लिंगानुशासनमित्यादिना ॥ अतः
कारणात् ॥ ५२६ ॥ ततःकिमित्यतआह ॥ यदेति ॥ तदेतिशेषः । भवान्कथंप्रतिवक्ति । तत्ववादिनांप्रतिभटतया वक्ति ।

मल्लिका गुणसौ० ॥ ८० ॥

त्वदायुधस्यैव परैरपहृतत्वादितिभावः । श्रुतियोजनातु एकमेवाद्वितीयमित्यत्र एकं सर्वोत्तमं सकलजीवजडात्मकात्प्रपंचादत्यं तभिन्नमितिवा परेऽव्ययेसर्वएकीभवंतीत्यत्रतु अव्यये परे परमात्मनि आधारे स्थितामुक्ताः मुक्तत्वादेवैकीभवंति संसारिभ्यो मुख्यावा तद्विलक्षणावा परस्परं परमात्मन स्सकाशाच्च भिन्नावा भवंतीतिद्रष्टव्या ॥ ५२७ ॥ ऐक्यवाक्योक्तंसावकाशत्वन्या यं केवलोनिर्गुणइतिनिर्गुणवाक्येप्यतिदिशति ॥ एवमिति ॥ यद्यप्युत्सर्गापवादन्यायेनापिपरिहारः । तथाप्युत्सर्गस्यसावका शत्वनियमेनापवादस्यनिरवकाशत्वनियमेनचायमतिदेशः । उपायस्योपायांतराविरोधित्वादितिभावः । दोषरूपगुणाः रागद्वेष

एवंनिर्गुणवाक्यंचसामान्यवचनत्वतः ॥ दोषरूपगुणाभावपरंकर्तुंहिशक्यते ॥ ५२८ ॥ एषसर्वेशइत्या
दिविशेषवचनंतुयत् ॥ अन्यार्थशून्यंतत्स्वार्थंप्राणत्यागेपिनत्यजेत् ॥ ५२९ ॥ नहिंस्यादितिवाक्यंहिक्रतो
रन्यत्रमान्यते ॥ तद्बह्वर्थविभक्त्यंतसर्वशब्दान्वितांश्रुतिं ॥ श्रौतादन्यत्रनयतातच्छून्याकिंननीयते ॥५३०॥

दुःखबंधकसत्त्वादयः प्राकृतरूपादयस्सर्वेलौकिकगुणावा ॥ ५२८ ॥ ५२९ ॥ नकेवलमेषन्यायोस्माभिरेवांगीक्रियते किंतुत्व याप्यंगीकृतइत्याह ॥ नहिंस्यादिति ॥ तत्तस्मा त्सामान्यनिषेधस्यैकदेशेसंकुचितत्वात् । बह्वर्था भूतानीतिबहुत्वार्था विभक्ति स्तदंतासर्वा । सर्वाणि इतिसर्वशब्दान्विताच तामित्यर्थः । श्रौतात्क्रतोः । तच्छून्या निर्गुणइतिश्रुतौतदुभयाभावादितिभावः । प्राकृतगुणोनेतिसर्वेषांदोषरूपगुणानांनिषेद्धुंशक्यत्वाद्बहुवचनेपिनभरइतिहृदयं । विशेषविधेस्सकाशात्सामान्यनिषेधस्यदौर्बल्ये

युक्ति- पीदमेवोदाहरणं ॥ ५३० ॥ अतएषसर्वेश्वरइत्यादिविशिष्यगुणविधायकवाक्या न्निर्गुणइतिसामान्यतोगुणनिषेधकनिर्गुणवा मल्लिका

॥ ८१ ॥ क्यमेव दुर्बलमितिभावेनोपसंहरति ॥ अतइति ॥५३१॥ उक्तमर्थंपुराणवचनेनद्रढयति ॥ योसाविति ॥ हेयसंयुक्तै र्हेयत्व गुणसौ०

संयुक्तै र्हेयैरित्यर्थः ॥ ५३२ ॥ प्रामाणिके प्रमाणांतराविरुद्धेचार्थेसंभवतिसति अतादृशार्थगवेषणमनुचितमित्येतत्सदृष्टांतमाह ॥ शब्दस्येति ॥ बस्तःछागः । सर्वथाक्षीराभावाद्बस्तेत्युक्तं ॥ ५३३ ॥ ऐक्यवाक्यस्यमत्यैक्येसावकाशत्वव द्भेदवाक्यस्यापिमति

अतस्सामान्यतोयत्तुनिषेधवचनंश्रुतौ ॥ विशेषवाक्यविहितंनहितत्प्रतिषेधति ॥ ५३१ ॥ योसौनिर्गुणइत्यु क्तश्शास्त्रेषुजगदीश्वरः ॥ प्राकृतैर्हेयसंयुक्तैर्गुणैर्हीनत्वमुच्यते ॥ इतिपाद्मेत्रयस्त्रिंशाध्यायेरुद्रस्यवागियं ॥ ५३२ ॥ शब्दस्यलब्ध्वायोग्यार्थमयोग्यार्थोनमृग्यते ॥ दुग्धार्थीबुद्धिमान्दोग्धिकस्तंबस्तगलस्तनं ॥ ५३३ ॥ संध्यायांवंदतेयोगीसंध्यां भोगीतुसुंदरीं ॥ युगपन्मतिभेदस्तद्भिन्नयोरेवनान्यथा ॥ ५३४ ॥

भेदेसावकाशत्वंकिंनस्यादिति केनचिदुक्तेपि भिन्नाविमौराजानावित्यत्र भिन्नभिन्नविषयकमतिद्वयस्यैवमतिभेददर्शनेन तस्यच पुरुषभेदाविनाभूतत्वात्नास्माकमनिष्टमितिसदृष्टांतमाह ॥ संध्यायामिति ॥ संध्यांवंदतइतिसंबंधः । द्वासुपर्णेत्यत्रद्वाविति वर्तमानकालीनद्वित्वोपपादनाययुगपन्मतिभेदस्यावश्यकत्वादितिभावः । इदानींभिन्नोयमित्येकवचनांतप्रयोगे स्वरूपभेदानपे क्षक्रमिकमतिभेदस्य कथंचिच्छंकितुंशक्यत्वेपि द्वावेतौ भिन्नावेतावित्यादिद्विवचनांतप्रयोगे स्वरूपभेदानपेक्षमतिभेदस्यशंकितु ॥ ८१ ॥

मप्यशक्यत्वादित्यपिद्रष्टव्यं ॥ ५३४ ॥ किंच सयुजावितिस्थानभेदस्य सखायावितिमतिभेदस्यच स्पष्टंनिराकृतत्वेन नात्रमति भेदस्थानभेदयोरवकाशोप्यस्तीत्याह ॥ सखायाविति ॥ प्रत्याहनिराकरोति । ततो प्यर्थांतरासंभवादपि ॥ ५३५ ॥ नकेवल मैक्यवाक्यस्य मत्यैक्यस्थानैक्ययोरवकाशोस्माभिरेवावादि किंतुश्रुत्याप्यसूचीत्याह ॥ ऐक्योक्तेरिति ॥ सख्यस्थानैक्यवादि नी जीवपरयोरितिशेषः ॥ ५३६ ॥ पराभिप्रेतनिर्गुणब्रह्म निराकर्तुं नारायणस्यैवपरब्रह्मतांयुक्त्याप्रसाध्य तस्यैवसत्त्वादिगुण वैधुर्येणनिर्गुणतांचाह ॥ नारायणइत्यादिश्लोकत्रयेण ॥ ततोनारायणात् । सृष्टेःप्राक् । ब्रह्मप्रलयेप्यविलीनस्य अतएवका

सखयौसयुजौचेतिमतिस्थानभिदेस्फुटं ॥ यत्प्रत्याह ततोप्याह भेदवाग्भेदमेवहि ॥ ५३५ ॥ ऐक्यो क्तेस्स्वविरोधिन्यास्सख्यस्थानैक्यवादिनी ॥ यद्गतीचाहतद्वाणीकृपाणीयंविरोधिनां ॥ ५३६ ॥ नारायणःपरंब्रह्मनान्यद्ब्रह्मततःपरं ॥ प्राक्सृष्टेरप्स्वयश्शेतेवटपत्रपुटेप्रभुः ॥ ५३७ ॥ बंधकीभूतस त्वादिदुर्गुणानांविवर्जनात् ॥ सएवनिर्गुणंब्रह्मेत्युक्तस्सद्गुणबृंहितः ॥ ५३८ ॥

र्यब्रह्मभूतचतुर्मुखादप्युत्तमस्य सृष्टेःपूर्वंविद्यमानस्य अतएवाऽकार्यस्यच नारायणस्यैव परब्रह्मतायुक्ता । अनाद्यनंतवस्तुत्वात् । नपराभिलषितस्येतियुक्तिः । प्रयोगस्तु विमतोनारायणः परंब्रह्म भवितुमर्हति सृष्टिशून्यत्वात् नाशरहितत्वाच्च व्यतिरेकेणघट वदिति । विष्णोरन्यत्रसर्वत्र पराधीनविशेषावाप्तिलक्षणसृष्टे रपूर्णतालक्षणनाशस्यचसत्त्वेन नकापिव्यभिचारः ॥ ५३७ ॥ सद्गुणबृंहितइत्यनेन सर्वथागुणशून्यमेवनिर्गुणंब्रह्मचेतिवदतः बृहंतोह्यस्मिन्गुणाइत्युक्तगुणपूर्णत्वलक्षणब्रह्मत्वानुपपत्त्या व्याह

तभाषित्वंचसूचितं ॥ ५३८ ॥ मुकुंदाभिधमित्यनेनच विष्णोरेवपरब्रह्मत्वे मुक्तिदायकत्वरूपयुक्त्यंतरंचसूचितं । वेदाख्यब्रह्म वर्णितमित्यनेन वेदैश्चसर्वैरहमेववेद्यइत्यादौ कृष्णस्यैवोक्तवेदतात्पर्यगोचरत्वे तस्यैवपरब्रह्मत्वेयुक्तिस्सूचिता । ब्राह्मणानांपरंदै वमित्यनेनापि ब्राह्मणानां शुकसनकभृग्वादीनां परंदैवमित्यर्थस्यैवाभिप्रेतत्वेन विष्णोरेव परब्रह्मत्वे धिगतपरमार्थैराराध्यत्वरूपे

तन्मुकुंदाभिधंब्रह्मवेदाख्यब्रह्मवर्णितं ॥ ब्राह्मणानांपरंदैवंब्रह्मसूत्रप्रकाशितं ॥ ५३९ ॥
सहस्रशीर्षंदेवंविश्वाक्षंविश्वशंभुवं ॥ विश्वंनारायणंदेवमक्षरंपरमंपदं ॥ ५४० ॥ विश्वतः
परमांनित्यंविश्वंनारायणंहरिं ॥ विश्वमेवेदंपुरुषस्तद्विश्वमुपजीवति ॥ ५४१ ॥ पतिंविश्व
स्यात्मेश्वरंशाश्वतंशिवमच्युतं ॥ नारायणंमहाज्ञेयंविश्वात्मानंपरायणं ॥ ५४२ ॥ नारायण
परोज्योतिरात्मानारायणःपरः ॥ नारायणपरंब्रह्मतत्वंनारायणःपरः ॥ ५४३ ॥ यच्चकिंचि
ज्जगत्सर्वंदृश्यतेश्रूयतेपिवा ॥ अंतर्बहिश्चतत्सर्वंव्याप्यनारायणस्स्थितः ॥ ५४४ ॥

युक्तिरसूचि । ब्रह्मसूत्रप्रकाशितं ब्रह्ममीमांसासूत्रप्रकाशितमित्यनेनतु वेदसमानार्थकसूत्रप्रतिपाद्यस्यनारायणस्य परब्रह्मत्वे मो क्षोपयोगिजिज्ञासाविषयत्वरूपयुक्तिर्लब्धा । एकोदाधारभुवनानिविश्वेतिश्रुतिप्रतिपादितविष्णोरेव द्युभ्वाद्यायतनंस्वशब्दादित्या दिसूत्रप्रतिपाद्यत्वसंभवेनच ब्रह्मसूत्रप्रकाशितोविष्णुरेव ॥ ५३९ ॥ इदानीं नारायणोपनिषदा नारायणस्यैवपरब्रह्मतांस्पष्टीकर्तुं

तांपठित्वाव्याचष्टे ॥ सहस्रशीर्षमित्यादिना ॥ ५४० ॥ ५४१ ॥ ५४२ ॥ ५४३ ॥ ५४४ ॥ स्पष्टा नारायणःपरंब्रह्मेति सुप्रसिद्धनारायणनाम्नैव तमुद्दिश्य परब्रह्मत्वविधानात् । हीत्यनेनानेकपरब्रह्मलक्षणभरितत्वान्नारायणएवपरंब्रह्मेतिसूचयति । तदेवविशदयत्युत्तरग्रंथेन ॥ ५४५ ॥ विश्वतःपरमत्वंचेत्यनेन विश्वतःपरमामितिश्रुत्युक्तसर्वोत्तमत्वंगृह्यते । परमश्चासावश्चेति विग्रहे सोमपाशब्दवत्परमाशब्दः । विश्वशंभूमितां विश्वशंभुवमितिश्रुत्युक्तपूर्णानंदभूमितां विश्वोपजीव्यतां तद्विश्वमुपजीव

इतिस्पष्टाह्युपनिषत्परंब्रह्माहतंप्रभुं ॥५४५॥ विश्वतःपरमत्वंच विश्वशंभूमितांतथा ॥ विश्वोपजीव्यता मात्मेश्वरताक्षरतेतथा ॥ ५४६ ॥ शाश्वतत्वाच्युतत्वेचमहाज्ञेयत्वमेवच ॥ अंतर्बहिश्चविश्वस्यव्याप्तत्वंचा प्यनंततां ॥ ५४७ ॥ ब्रह्मधर्मानिमान्सर्वान्यस्मिन्नारायणेश्रुतिः ॥ सहस्रशीर्षिणपुरुषेतन्नाम्नैवपुनःपुनः ॥ ५४८ ॥ आम्नातेसंकलय्याहमहातात्पर्यपूर्वकं ॥ सएवहिपरंब्रह्मब्रह्मलक्षणवेदिनां ॥ ५४९ ॥

तीत्युक्तविश्वोपजीव्यतां । एवमुत्तरत्रापिद्रष्टव्यं ॥ ५४६ ॥ ५४७ ॥ एषसर्वेश्वरः यतोवाचोनिवर्तंते येनजातानिजीवंति आ त्मावाअरेद्रष्टव्यः सत्यंज्ञानमनंतंब्रह्मेत्यादिश्रुतिषु प्रसिद्धानिमान्ब्रह्मधर्मान् । पराभिमतनिराकारब्रह्मणोनश्रौतत्वमितिभावेनो क्तंसहस्रशीर्षिणपुरुषइति । तन्नाम्नैव नारायणःपरंब्रह्मतत्वंनारायणःपरः । नारायणपरोज्योतिरात्मानारायणःपरः । व्याप्यनारा यणःस्थितइत्यादौ नारायणनाम्ना । अभ्यासस्यमहातात्पर्यलिंगत्वादित्याशयेनोक्तंमहातात्पर्येति ॥ ५४८ ॥ ५४९ ॥ नकेवलं

ब्रह्मलक्षणभरितत्वान्नारायणःपरंब्रह्म किंतुपरंब्रह्मपरंज्योतिःपरमात्मेत्यादिपरब्रह्मनामभिरपि नारायणस्यैवोद्देशादित्याह ॥ परं ब्रह्मेत्यादिना ॥ उत्तरग्रंथे पद्मकोशप्रतीकाशमित्यादिग्रंथे ॥ ५५० ॥ ५५१ ॥ परमात्माभिधस्य श्रृंगग्राहितयाप्रदर्शनादिति पूर्वेणान्वयः ॥ ५५२ ॥ परमात्मशाब्दर्थमाह ॥ राजेति ॥ ५५३ ॥ लक्षणग्रंथे आत्मानारायणःपरः इत्युक्तपरमात्माभिधनाराय

परंब्रह्मपरंज्योतिःपरंतत्वंपरंपदं ॥ परमात्मेतिचब्रह्मनाम्नानारायणंप्रभुं ॥ ५५० ॥ उद्दिश्यपौनःपु
न्येनब्रह्मणोलक्षणानिच ॥ सर्वाण्युक्त्वोत्तरग्रंथेपरीक्षाचयतःकृता ॥ श्रुत्यालक्षणशास्त्रस्यमर्यादा
मनुसृत्यहि ॥ ५५१ ॥ शृंगग्राहितयातस्यहृद्गुहायांप्रदर्शनात् ॥ उक्तलक्षणपूर्णस्यपरमात्माभिधस्य
च ॥ ५५२ ॥ राजा राजसु मुख्योहिमहाराजइतीर्यते ॥ आत्माऽन्यात्मसु मुख्यश्चपरमात्मातथा
प्रभुः ॥ ५५३ ॥ यस्तुप्रस्तावितःपूर्वमात्मानारायणःपरः ॥ परमात्मेतिचात्रोक्तस्सएवस्यान्नसंशयः
॥५५४ ॥ तत्सब्रह्मेतिवाक्त्तदभिधामाहनाऽभिदां ॥ महेश्वरशिवश्रुत्योःपौनरुक्त्यभयादपि ॥५५५॥

णस्यैव परीक्षाग्रंथे परमात्माव्यवस्थितइतिपरमात्मपदेनपरामर्शादैकार्थ्यमितिभावेनाह ॥ यस्तुप्रस्तावितइति ॥ ५५४ ॥ उक्त रीत्या पूर्वप्रकरणेनारायणमहिम्निएवप्रस्तुतत्वा त्सब्रह्मेत्यत्र तत्तद्वैक्यमर्थोनेत्याह ॥ तदिति ॥ तत्तस्मात्परमात्म परात्म विश्व तःपरमत्वादिना सकलजीवजडात्मकात्प्रपंचादत्यंतविलक्षणस्यैवनारायणस्यप्रस्तुतत्वात् । अन्यथोपक्रमविरोधात् । सब्रह्मेतिवाक्



सब्रह्मासशिवस्सहरिरित्यादिवाक् । ऐक्यपक्षे समहेश्वरइत्येतावता शिवैक्यसिद्धेः पुनस्सशिवइतिव्यर्थंस्यादित्याशयेनाह ॥ म हेश्वरेति ॥ योवेदादौस्वरःप्रोक्तोवेदांतेचप्रतिष्ठितः । तस्यप्रकृतिलीनस्ययःपरस्समहेश्वरइतिमहेश्वरश्रुतिः । अत्रस्वरशब्देनपू र्वोक्तप्रणवस्यैव तस्येतिप्रस्तुतत्वात् जडप्रकृतौलीनस्य शबलस्येतिमंदाशंका गर्भस्रावेणैवगता । किंतु प्रकृत्या पठतामलसत्व स्वभावेन लीनस्या नुच्चारणेनलीनस्य तस्य प्रणवस्य यःपरस्स्वामीत्येवार्थः । अतोपिमहेश्वरोविष्णुरेव । चक्रशंखगदापद्मधर इति विष्णुंभास्वत्किरीटमितिचावयोर्मतेतस्यैवप्रणवध्येयत्वात् । ओमित्येकाक्षरंब्रह्मव्याहरन्मामनुस्मरन्निनितिगीतावाक्याच्च ।

प्रागुक्तार्थोपसंहर्त्रीमहेश्वरमहीश्वरे ॥ शयानमाहतस्यैक्येकस्यासौस्यान्महेश्वरः ॥ ५५६ ॥
विश्वमेवेदंपुरुषस्तद्विश्वमुपजीवति ॥ इत्यैक्योक्तेःपरंचा(पुरैवा)न्यागतिमाहततोपिन ॥ ५५७ ॥

नामसमन्वयपक्षेतुनकाचिदनुपपत्तिरितिभावः । उपक्रमोपसंहारयोरैकार्थ्यावश्यंभावान्महतामीश्वरोमहेश्वरइतिसावकाशमहेश्व रपदस्य निरवकाशनारायणपदानुसारेणैवयोजनीयत्वात् ॥ ५५५ ॥ शेषशयनस्यतस्यैव सकलदेवाधीश्वरशेषेश्वरतया महेश्वरत्वसंभवात् रुद्रोब्रह्माणमाश्रितइत्युक्तरुद्रस्य तदसंभवा दन्यथा नारायणोपनिषत्त्वव्याघाताच्चेत्याशयेनाह ॥ अही श्वरइति ॥ उपलक्षणंचैतत् । सहरिरिति महेश्वरश्रुतेरुपर्यपि हरेःप्रस्तावादित्यपिद्रष्टव्यं । पुनरैक्येदूषणांतरंचाह ॥ तस्यै क्यइति ॥ इदमप्युपलक्षणं । परमत्वस्य स्वराडित्युक्तस्वातंत्र्यस्यचायोगादित्यपिग्राह्यं ॥ ५५६ ॥ ऐक्यायोगेयुक्त्यंतरंचाह

॥ विश्वमेवेदमिति ॥ ५५७ ॥ श्रुतेरर्थमाह ॥ यद्विश्वमिति ॥ यद्यस्मात् विश्वंकर्तृ । उपजीवतीत्यस्यसकर्मकत्वात् प्राक्प्रस्तुतपुरुषपदस्यद्वितीयांततयानुवृत्तिरितिभावेनोक्तं पुरुषाख्यंतमिति ॥ तत्तस्मा त्पुरुषोपजीवकत्वात् विश्वं इदमित्यपिग्राह्यं । पुरुषइत्युक्तं पुरुषएवेत्युक्तं । राजाराष्ट्रमितिवदुपजीव्योपजीवकभावादेव पुरुषएवेदंसर्वंयद्भूतंयच्चभव्यमित्यादिश्रुतिषु तत्रतत्र पुरुषैक्यव्यपदेशो नस्वरूपैक्यात् । जडाजडयोस्तदयोगादितिश्रुतेर्भावः । तच्छब्दश्रवणाद्यच्छब्दोध्याहार्यइत्याह ॥ यत्तदोरिति ॥५५८॥ येतु विश्वमेवेदंपुरुषइत्यत्र पुरुषैक्यमेवोक्त्वा तत् तं पुरुषं विश्वमुपजीवतीत्यर्थमाहुः तेषांदोषद्वयंवदन्नस्मदुक्तए

यद्विश्वं पुरुषाख्यंतमुपजीवति तत्सदा ॥ विश्वंपुरुषइत्युक्तं यत्तदोर्नित्ययोगतः ॥ ५५८ ॥ श्रुत्यर्थमित्थमेवाहुःपुंक्लैब्याद्येतुबिभ्यति ॥ कश्छिंद्याच्छ्रुतिसुंदर्यास्सौंदर्यंचरणद्वये ॥ ५५९ ॥ अतश्श्रुत्यर्थमीमांसानिपुणानांविवेकिनां ॥ मतेनारायणोदेवःपरंब्रह्मनचापरः ॥ इतिनिर्णीयते नोचेच्छ्रुतिरेषाप्रकुप्यति ॥ ५६० ॥

वश्रुत्यर्थइत्याह ॥ श्रुत्यर्थमिति ॥ पुंक्लैब्यात् पूर्वोक्तपुरुषस्य तदितिनपुंसकपदेनपरामर्शात् । चरणद्वये विश्वमेवेदंपुरुषः तद्विश्वमुपजीवतीतिपादद्वये सौंदर्यमैकार्थ्यरूपवाक्यालंकारं छिंद्यात् ऐक्य भेद रूपविरुद्धार्थकथनेनदूषयेत् । एवंवदतापूर्वपादेऐक्यस्यैवोक्तत्वादुत्तरपादेचोपजीव्योपजीवकभावेनभेदस्यैवोक्तत्वा त्तस्यच संभवत्येकवाक्यत्वेवाक्यभेदोहिदूषणमितिदूषणत्वोक्तेः परस्परव्याहतार्थकथनेत्वमानत्वप्राप्त्याश्रुतेरेवनाशितत्वाच्चमहादूषणत्वादितिभावः । अतएव छिंद्यादित्युक्तं ॥ ५५९ ॥ श्रुतिव्याख्यामुपसंहरति ॥ अतइति ॥ श्रुत्यर्थमीमांसानिपुणानामित्यनेनेदमभिप्रैति । महाज्ञेयमितिप्राक् नारायणस्य सकलशाखा

स्वतिशयेनज्ञेयत्वमुक्तं । तच्च तत्रतत्रवेदवाक्येषु ब्रह्मेंद्रहर्यक्षरमहेश्वरादिशब्दैर्ब्रह्मादीनांकथनात्‌विरुध्यतइत्याशंकानिवारक त्वेन तत्तन्नाम्नां समहेश्वरइत्यादिना नारायणएवसमन्वयकथनंप्रकृतोपयोगि । हरिशब्दोपि हरिसूक्तस्थो हर्यश्वत्वादिलिंगबला दिंद्रगामीतिशंका । अतस्तस्यापिसमन्वयकथनं योदेवानांनामधाः मांविधत्तेभिधत्तेमां तत्तुसमन्वयादितिश्रुतिस्मृतिसूत्रानुसा रिच । तत्तद्दैवतैक्यं नारायणंमहाज्ञेयमित्यत्रोक्तातिशयेनज्ञेयत्वरूपमहाज्ञेयत्वस्य पतिंविश्वस्येत्युक्तविश्वपतित्वस्य अंतर्बहिश्च तत्सर्वंव्याप्यनारायणस्स्थितइत्युक्तसर्वव्यापित्वस्य आत्मनामीश्वरःआत्मेश्वरइत्युक्तजीवेश्वरत्वस्य परमात्मपदार्थस्यचविरुद्धं । मध्येवामनमासीनंविश्वेदेवाउपासतइत्यादिश्रुत्या शंभोःपितामहोब्रह्मपिताशक्राद्यधीश्वरइतिस्मृत्या अंतर्याम्यधिदैवादिषुतद्ध

देवानामवमोग्निर्वैविष्णुस्तुपरमःप्रभुः ॥ तदंतरेणब्रह्माद्यास्सर्वाअन्यास्तुदेवताः ॥ ५६१ ॥

र्मव्यपदेशादितिसूत्रेणचविरुद्धं । अथवा श्रुत्यर्थमीमांसानिपुणानामित्यनेन सूत्रभाष्यटीकाकाराणांसंग्रहः । तेहि अंतःस्थाधिक रणेब्रह्मेंद्राग्न्याद्यधिदैवताखिलनाम्नांसमन्वयमेवोचुः । नतुतत्तद्देवतैक्यं । प्रत्युततत्रैव भेदव्यपदेशाच्चान्यइतिसूत्रेण इंद्रस्या त्मा वायोरात्मानं अंतरादित्ये अंतश्चंद्रमसि सहैवसंतंनविजानंतिदेवा इत्यादिभेदव्यपदेशाद्ब्रह्मादिदेवानामन्यतामेववर्णयामा सुः । एतदेवाभिप्रेत्योक्तं प्राक् तत्तदभिधामाहनाभिदामिति । एषाश्रुतिः सहस्रशीर्षमित्यादिश्रुतिः । व्याहतभाषिणेतुभ्यमि तिशेषः । अथवा एषा वक्ष्यमाणाश्रुतिः ॥ ५६० ॥ तामर्थतःपठति ॥ देवानामिति ॥ ऋग्वेदब्राह्मणं अग्निर्वैदेवानामवमो

विष्णुःपरमस्तदंतरेणसर्वाअन्यादेवताइति ऋग्वेदब्राह्मणं । हीत्यनेनश्रुतेःप्रसिद्धतामाचष्टे । अत्रदेवताइत्येतावतैवपूर्तौ पुनस्सर्व पदं ब्राह्मशैवादिमतरीत्याकेषांचिदसंग्रहशंकानिरासायेतिभावेनब्रह्माद्याइत्युक्तं । विविच्य अन्याइतिभिन्नतांप्रदर्श्यभिन्नतामित्यु पलक्षणं । आद्यंतयोरिव मध्येमध्येपि परमतामवमतांचेत्यपिग्राह्यं ॥ ५६१ ॥ ५६२ ॥ ५६३ ॥ अतः वेदव्याख्यानरूपब्राह्म

ऋग्वेदब्राह्मणंह्यादावेवंतरतमत्वतः॥ देवान्सर्वान्विविच्योक्त्वाविष्णोःपरमतांजगौ
॥ ५६२ ॥ तस्मात्तुपरमंवस्तुनकिंचिदपिशंसति ॥ एतेप्रधानादेवेषुतेष्वप्येषक्रमःकिल
॥५६३॥ अतोविष्णुःपरंब्रह्मसर्वश्रुतिमतादभूत् ॥ विष्णोरन्यत्परंब्रह्मनश्रौतमितिचा
प्यभूत् ॥ वेदव्याख्यानरूपंयद्ब्रुवंतिब्राह्मणंबुधाः ॥५६४॥ उक्तार्थस्यसमस्तस्यप्रमाणेन
प्रसिद्धतां ॥ वैशब्देनाहतद्भक्तिसर्वमानैश्चसिद्धतां ॥ ५६५ ॥ श्रुत्यास्मृत्यानुमानेनप्रत्य
क्षेणचयोगिनां ॥ विष्णोस्सर्वोत्तमत्वंहिसिद्धमित्याहसाश्रुतिः ॥ ५६६ ॥ अतस्त्रिदेव
तैक्यंस्यान्नपुराणशतैरपि॥ विरोधेत्वनपेक्षंस्यादितियत्सूत्रशासनं ॥ ५६७ ॥

णेप्रतिपादितत्वात् ॥ ५६४ ॥ यद्यस्मात्तत्तस्मा त्सर्वप्रमाणप्रसिद्धिद्योतकवैशब्दबलात् ॥ ५६५ ॥ ५६६ ॥ अतः वेदएवविष्णो स्सर्वोत्तमत्वप्रतिपादनात् । विरोधेत्वित्यनेन विरोधेत्वनपेक्षंस्यादसतिह्यनुमानमितिसूत्रंसंगृह्णाति । अनपेक्ष मप्रमाणं अनुमानं 

मूलश्रुत्यनुमापकं ॥५६७॥ तत्तस्मा द्देवानांदेवस्त्रीणांचमध्यगतत्वात् ॥५६८॥ नान्वश्नुवंतीत्यादिना परोमात्रयेतिश्रुतिमुपादत्ते । अत स्तन्महिम्नोन्यैरप्राप्यत्वकथनात् । तेन विष्णुना ॥ ५६९ ॥ एवं नारायणस्यैवब्रह्माद्युत्तमत्वरूपपरब्रह्मतांप्रसाध्य तस्य परोदीरितसर्वधर्मराहित्यरूपनिर्गुणत्वंच धर्माणामनित्यत्वाद्धानिवृत्तिरंगीक्रियते उत मिथ्यात्वादितिविकल्प्य नद्वेधापीतिनिरा कर्तुमुपक्रमते ॥ जातोवेत्यादिना ॥ अनेन नतेविष्णो इतिश्रुतिमर्थतउपादत्ते ॥ ५७० ॥ तस्मा दंतमवसानंनापेतिकालपरि

यत्तालक्ष्म्यादिभृग्वंतादेवादेव्यश्चमध्यगाः ॥ तत्ताःस्त्रीपुंसयोरशक्तदेवतोत्त्याश्रुतिर्जगौ ॥५६८॥
नान्वश्नुवंतितेविष्णोमहित्वमितरेत्विति ॥ यतश्श्रुतिरतोप्यैक्यंतेननान्यस्यकस्यचित् ॥ ५६९ ॥
जातोवाजायमानोवाविष्णो कश्चित्पुमांस्तव ॥ महिम्नोंतंपरंनापेत्याहकाचिच्छ्रुतिःप्रभुं ॥ ५७० ॥
तस्मान्नित्योस्यमहिमानकदापिनिवर्तते ॥ सत्यस्सोअस्यमहिमेत्युक्तेश्चननिवर्तते ॥ ५७१ ॥
अतस्त्वन्निर्गुणत्वंतुनास्यस्याद्धिकदाचन ॥ तस्मात्त्रिगुणशून्यत्वान्निर्गुणोप्ययमेवहि ॥ ५७२ ॥

च्छेदरूपांतशून्यत्वकथनात् । सत्यस्सोअस्यमहिमेतिश्रुत्या उक्तेः सत्यत्वोक्तेः । नचवाच्यं सपरमात्मासत्यइतिब्रह्मणएवसत्य त्वमुच्यतेनमहिम्नइति । तथासति अस्यमहिमेतिवाक्यशेषे आकांक्षापूरकपदाभावादपरिपूर्णत्वप्रसंगेन अस्यपरमात्मनः सः श्रु तिप्रसिद्धोमहिमा सत्यइत्येकवाक्यतयैवयोजनीयत्वात् ॥ ५७१ ॥ अतः द्वेधापिनिर्गुणत्वायोगात् । तस्मा त्सर्वधर्मशून्यत्वरू

पनिर्गुणत्वायोगात् ॥ ५७२ ॥ तत्तस्मा न्निमित्तत्रयात् ॥ ५७३ ॥ इदानीं धर्माणांनित्यत्वेनापिमिथ्यात्वाभावइत्याह ॥ नचेति ॥ ५७४ ॥ पूर्वोक्तहेतुंचस्मारयति ॥ सत्यइति ॥ ततश्च नित्यत्वात्सत्यत्वाच्च ब्रह्मवन्नमिथ्येति मिथ्यात्वाभावेपिहेतुद्वयं घटतइतिभावः ॥ ५७५ ॥ तद्ग्रासतां निर्गुणोक्तिग्रासतां ॥ ५७६ ॥ पूर्वंकेवलोनिर्गुणश्चेत्यत्रनिर्गुणइतिपदच्छेदमंगीकृत्यदूषण मभिहितं । अधुनोपनिषदामनियतपदत्वेन अनिर्गुणइत्येवपदच्छेदस्यसुकरत्वात् त्वदभिमतनिर्गुणत्वसाधकमेवनास्तीतिसाहि

ब्रह्मार्यंगुणपूर्णत्वात्परमश्चोत्तमत्वतः ॥ तन्निर्गुणंचपरमंब्रह्म नारायणस्सदा ॥ ५७३ ॥ नचतद्गुणमिथ्या
त्वान्निर्गुणाऽवसरस्तव ॥ नित्यस्यब्रह्मवन्मिथ्यात्वस्यैवानुपपत्तितः ॥ ५७४ ॥ सत्यस्सोअस्यमहिमेत्याहत
त्सत्यतांचवाक् ॥ अतस्त्वन्निर्गुणोक्तिश्चत्रिगुणानांविमोचिका ॥५७५॥ नित्यस्सत्यश्चमहिमाकथंतद्ग्रासता
मियात् ॥ ५७६ ॥ नञापरशुनाछिन्नेपदेत्वांनानुयातिसा ॥ गुणसत्यत्वनित्यत्वकारूत्तेजितमूर्तिना ॥ ५७७॥

त्यमुद्रयाह ॥ नञेति ॥ नञा अकारेण। अभावसंपादकत्वात्परशुनेत्युक्तं । पदे निर्गुणपदे छिन्ने अनिर्गुणइतिनिर्गुणत्वविरुद्धाकारमापन्ने सा केवलोनिर्गुणइतिवाक् त्वां मायावादिनं नानुयाति त्वदभिलषितनिर्गुणत्वमर्थंनवदति । छिन्नपदस्यानुयात्राभावोध्वनितः । अस्मदभिलषितानिर्गुणपदस्य वेदवाक्यरूपमंत्रशक्त्यासंपादितत्वात्अस्मदनुयानंतुयुक्तमितिध्वनितं । प्राक्साधिते गुणसत्यत्वनित्यत्वेएव कारू ताभ्यामुत्तेजितमूर्तिना नञेतिसंबंधः। फूत्काराऽयस्ताडनकर्त्रोरुभयोरावश्यकत्वाद्विवचनं।

उत्तेजनंनाम सत्यनित्यगुणनिषेधासंभवेन अकारपरशोरावश्यकत्वाख्यधारासंपादनं । सत्यनित्यगुणानांनिर्गुणइतिनिषेधायोगात् अनिर्गुणइतिपदच्छेदःकर्तव्यइतिभावः ॥ ५७७ ॥ फलितमाह ॥ एवंचेति ॥ अनिर्गुणत्वार्था वागितिशेषः । क्षिपेन्निराकुर्यात् । अघटंभूतलमित्यत्रघटस्येव अनिर्गुणपदेननिर्गुणत्वस्यैवनिषेधादितिभावः । अतः निर्गुणत्वोक्त्यभावात् । निर्गुणोक्तिबलादेवहिश्रौतानांगुणानांमिथ्यात्वंपरआशास्ते तस्यैवमूलेकुठारन्यायेनछिन्नत्वान्नपरस्यात्रप्रत्याशा । नकेवलमेतावन्मात्रं किंतु अ

**एवंचानिर्गुणत्वार्था यत्तेनिर्गुणतांक्षिपेत् ॥ अतस्तद्गुणमिथ्यात्वसाधकंचनकिंचन ॥ ५७८ ॥ तदुक्तगुणसत्यत्वनित्यत्वे नौपचारिके ॥ ५७९ ॥ नेहनानेत्यादिवाक्यमपितस्मान्नतान्क्षिपेत् ॥ नित्यंसत्यंपरंब्रह्म किं शून्यत्वश्रुतिःक्षिपेत् ॥ ५८० ॥ किंचब्रह्मणितद्वाक्यंनानाभूतंनिषेधति ॥ ५८१ ॥ अभिन्नसुगुणस्तोममन्वजानाड्डिसास्फुटं ॥ नचेद्ब्रह्मणिजीवैक्यमपिशक्यमपोहितुं ॥ ५८२ ॥**

निर्गुणइत्युक्ते त्वदभिमतनिर्गुणत्वस्यैवसाक्षात्प्रतिषेधान्निर्गुणत्वेप्याशानकार्येतिभावः ॥ ५७८ ॥ तच्छ्रौतगुणसत्यत्वनित्यत्वयोः व्यावहारिकसत्यत्व बहुकालावस्थायित्वरूपसंकोचकारणनिर्गुणोक्त्यभावात् ॥ ५७९ ॥ इदानीं नेहनानेतिवाक्यबलादपिश्रौतभगवद्गुणानांमिथ्यात्वंनाशास्यमित्याह ॥ नेहेति ॥ तस्मा त्सत्यत्वनित्यत्वयोश्श्रौतत्वात् । तत्रदृष्टांतमाह ॥ नित्यमिति ॥ किमाक्षेपे ॥ ५८० ॥ प्रकारांतरेणापिनेहनानेतिवाक्यंनगुणनिषेधकमित्याह ॥ किंचेति ॥ ५८१ ॥ विपक्षेबाधकंचाह ॥ नचे

युक्ति- दिति ॥ अपोहितुंनिराकर्तुंशक्यमितियोजना । ऐक्यस्यापिब्रह्मधर्मत्वाविशेषेण ब्रह्मणिकिंचन नास्तीतिवाक्यस्यपक्षपातायोगा मल्लिका
॥ ८७ ॥ त् ॥ ५८२ ॥ अभिन्नगुणानांधर्मधर्मिभावो ब्रह्माभिन्नैक्यस्य ब्रह्मणऐक्यमितित्वयैवसदाव्यवह्रियमाणधर्मधर्मिभाववद्घटतइ गुणसौ०
त्याह ॥ अभिन्नेति ॥ एकशेषः धर्माःनसंति ब्रह्मैवास्तीत्येकस्यैवावशेषः । तद्वदैक्यवत् । अभेदेपि यथा तवैक्यमप्यस्तिब्रह्मा
प्यस्ति तथास्माकमपीतिभावः । लोकमर्यादया घटस्य घटत्वादितद्धर्माणांचाभेदेपि एकशेषाभावरूपया । धर्मधर्मिणोरभेदस्य
भेदाभेदवादिनात्वयाप्यंगीकारात् ॥ ५८३ ॥ ऐक्यस्यब्रह्ममात्रतैव नतद्धर्मतेतिवदतो बाधकांतरंचाह ॥ पर्यायेति ॥ घटःक

अभिन्नधर्मधर्मित्वमपिशक्यंतवैक्यवत् ॥ एकशेषोपितद्वन्न लोकमर्यादयापिन ॥ ५८३ ॥ पर्या
यशब्दवाच्यत्वादज्ञातत्वाद्विवादतः ॥ ऐक्यं नब्रह्ममात्रंतेगुण्यभिन्नगुणस्तथा ॥ ५८४ ॥ तच्च
ब्रह्मणिसामर्थ्यविशेषाद्घटतेमम ॥ तवतूक्तैक्यवादेस्मिन्निर्विशेषमतंगतं ॥ ५८५ ॥

रीरःकलशइतिवद्ब्रह्मणस्तदैक्यस्यचपर्यायशब्दवाच्यत्वात् । प्रत्युत ऐक्यंब्रह्मचेत्यपर्यायशब्दवाच्यत्वात् । नह्यैक्याभेदशब्दवदै
क्यब्रह्मशब्दावपिपर्यायौ । तन्मात्रत्वेतु तद्वदेव तदपिस्यादितिभावः । अज्ञातत्वात् ब्रह्मणोज्ञातत्वेप्यैक्यस्यअज्ञातत्वांगीकारात्। ॥ ८७ ॥
विवादतः ब्रह्मण्यविवादेपि ऐक्येवादिविवादात् ॥ ५८४ ॥ नन्वभेदेधर्मधर्मिभावःकथंघटतइत्यतस्स्वमतेसाधकमाह ॥तच्चेति॥
तत् अभिन्नधर्मधर्मित्वं । ममेतिवदता निर्विशेषवादिनस्तवगतिर्नेतिसूचितं । अगत्यामयापीदमंगीक्रियतइतिवदंतंप्रत्याह ॥ तव

त्विति ॥ उक्तविरुद्धस्वभावत्वघटनाय ऐक्यब्रह्मणोरभेदोवात्याज्यः अभिन्नयोर्विरुद्धस्वभावघटकविशेषस्यांगीकार्यत्वात् नि
र्विशेषमतंवात्याज्यमित्युभयतःपाशारज्जुरितिभावः ॥ ५८५ ॥ तर्हिसविशेषब्रह्मवादिनांमते निर्विशेषोक्षरश्शुद्धइतिश्रुतेःकाग
तिरित्यतआह ॥ नेति ॥ विशेषःआधिक्यं अधिकंवस्तुवा । तस्मात्अभिन्नश्रौतधर्माणांधर्मधर्मिभावघटकोक्तसामर्थ्यरूपविशे
षस्यआवश्यकत्वात् ॥ ५८६ ॥ अधुनाअनुगतजातिसद्भावेधर्मधर्म्यैक्यवादिनांमतेतदभिन्नधर्मिणामप्यैक्यंस्यादित्याशंक्यतां

नविद्यतेविशेषस्तुयस्मादित्यखिलेशतां ॥ निर्विशेषश्रुतिस्तस्मात्प्राहास्माकंतवापिच ॥ ५८६ ॥
व्यवहारादनुगतात्सर्वत्रानुगतासदा ॥ जातिश्चैकाखिलार्थेषुसत्ताद्यावर्ततेकिल ॥ ५८७ ॥ इति
ब्रवीतिकोप्यज्ञस्सप्रष्टव्योविवेकिभिः ॥ व्यवहारानुगमनंनामतस्यैकताकिमु ॥ ५८८ ॥ उतत
स्यैकधर्मेणावच्छिन्नत्वमुदीर्यते ॥ एकाकारत्वमथवावक्तव्यंनापरंहितत् ॥ ५८९ ॥ नाद्यःप्रयोजका
सिद्धेर्वादिनोरुभयोरपि ॥ प्रतिवादिमतासिद्धेर्द्वितीयोपिनशोभते ॥ ५९० ॥

निराकर्तुमुपक्रमते ॥ व्यवहारादिति ॥ कोपि अनुगतव्यवहारस्यअनुगतधर्मप्रयोज्यत्वादितिवदन्तार्किकः ॥ ५८७ ॥ ५८८ ॥
॥ ५८९ ॥ प्रयोजकासिद्धेः घटोयंघटोयमितिबहुभिर्बहुधाक्रियमाणानांव्यवहाराणामैक्यासिद्धेः । प्रतिवादिमतासिद्धेः प्रतिवा
दिमतेअसिद्धेः । अद्यापिव्यवहारावच्छेदकीभूतघटत्वादिजातेःतत्ववादिनांमते एकत्वासिद्ध्याप्रयोजकस्यान्यतरासिद्धेः । नचश

ब्दनित्यत्ववादिनांतेषामेकघटशब्दघटितत्वादनुगतव्यवहारस्यैकधर्मावच्छिन्नत्वमितिवाच्यं । तेनैवान्यथासिद्धेः । घटकरीरकलशादिपर्यायशब्दैस्तत्रतत्रव्यवहारसंभवेनशब्दैक्यस्याप्ययोगाच्च ॥ ५९० ॥ अप्रयोजकतादोषः अप्रयोजकत्वासिद्धिरूपदोषः । अप्रयोजकत्वमुपपादयति ॥ नानेति ॥ नानासमानव्यवहारेण भिन्नभिन्नैकप्रकारव्यवहारेण तादृशः प्रत्येकंधर्मिषुभिन्नभिन्नः

अप्रयोजकतादोषस्तृतीयंपक्षमाक्षिपेत् ॥ नानासमानव्यवहारेणधर्मोपितादृशः ॥ ५९१ ॥
सिद्ध्येत्परंतस्यसर्वत्रैकताकिंकृतावद ॥ यक्षानुरूपोहिबलिःप्राचांवाचमनुस्मर ॥ ५९२ ॥ अ
खंडजातेरेकैकोयद्वंशोव्यक्तिषूच्यते ॥ घटास्तर्हिघटांशाःस्युर्घटस्तुस्यान्नकश्चन ॥ ५९३ ॥ संपू
र्णपटताशून्यपटांशेष्वंशधीरिव ॥ संपूर्णजात्यनाधारेस्यादंशत्वप्रमापरं ॥ ५९४ ॥ आका
शांशेषुचाकाशशब्दोक्तिरुपचारतः ॥ अवकाशप्रदत्वाख्ययोगसंभवतोपिवा ॥ ५९५ ॥
अनेकव्यंजकव्यंग्यायथैकाजातिरुच्यते ॥ तथाऽनेकघटत्वेभ्योवागेकैवप्रवर्ततां ॥ ५९६ ॥

एकप्रकारश्च । किंकृता प्रयोजकेषुकस्याप्यैक्याभावात् ॥ ५९१ ॥ ५९२ ॥ अखंडजात्यंगीकारेदूषणांतरमाह ॥ अखंडेति ॥५९३॥ दृष्टांतमाह ॥ संपूर्णेति ॥संपूर्णपटताशून्यपटांशेषुएकैकतंतुष्वित्यर्थः । उक्तमर्थंदार्ष्टांतिकेदर्शयति ॥संपूर्णेति॥ ५९४॥ कथंतर्हि आकाशांशेष्वपिआकाशव्यवहारइत्यतोद्वेधापरिहारमाह ॥ आकाशेति ॥५९५॥ पूर्वमनुगतव्यवहारएवनास्तीत्युक्तं ।

अधुनाअस्तुवाअसौव्यवहारः तथापिनानुगतजातिसिद्धिरितिसदृष्टांतमाह ॥ अनेकेति ॥ ५९६ ॥ प्रकारांतरेणव्यवहारस्यैकत्वेपिजातेरेकत्वंनापेक्षितमित्याह ॥ शब्दैक्यंचेति ॥ ते शब्दानित्यत्ववादिनस्तवपक्षे शब्दैक्यंनास्ति प्रतिव्यवहारंघटादिपदानांतदातदाउत्पत्त्यंगीकारात् । ततः एकव्यवहारस्यानेकशब्दप्रयोज्यत्वात् । तत्रापि जातिनिमित्तकानुगतव्यवहारेपि। नियम्योव्यवहारः नियंतुर्जातेः एकतामितिसंबंधः। तेपक्षइत्यनेन शब्दनित्यत्ववादिनोममतेउक्तव्यवहारस्यशब्दरूपैक

शब्दैक्यंचनतेपक्षेततस्तत्रापिचैकतां ॥ स्वनियं(न्त्र्यानि)तुर्नियम्योसौनसहेतेतिमेमतिः
॥ ५९७ ॥ कारणत्वान्यनेकानितत्रतत्रतवापिच ॥ तदवच्छेदकस्यापिकथंनस्यादने
कता ॥ योगुरूणांगुरुस्तस्यगुरुतैवहिशोभते ॥ ५९८ ॥ व्यंजकानुगतोक्तिश्चजातिष्व
नुगतैकवाक् ॥ नकिलैकेननियतामध्येयंत्रेकताकुतः ॥ ५९९ ॥

धर्मप्रयोज्यत्वसंभवेन त्वदुक्तन्यायस्यान्यथासिद्धिरितिसूचितं ॥५९७॥ कारणतावच्छेकत्वेनापिनजातेरेकत्वसिद्धिरित्याह॥ कारणत्वानीति ॥५९८॥ लाघवादवच्छेदकस्यैकत्वमितिपक्षंअन्यापदेशेनदूषयति ॥ योगुरूणामिति ॥ गुरोर्गुरुर्हिपरमगुरुरेवदृष्टः नतुलघुः । तथाअनेककारणतावच्छेदकस्यअनेकतैवोचितेतिभावः । व्यंजकस्य जातिव्यंजकस्य पृथुबुध्नोदराकारत्वादे रनुगतोक्तिः पृथुबुध्नोदराकारोयं पृथुबुध्नोदराकारोयमित्यादिरूपा । जातिषु घटत्वपटत्वादिषु अनुगतैकवाक् इयंजातिरियंजातिरित्यादिरूपा ।

युक्ति- एकेनधर्मेण । व्यवहारद्वयेत्वयापिजातिप्रयोज्यत्वानंगीकारात् । मध्ये घटोयमित्याद्यनुगतव्यवहारे । यंत्रेकता नियामकजात्येकता मल्लिका
॥ ५९९ ॥ इदानींपराभिमतसमवायसंबंधायोगाच्चनघटत्वादिजातिरंगीकार्येत्याह ॥ प्रलयइति ॥ साजातिः । घटत्वादिजातेर्घ गुणसौ०
॥ ८९ ॥ टादिव्यक्त्यायुतसिद्ध्यभावान्नतयोस्समवायः । अयुतसिद्धयोस्संबंधःसमवायइतिहितेमंतं । एवंचासंबंधाख्यजातिबाधकान्नसा
जातिरंगीकार्येतिभावः ॥ ६०० ॥ स्थलांतरेष्वपिव्यभिचारमाह ॥ अभावेष्विति ॥ ६०१ ॥ अनेकेषामनेकव्यवहारोपयोगिजाते

प्रलयेसर्वदेशेचजातिर्नित्यास्तिचेत्तदा ॥ व्यक्त्यानायुतसिद्धासायावश्यंनापराश्रया ॥ ६०० ॥
अभावेषुनकिंचित्तेविशेषेषुनकिंचन ॥ एकंनियामकंतस्मात्ततोन्यत्रापितद्वृथा ॥ ६०१ ॥ बहुकृ
द्बहुताव्यासस्तच्छून्योयाचतेहितां ॥ एकःकुठारोयत्कार्यलक्षेव्यापारलक्षवान् ॥ ६०२ ॥ तस्मा
दनेककार्येषुकस्मादेकोविमृग्यते ॥ तत्तद्व्यक्त्यन्वयीसोपितत्तत्कर्तायतोंततः ॥ ६०३ ॥ अतोधर्म
स्यधर्म्यैक्यं धर्मिणांचैकताभवेत् ॥ इत्यादिदोषैर्दूष्यंनपोष्यमेवाखिलैर्बुधैः ॥ ६०४ ॥

रनेकतैवन्याय्या नत्वेकतेत्येतत्सदृष्टांतमाह ॥ बहुकृदिति ॥ बहुकृ द्घटपटादिबहुकार्यकृत् कुलालकुविंदादिः । तांबहुतां ।
व्यापारलक्षवान्दारुसंयोगाख्यव्यापारलक्षवान् ॥ ६०२ ॥ तत्तद्व्यक्त्यन्वयी तत्तद्व्यक्त्याधारताख्यभिन्नभिन्नस्वरूपसंबंधरूपा ॥ ८९ ॥
न्वयवान् । सोपि जातिपदार्थोपि ॥ ६०३ ॥ जातेरेकत्वखंडनस्यप्रकृतोपयोगंदर्शयति ॥ अतइति ॥ अतो जात्यैक्यखंडना

त् धर्म्यैक्यंदूष्यंनेतिसंबंधः ॥६०४॥ पोष्यत्वेहेतुद्वयमाह ॥ एवंधर्मानिति ॥६०५॥ सूर्योदयादिदर्शननिंदायामपि सूर्योदयादे
रिव धर्मपृथक्त्वदर्शननिंदायामपि धर्मपृथक्त्वस्य नाभावइतितार्किकशंकामनूद्यदूषयति ॥ नेक्षेतेति ॥ ६०६ ॥ सदुत्तरकुमारकं
समीचीनोत्तराख्यकुमारकं । समर्थोत्तरकुमारमितिध्वनिः । परेषांप्रतिवादिनां । कौरवाणामितिध्वनिः । कंठमणिं कंठालंकारभूत

एवंधर्मान्पृथक्पश्यंस्तानेवानुविधावति ॥ इतिश्रुते घटोनीलइतिव्यवहृतेरपि ॥ ६०५ ॥ नेक्षेतोद्यं
तमितिवद्दृश्यात्रस्यनिषेधने ॥ नार्थासत्त्वमितिप्राहविपश्चित्किलकश्चन ॥ ६०६ ॥ तस्यापिसूतेयु
क्तिस्त्री सदुत्तरकुमारकं ॥ यःपरेषांकंठमणिंजिघृक्षतिरणांकणे ॥ ६०७ ॥ सूर्योदयोपिदिविजैर्दिति
जैस्स्वेनचेक्ष्यते ॥ दोषादभीरुभिर्दोषमजानद्भिर्नरैरपि ॥ ६०८ ॥ नग्नस्त्रीचस्वनयनैस्स्वसखीनयनै
रपि ॥ रंतॄणांरागकलुषचक्षुषाचेक्ष्यतेकिल ॥ ६०९ ॥ श्रुतिश्चचक्षुषैवैषांवीक्षणंनानुमन्यते ॥
ईक्षाहिचाक्षुषंज्ञान मनुमानागमादिभिः ॥ अन्वमंस्तचतज्ज्ञानमतस्तद्बाधनंकुतः ॥ ६१० ॥

वाग्विलासं । कंठमालामितिध्वनिः । रणांकणे वादयुद्धे । उत्तरगोग्रहणयुद्धइतिध्वनिः ॥ ६०७ ॥ यस्यदर्शनंश्रुत्यानिंद्यते
तस्यसत्त्वमित्युत्सर्गः । सचार्थस्य प्रमितत्वेसति अनन्यगत्याअपोद्यते नापरथा । प्रकृतेच नेक्षेतोद्यंतमित्यादावपवादकस
द्भावात्कथमसौनापोद्यइत्याह ॥ सूर्योदयोपीत्यारभ्य चक्षुषाचेक्ष्यतेकिलेत्यंतेन ॥ ६०८ ॥ ६०९ ॥ प्रकारांतरेणापि नेक्षे

तेत्यादिश्रौतदर्शननिषेधस्यार्थाबाधकतामुपपादयति ॥ श्रुतिश्चेति ॥ तज्ज्ञानं सूर्योदयादिज्ञानं ॥ ६१० ॥ उक्तप्रकारद्वयमपि एवंधर्मानितिश्रुतौनघटतइत्याह ॥ दर्शनायोग्येति ॥ दर्शनायोग्यधर्मेषु अतींद्रियभगवद्धर्मेषु यत्पृथक्त्वंपरेणाशंक्यते तस्य पृथक्त्वस्यदर्शनं ज्ञानरूपमेवप्रसक्तंस्यात् । नतुचाक्षुषं । अतींद्रियभगवद्धर्मनिष्ठपृथक्त्वस्याप्यतींद्रियत्वेन चाक्षुषज्ञानप्रसक्तेरेवाभावेन तन्निषेधस्याप्यनवसरदुस्थत्वात् प्रसक्तज्ञानमात्रस्यायंनिषेधइतिभावः । अनेन सूर्योदयादाविवो त्सर्गन्यायापवादकं कैश्चित्प्रत्यक्षेणदृश्यमानत्वं प्रकृतेनास्तीतिसूचितं । एवंच यस्यार्थस्यसत्तायां प्रबलंप्रत्यक्ष मागमोवास्पष्टमस्ति । तत्रतद्दर्शननिं

दर्शनायोग्यधर्मेषुपृथक्त्वस्यचदर्शनं ॥ ज्ञानरूपंप्रसक्तंस्यात्पश्यार्थंतद्वदंतिहि ॥ ६११ ॥ तस्मात्त
स्यनिषेधेस्यादप्रामाणिकतैवहि ॥ अर्थाभावाविनाभूतानिंदासर्वत्रचेदृशी ॥ ६१२ ॥ केशस्यपूर्ण
ब्रह्मत्वादीशोपिस्वगतांभिदां ॥ नान्वमन्यत तेनेयंकेनमान्यामनीषिणा ॥ ६१३ ॥

दायां निषेधादेवपापहेतुता यस्यचार्थस्यसत्तायां प्रबलंप्रत्यक्ष मागमोवानास्ति तस्यदर्शननिंदायां मिथ्यादृष्टित्वादेवपापहेतुतेतिविवेकः । धर्मभेदोस्तीतिसाक्षाद्भेदप्रतिपादकश्रुत्यभावात् नित्येश्वरधर्मेषु एकसत्त्वेप्यपरनाशाख्य संकीर्णधर्मधर्म्यादिभेदकभेदासाधारणलिंगाभावाच्च । हेत्वंतरंचाह ॥ पश्येति ॥ पश्यार्थं पश्यतिधातोरर्थं तत्ज्ञानमात्रं । हीत्यनेन पश्यार्थैश्चानालोचनइतिसूत्रंसूचयति ॥ ६११ ॥ तस्यज्ञानमात्रस्य । ईदृशी नजानीयादेवेत्यादिरूपावा पृथक्जानन्नधोयातीत्यादिरूपावा॥६१२॥ अतींद्रियाणामपिधर्माणांपृथक्त्वं सर्वापरोक्षीईश्वरस्साक्षात्कुरुतइत्याशंकांपरिहरति॥ केशस्येति ॥ केशस्य मूलरूपभगवत्केशा

त्मककृष्णस्य स्वगतां स्वावतारस्वगुणादिगतां । इयं स्वधर्मभिदा ॥ ६१३ ॥ प्रकारांतरेणदृष्टांतवैषम्यमुपपादयति॥यस्येति॥ यस्यसूर्यादेः उदयकालादिकालविशेषे । उपलक्षणमेतत् । अवस्थाविशेषइत्यपिद्रष्टव्यं । सा सामान्यदृङ्निषेधविषयता ॥६१४॥ उभयत्रापिदृष्टांतमाह ॥ इदानीमिति ॥ तदेव नृश्रृंगमेव ॥ ६१५ ॥ उपसंहरति ॥ अतइति ॥ अतः एवंधर्मान्पृथक्प

यस्यकालविशेषेदृङ्निषेध्या सनबाध्यते ॥ यस्यदृक्तु सदानेतिसामान्येनैववार्यते ॥ तत्रार्थस्यापि बाधःस्यादप्रामाणिकताहिसा ॥ ६१४ ॥ इदानींनघटोदृष्टइत्युक्तेनघटोमृषा ॥ नरश्रृंगंनैवदृष्टमित्यु क्तेतुतदैवन ॥ ६१५ ॥ अतस्त्व(दृष्ट)दुक्तदृष्टांतोविषमोभ्रूद्विचारणे ॥६१६॥ द्रष्टव्योनैवदोषोस्मिन्नि त्युक्तेतददोषता ॥ यथासिद्ध्येत्तथाधर्मपार्थक्येक्षणशिक्षणे ॥ धर्माणामपृथक्त्वंचासिद्ध्येदेवममप्र भौ ॥ ६१७ ॥ द्वितीयाभिनिवेशेनभयंस्यादितिचोदिते ॥ द्वितीयस्यैवबाध्यत्वांकिंनोचुस्तवपूर्वजाः ॥६१८॥ त्रयाणामेकभावानांयोनपश्यतिवैभिदां॥इत्युक्तिस्तेभिदांद्वेष्टुमैक्यंपोष्टुंचभ्रूःकिल॥६१९॥

श्यन्निति धर्मपृथक्त्वदर्शननिषेधस्य कालविशेषाद्यनालंबित्वात् ॥ ६१६ ॥ भगवत्येव सामान्यदर्शननिषेधस्यार्थाभावसाधकत्वं दृष्टांतमुखेनदर्शयति ॥ द्रष्टव्यइति ॥ अस्मिन्भगवति ॥ ६१७ ॥ इयंशंका नमायावादिनाकर्तुंशक्येत्याह ॥ द्वितीयाभि निवेशेनेति ॥ उदितेउक्तेसतिचेतिसंबंधः ॥ ६१८ ॥ त्रयाणां भिदां हरिहरब्रह्मणांभिदां । ऐक्यं तेषामैक्यं । भूः स्थानं । य

थात्र तव भेददर्शननिंदायां भेदस्यासत्त्वं एवं ममापि पृथक्त्वदर्शननिंदायां पृथक्त्वाभावस्सेत्स्यति। यथाच तवात्र त्रिदेवताभेददर्शननिंदायां भेदमात्रस्यासत्त्वं नदेवानां। तथा धर्मपृथक्त्वदर्शनानिंदायां धर्मपृथक्त्वस्यैवासत्त्वं नधर्माणामितिसमग्रोपमेयं ॥ ६१९ ॥ एवंशंकितुर्मायावादिनःप्रकारांतरेणस्वव्याहतिमाह ॥ **सर्वत्रेति** ॥ भिदां धर्मभेदं ॥ ६२० ॥ अधुनाऽस्यामेवोपनिषदि नेहनानास्तिकिंचनेत्यादौ ब्रह्मणिस्वगतनानात्वस्यैवनिषेधादर्थाभावप्रयुक्तैवदर्शननिंदेत्याह ॥ **किंचेयमिति** ॥ ६२१ ॥

**सर्वत्रभेदमिथ्यात्वंसाधयंस्त्वंदुराग्रही ॥ कथमद्याद्वितीयस्मिन्भिदामाधातुमिच्छसि**
**॥ ६२० ॥ किंचेयंश्रुतिरेवादौनेहनानास्तिकिंचन ॥ इत्यादिनाभिदामेनांनिषेधतिपदे**
**पदे॥ ६२१ ॥ अतस्तज्ज्ञाननिंदापिमिथ्याभूतार्थदृक्त्वतः ॥ इतिमन्यामहे तस्माद्धर्मा**
**धर्म्यात्मकाःप्रभोः ॥ ६२२ ॥ धर्मिसत्त्वेपियन्नश्येत्तत्रभेदोपिमृग्यते ॥ भेदस्यासाधार**
**णंहिकार्यंनाशाविनाशनं ॥६२३॥ अनश्यद्रिपुहस्तो यद्भिनत्त्यन्यंविनाशिनं ॥ ६२४ ॥**

॥ ६२२ ॥ इदानींभगवद्धर्माणांभेदाभेदशंकांसयुक्तिकंनिराकरोति ॥ **धर्मिसत्त्वेपीति** ॥ यद्रूपादिकं । नाशाविनाशनं एकनाशेप्यपराविनाशनं । हियस्मान्नाशाविनाशनं भेदासाधारणकार्यं तस्मादितिपूर्वेणान्वयः ॥ ६२३ ॥ अत्रदृष्टांतमाह ॥ **अनश्यदिति** ॥ यद्यस्मा द्भिनत्ति विदारण मन्योन्याभावरूपंभेदंच साधयति । घातकाद्भेदाभावे वध्यभावस्यैवायोगादितिभावः

॥ ६२४ ॥ इदानीं तत्त्वमस्याद्यैक्यवाक्यबलादपि नगुणमिथ्यात्वमित्याह ॥ **नापीति** ॥ ६२५ ॥ ६२६ ॥ वाक्यं तत्त्वमस्यादिवाक्यं । अर्थांतरे सादृश्यादिरूपे ॥ ६२७ ॥ सावकाशत्वादपिऐक्यवाक्यं ननिरवकाशसगुणश्रुत्युक्तगुणबाधकमित्याह ॥ **किंचेति** ॥ सत्यनित्येत्यनेन सगुणश्रुतेर्निरवकाशत्वंद्योतयति ॥ ६२८ ॥ विपक्षेबाधकमाह ॥ **नचेदिति** ॥ ६२९॥ गुणेषु

**नाप्यैक्यवाक्यबलतोविरोधिगुणविप्लवः ॥६२५॥ विरोधिगुणसंत्यागेस्यादैक्यंवाक्यगोचरं ॥ अवि**
**रुद्धोहिवाक्यार्थोयोग्यतायदपेक्षिता ॥६२६॥ यदिवाक्योदिताद्वैतादेवतद्गुणमोचनं ॥ तदान्योन्याश्र**
**योदोषोवाक्यमर्थांतरेनयेत् ॥ ६२७ ॥ किंचैकतोक्तिर्नायुक्तासादृश्यैक्यस्यसंभवात् ॥ सत्यनित्यगुण**
**त्यागस्सर्वथानोपपद्यते ॥ ६२८ ॥ अतःकस्यबलात्कस्यत्यागइत्येवचिंत्यतां ॥ नचेच्छून्योक्तिबलतः**
**सत्यंब्रह्मैवसंत्यज ॥६२९॥ व्यावहारिकता सत्ता नित्यत्वंचिरकालता ॥ गुणेषुयदितर्हिस्याद्ब्रह्मण्य**
**पितथैवते॥६३०॥ संदिग्धश्रुतिपंकस्थनैर्गुण्यस्तंभलंबिनः॥ कथंसत्यतयाश्रौतधर्मास्स्युर्व्यावहारिकाः**
**॥६३१॥ तदाप्यबाधेसत्यास्स्युर्बाधेतुश्रुत्यमानता ॥ अतोभ्यर्थ्यस्सएवार्थोयत्रवाग्द्वंद्वमानता॥६३२॥**

सत्यत्वंव्यावहारिकत्वं नित्यत्वंच चिरकालीनत्व मस्त्वितिशंकांपरिहरति ॥ **व्यावहारिकतेति** ॥ ६३० ॥ ब्रह्मणिस्पष्टशून्यत्वश्रुतिबलात्स्यादपितथा इहतुबाधकनिर्गुणश्रुतेरद्यापिसंदिग्धत्वात् नसा कल्पनायुक्तेत्याह ॥ **संदिग्धेति** ॥ संदिग्धेत्युपलक्षणं। अनिर्गुणइतिवैपरीत्यस्यैवोक्तत्वादित्यपिद्रष्टव्यं ॥ ६३१ ॥ दूषणांतरंचाह ॥ **तदापीति** ॥ तदा व्यावहारिकसत्यतायां।

युक्ति- अतः श्रुतेःप्रामाण्यस्यावश्यकत्वात् । सएव त्रिगुणविवर्जितत्वादिरेव ॥ ६३२ ॥ इदानींयुक्त्यैवगुणसत्यत्वनित्यत्वेसाधयति मल्लिका
॥ ९२ ॥ ॥ कथमिति ॥ स्वरूपस्य ब्रह्मस्वरूपस्यशक्तिबाधः सामर्थ्यरूपगुणबाधः । दृष्टांतमाह ॥ किमिति ॥ ६३३ ॥ युक्त्युपस्कार गुणसौ०
कश्रुतिमाह ॥ स्वाभाविकीति ॥ हीति श्रुतेः प्रसिद्धतामाह ॥ ६३४ ॥ पीलुपाकपिठरपाकाभ्यांहिलोकेपि पाकजरूपादिगुण
नाशः । सोपि क्वचिद्धर्मिनाशे क्वचिद्धर्मिणोविकारेचसति स्यात् । नत्वविकृताविनष्टधर्मिनिष्ठरूपादिगुणानां किमुतालौकिका

कथंस्वरूपस्याबाधेशक्तिबाधोभवेद्वद ॥ किमच्छिद्रघटेत्याज्याजलाहरणयोग्यता ॥६३३॥ स्वाभावि
कीज्ञानबलक्रियाचेत्याहहिश्रुतिः ॥ ६३४ ॥ पीलुपाकेनपिठरपाकतोवागुणक्षयः ॥ एकत्रधर्मिणोना
शोन्यत्रधर्मांतरंकिल ॥६३५॥ सतिधर्मिणिधर्माणांक्वात्यंताभावइष्यते ॥ क्षणमुत्पन्नमगुणमित्यप्या
ह्याग्रहात्परं ॥ तंतुनापटनिर्माणेकिंमध्येशुक्लतागता ॥६३६॥ धर्मिणोधर्मविकृतौविकारोस्त्येवकश्चन ॥
अविकारीतुयोधर्मीतद्धर्मोपिह्यविक्रियः ॥ किमाप्यपरमाणूनांशुक्लतायाःक्वचित्क्षयः ॥ ६३७ ॥

विनष्ट पाकायोग्य निर्विकारभगवतो रूपसौंदर्यगुणानामनाशइतिभावेनाह ॥ पीलुपाकेनेत्यादिना ॥ एकत्र पीलुपाके अन्य
त्र पिठरपाके धर्मांतरं सतिधर्मिणि पाकेनपूर्वनाशेसति धर्मांतरं ॥ ६३५ ॥ अत्यंताभाव स्सर्वथागुणाभावः । भवदुक्तनैर्गुण्य ॥ ९२ ॥
स्यनक्वाप्यवकाशइतिभावः । उत्पन्नंद्रव्यंक्षणमगुणंतिष्ठतीतितार्किकशंकांपरिहरति ॥ क्षणमिति ॥ आग्रहा त्कार्यकारणभावां

गीकाराख्याग्रहात् ॥ ६३६ ॥ ६३७ ॥ निमित्तत्रयेणहरेःपाकायोग्यत्वमुपपादयति ॥ हरिस्त्विति ॥ ६३८ ॥ ६३९ ॥ अनौपाधिकत्वान्नभगवद्गुणानामपगमइत्याह ॥ यदन्येति ॥ धर्म्यनाशे नाशनं नेतिसंबंधः ॥ ६४० ॥ अप्राकृतत्वाच्चब्रह्मणोनज्ञानादिगुणानांनाशइत्याह ॥ ज्ञानंचेति ॥ मनस्यपिनसर्वथाज्ञाननाशइत्याह ॥ पूर्वेति ॥ भावना संस्कारः ॥ ६४१ ॥ धर्मिव

द्विपाकप्रक्रियातोपिपाकायोग्येनविक्रिया ॥ हरिस्तुदहनांतःस्थःपीताग्निर्मुक्तचेतनः ॥ ६३८ ॥
अतस्तद्रूपसौंदर्यशौर्यधैर्यपराक्रमाः ॥ स्वातंत्र्यवशितेशत्वपूर्वास्सर्वेगुणाध्रुवाः ॥६३९॥ यदन्य
वरतोऽप्राप्तास्तेननौपाधिकाइमे ॥ अनौपाधिकधर्माणांधर्म्यनाशे ननाशनं ॥ ६४० ॥ ज्ञानंच
मानसंक्षय्यंसाक्षिज्ञानंत्वनश्वरं ॥ पूर्वनाशेपरंज्ञानंभावनावामनस्यपि ॥ ६४१ ॥ मनस्त्वा
णुत्वपूर्वास्तुधर्मास्तत्रापिधर्मिवत् ॥ सतिधर्मिणिधर्माणांसर्वथाकुत्रमुंडनं ॥ ६४२ ॥ धर्म्य
सत्त्वेपिधर्मस्सन्प्रतियोगित्वपूर्ववत् ॥ सतिधर्मिणिधर्माणामसत्त्वंतुनकुत्रचित् ॥ ६४३ ॥
रूप्यबाधेहिरूप्यत्वबाधोदृष्टोभ्रमेपिच ॥ अतश्श्रौतात्मधर्माणांबाधोप्येषनलौकिकः ॥६४४॥

न्मनोवत् । मनस्यपिनाणुत्वादिधर्माणांनाशः । घटादावपिसतिधर्मिणिनसर्वथाधर्मनाशः किमुतालौकिकेभगवतीतिभावः ॥६४२॥ धर्म्यसत्त्वेपि ध्वस्तघटादीनामभावेपि प्रतियोगित्वपूर्ववत् अभावप्रतियोगित्वज्ञेयत्वादिवत् । ब्रह्मनाशेपिनतद्धर्मनाशइतिभावः ॥ ६४३ ॥ लोकमर्यादयाब्रह्मधर्माणामनाश्यत्वमुपपाद्य लोकमर्यादयैवाबाध्यत्वमुपपादयति ॥ रूप्यबाधेहीति ॥ नतुरूप्या

बाधे । अतः धर्मबाधस्यधर्मिबाधाविनाभूतत्वात् । श्रौतेत्यनेनाबाध्यत्वेश्रुतिसिद्धत्वहेतुं आत्मेत्यनेनाबाध्यधर्मिकत्वंचहेतुंसूच यति । लौकिकः लोकदृष्टानुसारी ॥ ६४४ ॥ प्रायशःसर्वत्र धर्माणांधर्मिसत्तासमानसत्ताकत्वनियमदर्शनात् ब्रह्मधर्माणामपि ब्रह्मसत्तासमानसत्ताकत्वंस्यादित्याह ॥ घटादीति ॥ ६४५ ॥ विपक्षेबाधकमाह ॥ अदृष्टकल्पनेति ॥ दुरदृष्टस्य भगवन्महि मासहिष्णुत्वहेतुपापस्य । उक्तमर्थमुपसंहरति ॥ सत्याइति ॥ ततः लोकदृष्टत्वात् ॥ ६४६ ॥ धर्म्यनाशे धर्माणामप्यनाशइति



घटादिधर्मास्तत्सत्तासमसत्तायतोखिलाः ॥ अतस्सत्यात्मधर्माश्चसत्यास्स्युर्नात्रसंशयः ॥ ६४५ ॥
अदृष्टकल्पना कुर्याद्दुरदृष्टस्यकल्पनां ॥ सत्यानित्यास्ततोधर्मास्सत्येनित्येचधर्मिणि ॥ ६४६ ॥
ध्वनिस्तूपाधितोजातोनासौस्वाभाविकोगुणः ॥ ६४७ ॥ त्रिक्षणस्थायियत्प्राहुश्शब्दंबुद्धिंचकर्मच ॥
अतोपिनध्वनिर्व्यो( म्नि )मस्वभावोनश्वरोह्यसौ ॥ ६४८ ॥ अणुत्वंपरमाणोर्यन्महत्त्वंमहतोपिच ॥
अवकाशप्रदत्वंयद्गगनस्यकदानतत् ॥ अतस्स्वाभाविकाधर्मानश्येरन्धर्मिणःक्षये ॥ ६४९ ॥

नियमस्य ध्वनौव्यभिचारमाशंक्यपरिहरति ॥ ध्वनिस्त्विति ॥ उपाधितः भेरीताडनाद्युपाधितः ॥ ६४७ ॥ शब्दं ध्वन्यात्म कं । बुद्धिं मानसज्ञानं । सापि इंद्रियार्थजसन्निकर्षत्वादौपाधिकी । अतोपि त्रिक्षणावस्थायित्वादपि ॥ ६४८ ॥ स्वाभाविकध र्माणांधर्म्यनाशेऽविनाशंदर्शयति ॥ अणुत्वमिति ॥ त दणुत्वादिकं कदान सर्वदास्तीत्यर्थः । अतस्स्वाभाविकधर्माणांधर्म्य



नाशेऽनाशदर्शनात् ॥ ६४९ ॥ ब्रह्मधर्माणांस्वाभाविकत्वादिकंप्रमाणप्रसिद्धमेवेत्याह ॥ श्रुताविति ॥ स्वाभाविकाइत्युपलक्ष णं । सत्यानित्याश्चेत्यपिग्राह्यं । अधुनोक्तहेतुत्रयेण ब्रह्मधर्माणाममायिकत्वंचसाधयति ॥ सत्याइति ॥ तेधर्माः मायिकानेति संबंधः ॥ ६५० ॥ विद्यारूपधर्माणांमायिकत्वंविरोधादपिनेत्याह ॥ विद्ययेति ॥ विद्याऽविद्ययोर्विरोधस्पष्टः । शक्तितेजःप्र भृतीनामप्यर्जुनादिभिस्तपोरूपविद्ययैवसाधितत्वस्यपुराणादौप्रसिद्धत्वाद्विरोधोद्रष्टव्यः । उपसंहरति ॥ अमायिकेति ॥ तद्ध

श्रुतौस्मृतौचकीर्त्यंतेधर्मास्स्वाभाविकाहरेः ॥ सत्यानित्यास्स्वभावाश्चयेधर्मास्ते नमायिकाः ॥६५०॥
अविद्ययाकथं विद्या शक्तिस्तेजोबलंधृतिः ॥ अमायिकब्रह्मवत्तद्धर्मास्सर्वेप्यमायिकाः ॥ ६५१ ॥
सत्यत्वाचस्वभावत्वान्नित्यत्वाद्ब्रह्मवत्सदा ॥ अमायिकाब्रह्मधर्माइतिस्यादनुमापिनः ॥ ६५२ ॥
स्वनिष्ठधर्मोपाधातुस्स्यादुपाधेरुपाधिता ॥ मायाभिन्नत्वाजडत्वसत्त्वचित्त्वात्मतादयः ॥ ६५३ ॥
व्याप्तत्वनित्यशुद्धत्वमुक्तत्वाद्याहरेर्गुणाः ॥ जडेष्वसंभाविताःस्युर्मायोपाध्याहिताःकथं ॥ ६५४॥
हंतमायाबद्धतापिनमायोपाधिकात्वयि ॥ सर्वेश्वरत्वपूर्वतत्कःकुर्वीतमहाप्रभौ ॥ ६५५ ॥

र्माः ब्रह्मधर्माः ॥ ६५१ ॥ उक्तमर्थंप्रयोगारूढंकरोति ॥ सत्यत्वाचेति ॥ ६५२ ॥ स्वनिष्ठधर्माधायकस्यैवजपाकुसुमादेर्मुख्यो पाधित्वदर्शना द्ब्रह्मणिचोपाधित्वेनाभिमताविद्यायाः स्वानिष्ठस्वभिन्नत्वादिधर्माधायकत्वासंभवेन तेषामनौपाधिकत्वंयौक्तिक मित्याह ॥ स्वनिष्ठेति ॥ ६५३ ॥ ६५४ ॥ त्वयिजीवे मायोपाधिकान । मायाबद्धत्वस्यमायायामभावेनान्यत्रोपाधायकत्वायो

गात् । तत्तस्मा न्मायाबद्धत्वरूपहीनगुणस्यापिमायोपाधिकत्वायोगात् सर्वेश्वरत्वपूर्वं सर्वेश्वरत्वसर्वनियामकत्वादिकं कःकुर्वीत नकोपिकर्तुंशक्नोति । सर्वेश्वरत्वस्यान्यत्राभावेनतदुपाधानायोगात् । स्वनिष्ठसर्वेश्वरत्वस्यान्यायत्तत्वे तदधीनत्वावश्यंभावेनस र्वेश्वरत्वस्यव्याहतत्वाच्चेतिभावः ॥ ६५५ ॥ निरीक्षतइत्यादिना नयस्यमायागुणचित्तवृत्तिभिर्निरीक्षतोह्यण्वपिदृष्टिरज्यतइति वाक्यंसंगृह्णाति । तत्तस्मा न्मायासंबंधलेशस्याभावात् द्रष्टृत्वादयः द्रष्टृत्वप्रमातृत्वज्ञातृत्वादयोज्ञाननिमित्तकधर्माः । तदभावः

निरीक्षतोयस्यदृष्टिर्मायायाणवपिनाज्यते ॥ इत्याहपंचमस्कंधेतद्द्रष्टृत्वादयःप्रभोः ॥ स्वाभावि
काभवेयुर्हितदभावःकदावद ॥ ६५६ ॥ किंचोपाधिर्बिंबमेवप्रतिबिंबस्यशोभते ॥ स्वधर्माधा
यकत्वेनमायादिस्स्फटिकादिवत् ॥ निमित्तमात्रंतत्संगात्तन्नाम्नाभण्यतेपरं ॥ ६५७ ॥ तस्मा
द्ब्रह्मस्थसुगुणाएवतत्प्रतिबिंबके ॥ दृश्येरन्नान्यतस्तेस्युस्सूर्यकश्रीर्हिसूर्यतः ॥ ६५८ ॥

द्रष्टृत्वाद्यभावः ॥ ६५६ ॥ पूर्वंमायायाएवोपाधित्वमंगीकृत्यमायाभिन्नत्वादिब्रह्मगुणानांस्वाभाविकत्वंसमर्थितं । वस्तुतस्तु प्र तिबिंबस्यबिंबएवोपाधिः । स्वनिष्ठधर्माधायकत्वस्यतत्रैवसंभवात् । स्फटिकलौहित्यादौजपाकुसुमस्यैवोपाधित्वप्रसिद्धेश्च । एवं चप्रतिबिंबभूतजीवगुणानांकथंचिदौपाधिकत्वप्राप्तावपि बिंबभूतब्रह्मगुणानांस्वाभाविकत्वमेवन्याय्यमित्याह ॥ किंचोपाधिरि त्यारभ्य किंतेभून्नानुमानतइत्यंतेन । तत्संगादुपाधिसंबंधात् । तन्नाम्ना उपाधिनाम्ना ॥ ६५७ ॥ तस्मा द्बिंबस्योपाधित्वात् । ॥ ९४ ॥

तत्प्रतिबिंबके ब्रह्मप्रतिबिंबेजीवे । सूर्यकश्री स्सूर्यप्रतिबिंबश्रीः ॥ ६५८ ॥ तन्नाशनाशि बिंबनाशनाशि । हीत्यनेनास्यार्थस्य जपाकुसुमसूर्यादौप्रसिद्धिंदर्शयति । तद्बिंबगुणजातं ॥ ६५९ ॥ सर्वस्य लक्ष्म्यादिपिपीलिकांतसमस्तचेतनसमुदायात्मकस्यप्रतिबिंबस्य यद्बिंबं मूलीभूतं तदेव मेब्रह्महीतियोजना । त द्बिंबभूतंब्रह्म सत्य मबाध्यं । नित्यं सार्वकालिकं । एवंच तवनिर्गुणंकदास्यात् अवसराभावादितिभावः ॥ ६६० ॥ अनुमानप्रयोगंदर्शयति ॥ सगुणेति ॥ विमतंब्रह्म स्वाभाविकगुणवत् सगु

बिंबस्थगुणसर्वस्वमनौपाधिकमेवहि ॥ तन्नाशनाशितद्ध्रौव्येध्रुवमेवाभवद्धितत् ॥ ६५९ ॥
प्रतिबिंबस्यसर्वस्ययद्बिंबंब्रह्मतद्धिमे ॥ तच्चसत्यंचनित्यंचनिर्गुणंस्यात्कदाचन ॥ ६६० ॥
सगुणप्रतिबिंबेस्मिन्बिंबत्वाद्रुद्रपुष्पवत् ॥ स्वाभाविकगुणंब्रह्मकिंतेभून्नानुमानतः ॥ ६६१ ॥
स्वाभाविकीज्ञानबलक्रियाचेत्याहतच्छ्रुतिः ॥ यन्मूलंसगुणंतेस्यात्सएवास्माकमीश्वरः॥६६२॥

णप्रतिबिंबेस्मिन्जीवेबिंबत्वात् । अत्रबिंबत्वादित्येवहेतुः । नीरूपकालवाय्वादेःप्रतिफलनादर्शनात् । सगुणेत्यादिविशेषणं प्रयोज्यप्रयोजकभावस्फोरकतयोपात्तमितिज्ञातव्यं । रुद्रपुष्पवत् जपाकुसुमवत् । ते तवमतेपि नाभूत्किं अभूदेव ॥ ६६१ ॥ तत्तस्मा द्बिंबस्यस्वाभाविकगुणवत्त्वावश्यंभावात् । ननु मेमते सगुणं विष्ण्वादिकमेव प्रतिबिंबंच । अतोभवदभिमतविष्णोःकथं बिंबतेत्यतआह ॥ यन्मूलमिति ॥ ते तव सगुणं शबलंब्रह्म यन्मूलं य दनंतस्वाभाविककल्याणगुणपूर्णं मूलं बिंबंयस्येतिवि

युक्ति- ग्रहः । सएवा नंतस्वाभाविककल्याणगुणपूर्णाबिंबभूतएव । ननाम्निविप्रतिपत्तिरितिभावः ॥ ६६२ ॥ उपसंहरति ॥ अतइति ॥ मल्लिका
॥ ९५ ॥ अतः बिंबस्यस्वाभाविकगुणवत्त्वावश्यंभावात् ॥ ६६३ ॥ नचेन्मूलीभूतगुणबृंहितबिंबस्यैवनारायणत्वानंगीकारेयत्सगुणद्वयक गुणसौ०
ल्पनं तत् वचसोगौरवायैव अपांडित्यापादकवचोबाहुल्यायैव । दोषमजानतोबहुशास्त्ररचनंव्यर्थमितिभावः । सिद्धसगुणभजने
आवश्यकैकसगुणस्यभजने तवैवगौरवंस्यात् । त्वमेवलोकस्यगुरुस्स्याइतिभावः ॥ ६६४ ॥ बिंबस्यैवोपाधित्वमंगीकृत्यविष्णो

अतस्सगुणमेवार्थ्यंत्वयापिचमयापिच ॥ निर्गुणाशांत्यज भज श्रीशंमेसगुणंप्रभुं ॥ ६६३ ॥
वचसांगौरवायैवसगुणद्वयकल्पनं ॥ नचेत्स्यात्सिद्धसगुणभजनेगौरवंतव ॥ ६६४ ॥
अस्तुमायाविनामायादर्शितंवस्तुमायिकं ॥ मायाविदेहेंद्रियेच्छाप्रयत्नादित्वमायिकं ॥६६५॥
एवंचामायिकमभूद्धरेर्देहेंद्रियादिकं ॥ शक्तिसौंदर्यधैर्यादिभार्याभवनपूर्वकं ॥ ६६६ ॥ गुणि
नांहिगुणस्तुत्याखस्यापिस्यान्महाफलं ॥ यन्ममावसितंभारस्यार्धंगुणनिरूपणे ॥ ६६७ ॥

स्वाभाविकगुणतासमर्थिता । अधुनाभवतुमायैवोपाधिः तथापि दृष्टबलाद्विष्णोर्गुणादिकममायिकंस्यादेवेत्याह ॥अस्त्विति॥
मायाविनादर्शितं गजतुरगादिवस्तु मायिकमस्त्वितिसंबंधः । अमायिकं लोकेदृष्टमितिशेषः ॥ ६६५ ॥ एवं दृष्टलौकिकमायानु
सारेण । भार्या महालक्ष्मीः । भवनं वैकुंठादि । पूर्वपदेन वाहनादिकंगृह्यते ॥ ६६६ ॥ गुणसौरभे विश्वसौरभसर्वस्वप्रमेयंकिमितिच ॥ ९५ ॥
चिंतमित्याशंक्य प्रसंगसंगत्येतिहृदयंसाहित्यमुद्रयारंजयति ॥ गुणिनामिति ॥ मम विश्वसत्यत्ववादिनोमम भारस्य विश्वसत्यत्व

साधनप्रयत्नरूपस्य अर्धं विश्वांतःपतिभगवद्देहेंद्रियादिसत्यत्वसाधनप्रयत्नरूपं अवसितं पर्याप्तं ॥ ६६७ ॥ कथमित्यतआह
॥ विश्वेति ॥ ६६८ ॥ उक्तयुक्त्युपोद्बलकस्मृतिंचाह ॥ नित्येति ॥ तत्तस्मान्मायाविदेहादेरमायिकत्वस्यसर्वैरंगीकार्यत्वात् ।
स्रष्टाब्रह्मा ॥ ६६९ ॥ तत्तस्मा त्पूर्वोक्तहेतोरेव । यत्रयस्मिन्वैकुंठादिलोकेमायान तत्रापि अस्य विष्णोर्महिमा नगरैश्वर्यादिकः
स्मर्यते नयत्रमायाकिमुतापरेहरेरनुव्रतायत्रसुरासुरार्चिताइतिस्मृत्याप्रतिपाद्यते ॥ ६७० ॥ भगवद्गुणानांस्वाभाविकत्वसमर्थनमु

विश्वांतःपातिनोह्युक्तस्यास्ययत्सत्यताप्यभूत् ॥ लोकदृष्ट्यैव नपुनश्श्रुतिस्मृतिविचारणात्
॥६६८॥ नित्यज्ञानबलैश्वर्यभोगोपकरणाच्युत ॥ इतितुष्टावतत्स्रष्टापंचरात्रेनिजंप्रभुं ॥६६९॥
नयत्रमायातत्रापिमहिमास्मर्यतेस्यतत् ॥ उल्लंघ्यलोकमर्यादांधर्मत्यागःकथंप्रभौ ॥ ६७० ॥
अतस्स्वाभाविकंसर्वज्ञानैश्वर्यादिकंहरेः ॥ कथंतस्यनिवृत्तिस्स्याचैतन्यस्यानिवर्तने ॥६७१॥
तद्धर्मबाधायोगेनबाध्यंस्यादैक्यमेवते ॥ अर्थापत्तिस्तवैवाभूदनर्थापत्तिकारणं ॥ ६७२ ॥
वृथैवगुणसंत्यागेवैदुष्यंतेगमिष्यति ॥ अत्यागेमहिमध्रौव्यान्निर्गुणंस्यात्कदातव ॥ ६७३ ॥

पसंहरति ॥ अतइति ॥ ६७१ ॥ परमप्रकृतमुपसंहरति ॥ तदिति ॥ तत्तस्मात्स्वाभाविकत्वात् । तवार्थापत्तिः ऐक्यान्यथा
नुपपत्त्या गुणत्यागरूपा । अनर्थापत्तिकारणं स्वाभाविकगुणान्यथानुपपत्त्यां ऐक्यस्यैवत्यागरूपानर्थप्राप्तेःकारणं ॥ ६७२ ॥
वृथैव त्यागकारणंविनैव । तेवैदुष्यं वैदुष्याख्यगुणः । वृथागुणत्यागिनः अवैदुष्यावश्यंभावात्त्वंवृथैवगुणंत्यजसि । निमित्तेस

तिगुणत्यागःकथंनस्यादितिभावः। अत्यागे भगवद्गुणानामत्यागे। सर्वज्ञत्वसर्वेश्वरत्वादिगुणानांअत्यागे उक्तमहिम्नः ध्रौव्या त्सर्वकालीनत्वात् तवनिर्गुणंकदास्यात्। गुणापायेसतिसगुणमेवेदं तवमतेनिर्गुणंभवेत्। गुणानामुक्तविधयासार्वकालीनत्वात्त स्यानवसरएव ॥ ६७३ ॥अतो गुणत्यागावसराभावात्परोदितंब्रह्म निर्गुणंब्रह्म अनवसरदुस्स्थं। अश्रौतंच स्वाभाविकसार्वज्ञा दिगुणनिषेधायोगेन निर्गुणश्रुत्यापिसत्वादिगुणनिषेधमुखेनसगुणस्यैवप्रतिपादनीयत्वात्प्रतिपादकश्रुतिशून्यंचाभूदितिशेषः। पूर्वमंतंनापेतिनित्यत्वमभिहितं। इदानींनित्यत्वेस्पष्टांचश्रुतिमाह ॥ एषानित्यइति ॥ अनेन एषनित्योमहिमाब्राह्मणस्य नक

अतोनवसराद्दुस्स्थमश्रौतंचपरोदितं ॥ ब्रह्मैषनित्योमहिमेत्याद्यावाक्तत्रतत्रहि ॥ ६७४ ॥
एकोदाधारविश्वानिभुवनानीतिचापरा ॥ तंस्तौतिसर्वाधारत्वात्परंब्रह्मसएवहि ॥ ६७५ ॥
सर्वस्याधारतासर्वव्यापिताकेशवस्यचेत् ॥ अन्यद्ब्रह्मकिमर्थंतेव्यर्थत्वादपितद्गतं ॥ ६७६ ॥

र्मणावर्धतेनोकनीयान् आद्यपदेन पूषणश्चक्रंनरिष्यति। नकोशोवपद्यते। नोअस्यव्यथतेपविः। नित्योनित्यानामित्यादिसंग्रहः। इत्याद्यावाक् वेदवाक्। अतोनवसरदुस्स्थमितिपूर्वेणसंबंधः ॥ ६७४ ॥ इदानींपरोदीरितब्रह्मणोव्यर्थतामुपपादयति ॥ एको दाधारेति ॥ विश्वेत्यस्यार्थकथनंविश्वानीति। अनेन यउत्रिधातुपृथिवीमुतद्यामित्यादिश्रुतिमुपादत्ते । तं विष्णुं। विष्णुसूक्त स्थत्वादस्यवाक्यस्य। सर्वाधारत्वा त्सर्वजगदाधारत्वात्। सएव विष्णुरेव परंब्रह्महि ॥६७५॥ आधारताचसर्वव्यापिताचेतिसंबंधः।

सर्वव्यापिताच अंतर्बहिश्चतत्सर्वंव्याप्यनारायणस्स्थितइतिश्रुत्युक्ता । अन्यत्इतोन्यत् ॥ ६७६ ॥ सृष्ट्यर्थंतदित्यतआह ॥ यो नःपितेति ॥ अतस्सृष्टिस्थित्यादीनांविष्णुकृतत्वात् । तेब्रह्म भुक्त्यै भोगभुक्त्यै । मोक्षार्थंतदित्यतआह ॥ मोक्षमिच्छेदित्या दिना ॥ अनेन शंकराज्ज्ञानमन्विच्छेन्मोक्षमिच्छेज्जनार्दनादितिस्मृतिं । वरंवरयभद्रंतेऋतेकैवल्यमात्मनः । एकएवेश्वरइत्यादि भागवतवचनंचगृह्यते । इतिस्मृते विष्णोरेवमोक्षदातृत्वप्रतिपादकस्मृतेः । उपसंहरति ॥ व्यर्थमेवाभवत्ततइति ॥ तत स्सृ

योनःपिताविधातेतिसृष्टिश्चाश्चाविकेशवात् ॥ अतोभुक्त्यैनतेब्रह्ममोक्षमिच्छेज्जनार्दनात् ॥६७७॥
एकएवेश्वरस्तस्यभगवान्विष्णुरव्ययः ॥ इतिस्मृतेर्नापिमुक्त्यव्यैर्थमेवाभवत्ततः ॥ ६७८ ॥
व्याप्तंचैतन्ययुग्मंचेद्ब्रह्मणिद्वैतकल्पनात् ॥ अनर्थश्चभवेत्तस्माद्ब्रह्मै(कं)कोविष्णुरेवहि ॥ ६७९ ॥
प्रागुक्तयुक्त्यासगुणनैर्गुण्यंयन्मृतौचन ॥ अतोन्यन्निर्गुणंवाच्यंतदाब्रह्मद्वितानकिं ॥ ६८० ॥

ष्टिस्थितिनियमनमोक्षानुपयोगात् ॥ ६७७ ॥ ६७८ ॥ इदानींपरोदीरितब्रह्मणःअनर्थहेतुतामप्याह ॥ व्याप्तमिति ॥ व्याप्तं चैतन्ययुग्ममंगीक्रियतेचेत् । व्याप्यनारायणस्स्थितइतिश्रुतिबलादेकं । स्वमतदुराग्रहादपरं । एकमेवाद्वितीयमित्युक्तब्रह्मणिद्वै तकल्पनात् अनर्थ स्सर्वत्रद्वैतमसहमानस्यब्रह्मण्येवद्वैतप्राप्तिरूपः । तस्मा दनर्थपरिहारस्यकर्तव्यत्वात् । ब्रह्मणएकत्वेआवश्य केसति तदेकंब्रह्म विष्णुरेवहिभवेत्इतिक्रियावृत्त्यायोजनीयं ॥ ६७९ ॥ तत्रयुक्तिमाह ॥ प्रागुक्तेति ॥ प्रागुक्तस्वाभाविकत्वा

युक्ति- दियुक्त्या सगुणनैर्गुण्यं सगुणस्यनैर्गुण्यं । अत स्सगुणस्यनिर्गुणतायोगात् अन्यत्सगुणात्निर्गुणं सर्वधर्मशून्यरूपं वाच्यं । मलिका

॥ ९७ ॥ तादृशनिर्गुणेदुराग्रहवतांनकिं नभवेत्किं भवेदेवेत्यर्थः ॥ ६८० ॥ उक्तमर्थसंकलय्याह ॥ एवंचेति ॥ ६८१ ॥ अधुना विष्णो गुणसौ०

रेवसर्वोत्तमब्रह्मत्वे तदतिरिक्तब्रह्माभावेच भारतवाक्यानिप्रमाणयति ॥ नास्तिनारायणसममित्यारभ्य नदैवंकेशवात्परमित्यं

त्यंतेन । वशेअवर्ततेतिपदच्छेदः । नारायणसमंनभूतं नास्ति नभविष्यतीत्यनेन तस्यैवपरब्रह्मत्वंततोतिरिक्तपरब्रह्माभावश्चसि

एवंचावसराभावदुःस्थंव्यर्थमनर्थदं ॥ विष्णोरन्यत्परंब्रह्मकोविद्वान्वक्तुमर्हति ॥ ६८१ ॥
नास्तिनारायणसमंनभूतंनभविष्यति ॥ एतेनसत्यवाक्येनसर्वार्थान्साधयाम्यहं ॥ ६८२ ॥
द्वाविमौपुरुषौलोकेक्षरश्चाक्षरएवच ॥ क्षरस्सर्वाणिभूतानिकूटस्थोक्षरउच्यते ॥ ६८३ ॥
उत्तमःपुरुषस्त्वन्यःपरमात्मेत्युदाहृतः ॥ योलोकत्रयमाविश्यबिभर्त्यव्ययईश्वरः ॥ ६८४ ॥
यस्मात्क्षरमतीतोहमक्षरादपिचोत्तमः ॥ अतोस्मिलोकेवेदेचप्रथितःपुरुषोत्तमः ॥ ६८५ ॥
मत्तःपरतरंनान्यत्किंचिदस्तिधनंजय ॥ मयिसर्वमिदंप्रोतंसूत्रेमणिगणाइव ॥ ६८६ ॥

द्ध्यति ॥ ६८२ ॥ ६८३ ॥ अन्यः क्षराक्षराभ्यां । अत्रापिलौकिकालौकिकपुरुषाणां क्षराक्षरोत्तमपुरुषतयाविभागात् यस्मात्क्षरमतीतोह

मित्युक्तोत्तमपुरुषस्यस्वस्यकृष्णस्य परमात्मतयानिर्देशाच्च विष्णोरेवपरब्रह्मत्वं तदन्यपरब्रह्माभावश्चसिध्यति । अस्तिचेत्सोपिच ॥ ९७ ॥

तुर्थपुरुषतयापरमात्मतया वानिर्दिश्येतेत्यतस्सनास्त्येवेतिभावः ॥ ६८४ ॥ ६८५ ॥ मत्तःपरतरंनास्तीत्यत्र विष्णोरन्यपरब्रह्मा

भावःस्पष्टएव ॥ ६८६ ॥ ६८७ ॥ रुद्रंसमाश्रितादेवाइत्यत्रापि कृष्णेननाहंकंचिदुपाश्रितइति स्वाश्रयस्यान्यस्याभावकथना

त्तदन्यपरब्रह्माभावस्स्पष्टएव ॥ ६८८ ॥ सत्यंसत्यमित्यत्रतु नदैवंकेशवात्परमितिकेशवादन्यपरब्रह्माभावोतिस्पष्टः ॥ ६८९ ॥

॥ ६९० ॥ यद्यस्मात् । तस्मा दादिमध्यावसानानामेकार्थपरत्वस्यावश्यकत्वात् ॥ ६९१ ॥ ६९२ ॥ भागवतवाक्यैरपिविष्णो

ससुरासुरगंधर्वंसयक्षोरगराक्षसं ॥ जगद्वशेऽवर्ततेदंकृष्णस्यसचराचरं ॥ ६८७ ॥ रुद्रंसमाश्रिता
देवारुद्रोब्रह्माणमाश्रितः ॥ ब्रह्मामामाश्रितोनित्यंनाहंकंचिदुपाश्रितः ॥ ६८८ ॥ सत्यंसत्यंपुनस्सत्य
मुद्धृत्यभुजमुच्यते ॥ वेदशास्त्रात्परंनास्तिनदैवंकेशवात्परं ॥ ६८९ ॥ इतिभारतवाक्यानिस्पष्टीकु
र्वंतितंप्रभुं ॥ ६९० ॥ उपक्रम्याखिलेशत्वंपुरानारायणस्ययत् ॥ मध्येभ्यस्तंतदेवांतेप्युपसंजहुरंज
सा ॥ ६९१ ॥ तस्माद्भारतवाक्यानांलक्ष्मैकार्थ्यसिद्धये ॥ विष्णोरत्युत्तमत्वाख्यमर्थमाहेतिसिद्ध्यति
॥ ६९२ ॥ नारायणपरावेदानारायणपरामखाः ॥ नारायणपरायोगानारायणपराःक्रियाः ॥ ६९३ ॥

रेवपरब्रह्मतां ततोन्यपरब्रह्माभावंचसाधयति ॥ नारायणपरावेदाइत्यादिना ॥ नारायणपराः नारायणएवमहातात्पर्यवंतः ।

ननु वेदेषुक्वचित्क्वचिद्यज्ञयोगसंध्यावंदनादिक्रियाज्ञानतपोदानादिधर्म मोक्षादयश्चप्रतिपाद्यंते । अतःकथंनारायणपरावेदाइत्यु

च्यतइत्याशंक्य तेषांविष्णुमुद्दिश्यक्रियमाणत्वेन तत्प्रतिपादनमपि परंपरयाविष्णुप्रतिपादनमेवेतिभावेनाह ॥ नारायणपराम

युक्ति- ख्याइत्यादिना ॥ वेदादेवहिपरब्रह्मसिद्धिः । तस्यचनारायणैकपरत्वे तस्यैवपरब्रह्मत्वसिद्धिः ॥ ६९३ ॥ ६९४ ॥ सृजामीत्येत मल्लिका
॥ ९८ ॥ च्चतुर्मुखस्यवाक्यं । पुरुषरूपेण विष्णुरूपेण । त्रिशक्तिभृत्सृष्टिस्थितिसंहाराख्यशक्तित्रयधारकः । अत्रदैवश्रेष्ठयोर्ब्रह्मरुद्रयोर्वि गुणसौ०
ष्णवधीनत्वश्रवणात्सिद्धाविष्णोरेवसर्वोत्तमता ॥ ६९५ ॥ लिंगै स्सृष्ट्यादिव्यापाररूपलिंगैः । स्वलक्षितगतिः सृष्टिकर्तृत्वादिस्व
रूपभूतलक्षणैर्लक्षितस्वरूपः । ब्रह्मन्नारदेति नारदंप्रतिचतुर्मुखस्यवचनं । स्पष्टात्रसर्वेश्वरताविष्णोः ॥ ६९६ ॥ तं दक्षाध्वरे

नारायणपरंज्ञानंनारायणपरंतपः ॥ नारायणपरोधर्मोनारायणपरागतिः ॥ ६९४ ॥
सृजामितन्नियुक्तोहंहरोहरतितद्वशः ॥ विश्वंपुरुषरूपेणपरिपातित्रिशक्तिभृत् ॥६९५॥
सएवभगवान्लिंगैस्त्रिभिरेतैरधोक्षजः ॥ स्वलक्षितगतिर्ब्रह्मन्सर्वेषांममचेश्वरः॥६९६॥
तमुपागतमालक्ष्यसर्वेसुरगणादयः ॥ प्रणेमुस्सहसोत्थायब्रह्मेंद्रत्र्यक्षनायकाः ॥६९७॥

कलहशमनायोपागतंनारायणं । तत्तेजसा नारायणतेजसा हतरुचः तिरस्कृतकांतिमंतः । सन्नजिह्वाः भयाच्छुष्कीभूतजिह्वाः ।
ससाध्वसाःभयसहिताः । मूर्ध्न्युद्धृतांजलिपुटाः अधोक्षजमुपतस्थुः उपासांचक्रुः । कुतस्तेषामेतादृशीनीचावस्थेत्यतउक्तं । यस्य
विष्णोर्महित्वे महिम्नि विचार्यमाणे अर्वागधस्ता द्वृत्तिर्येषांते तन्महिमसदृशमहिमरहिताइतिभावः । स्वभुवादयः स्वयंभ्वाद ॥ ९८ ॥
यः । मुख्यस्यस्वभूत्वस्यविष्ण्वेकनिष्ठत्वाद्ब्रह्मण्यसंधिकरणं । कृतोनुग्रहोयेन सविग्रहोयस्यत मनुग्रहेणप्रदर्शितविग्रहमित्यर्थः ।

यथामतिगृणंति शक्त्यनुसारेणस्तुवंति । सकलतन्महिम्नांस्तवनेपिनशक्ति स्तन्महिमप्राप्तिस्तुदूरापास्तेतिभावः ॥ ६९७ ॥६९८॥ ॥ ६९९ ॥ देवासुराणामित्यनेन देवासुराणांमघवान्प्रधानोदक्षादयोब्रह्मसुताश्चतेषां । भवःपरस्सोथविरिंचवीर्यस्समत्परोहंद्विजदेवदेवइतिपंचमस्कंधस्थवृषभवचनमर्थतस्संगृह्णाति । अर्थस्तु देवासुराणां चंद्रसूर्यादिदेवानामसुराणांच मघवानिंद्रःप्रधानः । दक्षादयोब्रह्मसुताश्चप्रधानाः । इंद्रस्यसर्वज्येष्ठत्वात्प्रथमतोग्रहणं । तेषांदक्षादीनामिंद्रस्यच भवोरुद्रः परःप्रधानः । सभवः वि

तत्तेजसाहतरुचस्सन्नजिह्वास्ससाध्वसाः ॥ मूर्ध्न्युक्तांजलिपुटाउपतस्थुरधोक्षजं ॥ ६९८॥ अप्यर्वाग्वृत्तयोयस्यमहित्वेस्वभुवादयः ॥ यथामतिगृणंतिस्मकृतानुग्रहविग्रहं ॥ ६९९॥ देवासुराणांमघवान्प्रधानस्तस्यशंकरः ॥ तस्यब्रह्माप्रभुस्तस्यस्वयंनारायणःकिल ॥द्विजानांदेवतानांचयोदेवस्सस्वयंकिल ॥ ७०० ॥ निमित्तमात्रमीशस्यविश्वसर्गनिरोधयोः ॥ हिरण्यगर्भश्शर्वश्चकालाख्यारूपिणस्तव ॥७०१॥ सरस्वत्यास्तटेराजन्नृषयस्सत्रमासत ॥ वितर्कस्समभूत्तेषांत्रिष्वधीशेषुकोमहान् ॥ ७०२ ॥

रिंचवीर्यः विरिंचस्यवीर्यंजनकंयस्यसइतिविरिंचवीर्यः विरिंचपुत्रइत्यर्थः । रुद्राद्विरिंचःप्रधानइतिभावः । सविरिंचःअहंपरोयस्येतिमत्परः । विरिंचादप्यहमेवसर्वोत्तमइत्यर्थः । अत्रापि देवतातारतम्यकथनपूर्वकंविष्णोस्सर्वोत्तमत्वंकथ्यते । मूलस्थद्विजदेवदेवपदस्यार्थमाह ॥ द्विजानामिति ॥ ७०० ॥ कालाख्यारूपिणः कालइत्याख्यारूपंचास्यास्तीतिकालाख्यारूपी । तस्यतव । इदंकृष्णंप्रतिभक्तस्यवचनं । अत्रापिविष्णोस्सर्वोत्तमताब्रह्मरुद्रादीनांचतदधीनतास्पष्टा ॥ ७०१ ॥ त्रिष्वधीशेषु विष्णुब्रह्मरुद्रेषु

महान्श्रेष्ठःकइतिवितर्कोविचारः। सर्वेषु त्रयाणामधीश्वरत्वकथनेन तेष्वप्येकस्यमहत्त्वप्रश्नेनच सर्वैक्यं त्रिदेवतैक्यं त्रिदेवता साम्यंच गर्भस्रावेणगतं ॥ ७०२ ॥ तद्भूगूक्तं। ब्रह्मशिवयोरज्ञाननिमित्तंकोपं विष्णोस्सर्वज्ञतानिमित्तशांतिंचश्रुत्वा भूयांसं सर्वो त्तमंश्रद्दधुःश्रद्धापूर्वकंदधुः। निश्चितवंतइत्यर्थः । श्रद्दधुरित्यनेन एवंज्ञानतएवमोक्षादिफलमस्ति नत्वन्यथेतिध्वनितं एवंच

तच्छ्रुत्वामुनयस्सर्वेविस्मितामुक्तसंशयाः ॥ भूयांसंश्रद्दधुर्विष्णुंयतश्शांतिर्यतोऽभयं
॥ ७०३ ॥ इत्याद्यनंतवाक्यानिसंतिभागवतेस्फुटं ॥ सर्वोत्तमपरब्रह्मभावेनारायण
स्यहि ॥ ७०४ ॥ समस्तधर्मशून्यंतन्निर्गुणंकुत्रकथ्यते ॥ ७०५ ॥ सत्यंशौचंदयादानंत्या
गस्संतोषआर्जवं ॥ शमोदमस्तपस्साम्यंतितिक्षोपरतिःश्रुतं ॥ ७०६ ॥ ज्ञानंविरक्तिरै
श्वर्यंशौर्यंतेजोधृतिस्मृतिः॥ स्वातंत्र्यंकौशलंकांतिस्सौभगंमार्दवंक्षमा॥७०७॥ प्रागल्भ्यं
प्रश्रयंशीलंसहओजोबलंभगः ॥ गांभीर्यंस्थैर्यमास्तिक्यंकीर्तिर्मानोनहंकृतिः ॥ ७०८ ॥

फलकथनादुक्तार्थेमहातात्पर्यमितिसूचितं ॥ ७०३ ॥ तत् उक्तानांभागवतस्थादिमध्यांतवचनानांसर्वेषां सर्वगुणपरिपूर्णश्रीनारा यणाख्यपरब्रह्मप्रतिपादकत्वात् स्पष्टोपक्रमोपसंहारानुसारेणैवास्पष्टवचनानांव्याख्येयत्वात् समस्तधर्मशून्यं निर्गुणं कुत्रकथ्यते। नकुत्रापीतिभावः ॥ ७०५ ॥ इदानींस्पष्टंनारायणस्यगुणपूर्णताप्रतिपादकानिभागवतवचनान्याह ॥ सत्यमित्यादिना ॥ ॥ ९९ ॥

अत्र सत्याद्याःअनहंकृत्यंताः चत्वारिंशद्गुणाविशिष्यगृहीताः ॥ ७०६ ॥ ७०७ ॥ ७०८ ॥ अन्येचेत्यनेनै तदतिरिक्तानंतश्रु त्युक्तकल्याणगुणानांसंग्रहः। महागुणाइत्यनेन तेषांप्रत्येकंपूर्णत्वमभिप्रैति । नित्याइत्यनेन कर्हिंचित्नयांति कदापिनगच्छंती त्यनेनच सार्वकालीनत्वरूपनित्यत्वमभ्यस्यते॥७०९॥७१०॥ धराधर्मकथांतरे गोरूपायाधरायाः वृषभरूपस्यधर्मस्यच कथामध्ये। नित्यताभ्यासात् नित्यत्वस्यपौनःपुन्येनकथनरूपाभ्यासान्नित्यत्वेमहातात्पर्यमवगम्यते । ततश्चननित्यत्वमन्यथीकर्तुंशक्यते ।

इमेचान्येचभगवन्नित्यायत्रमहागुणाः ॥ प्रार्थ्यामहत्त्वमिच्छद्भिर्नचयांतिस्मकर्हिचित्॥७०९॥
तेनाहंगुणपात्रेणश्रीनिवासेनसांप्रतं ॥ शोचामिरहितंलोकंपाप्मनाकलिनेक्षितं ॥ ७१० ॥
इतिभागवतेस्पष्टंधराधर्मकथांतरे ॥ गुणानांनित्यताभ्यासान्निर्गुणंस्यात्कदावद ॥ ७११ ॥
महागुणान्स्थापयंतीमहीयसिमहीहरौ ॥ जडतुच्छगुणाभावंनैर्गुण्योक्तेर्गतिंददौ ॥ ७१२ ॥
मय्यनंतगुणेऽनंतेगुणतोनंतविग्रहे ॥ यदासीत्ततएवाद्यस्स्वयंभूस्समभूदजः ॥ ७१३ ॥

अतोगुणनाशोत्तरभाविनिर्गुणंकदास्यादितिसंबंधः ॥ ७११ ॥ तर्हिनिर्गुणोक्तेःकागतिरित्याशंक्यधरयैवगतिरसूचीत्याह ॥ महा गुणानिति ॥ ७१२ ॥ अधुनागुणानामसंख्यातत्वरूपानंत्यं प्रत्येकंपरिपूर्णत्वलक्षणानंत्यं स्वदेहानंत्यंच स्पष्टंप्रतिपादयत्सगु णभगवद्वचनमाह ॥ मय्यनंतगुणइति ॥ शशशृंगस्यमध्येलीनमभूच्छशशृंगप्रायमभूदितिभावः । उत्तरार्धस्यत्वयमर्थः।

मयि ममदेहे यत्पद्ममासीत् ततः पद्मात् स्वयंभू स्स्वयमेवाभू न्नतुस्वेनसहान्योप्युत्पन्नइति स्वयंभूशब्दवाच्यः अजस्समभू दिति ॥ ११३ ॥ ११४ ॥ ११५ ॥ ११६ ॥ ननुमाभूदागमेननिर्गुणब्रह्मसिद्धिः अनुमानेनभविष्यतीत्याशंक्यदूषयति ॥ सम स्तेति ॥ तद्दर्शनात् समस्तधर्मशून्यब्रह्मापरोक्षज्ञानात् ॥ ७१७ ॥ किंच । माननेननिर्गुणब्रह्मसिद्धिमभिलषतस्स्वव्याहतिपरंपरा

इतिभागवतेकृष्णोनिस्संख्यान्स्वगुणानपि॥ अनंतानाहदेहांश्चाप्यनंतानवतारगान्॥७१४॥ देशतः कालतश्चैवगुणतोपिह्यनंतता ॥ अतस्त्वन्निर्गुणब्रह्मकस्मिन्देशेकदाभवेत् ॥ ७१५ ॥ सर्वेभ्योदेशका लेभ्यःप्रायस्तत्तुबहिष्कृतं ॥ लज्जयाशशशृंगस्यमध्येलीनमभूत्सदा ॥ ७१६ ॥ समस्तधर्मशून्यंचब्र ह्मान्यत्किलवर्तते ॥ स्वयंतद्दर्शनात्सर्वधर्मशून्योभवेत्किल ॥ ७१७ ॥ यदामानेनतेनेदंसाध्यते मो क्षसिद्धये ॥ दृश्यतेचतदामानमेयताज्ञानदृश्यता ॥७१८॥ इतिधर्मद्वयंप्राप्तंतत्पदेनचवाच्यता ॥ ल क्ष्यतावायतोवश्यंतेनप्राप्तापदार्थता ॥ ७१९ ॥ व्यावृत्त्यैशशशृंगस्यवस्तुत्वंसर्वथातव ॥ ७२० ॥

माह ॥ यदेति ॥ तेन मायावादिना इदं निर्गुणत्वं साध्यते । मोक्षसिद्धये मुक्त्यै दृश्यते । तदा साधनेदर्शनेच । यतश्च तत्प देन मेयपदेनदृश्यपदेनच वाच्यता वाच्यत्वानंगीकारेलक्ष्यतावा । तेन मुख्ययावाऽमुख्ययावावृत्त्याशब्दबोध्यत्वेन॥ ७१८ ॥ ॥ ७१९ ॥ ७२० ॥ अतः उक्तधर्माणामावश्यकत्वा त्तन्निर्गुणं तद्रूपं निर्गुणब्रह्मस्वरूपं । तस्यनिर्गुणस्य । परैःप्रतिवादिभिः ।

किं किंकृत्यं । तत्कार्यस्य सगुणत्वसाधनस्य त्वयैवकृतत्वात् ॥ ७२१ ॥ तत्राभाणकमाह ॥ मृण्मयस्यहीति ॥ नचेत् धर्मांग मनभीत्याप्रमाणंनकथ्यतेचेत् अस्नेहदीपवत् तैलशून्यदीपवत् । गतं निर्गुणमितिशेषः ॥ ७२२ ॥ अतः एकस्यगुणपूर्णतावा चित्वात् अपरस्यतच्छून्यत्ववाचित्वात् तत्पदयो र्निर्गुणब्रह्मपदयोः ॥ ७२३ ॥ तेषां ( अनुमानादीनां ) उक्तविधयातवैवाव श्यकमेयत्वादिधर्माणां । मानशक्तेः निर्गुणसाधकप्रमाणबलात्पुनःप्राप्त्या धर्मनिवृत्त्यै पौनःपुन्येनप्रमाणोक्तौ पुनःपुनर्धर्माणा

अतस्तत्साधयन्नेवतद्रूपमवसादयन् ॥ साधकश्चासितस्यत्वंबाधकश्चेति किंपरैः ॥७२१ ॥ मृण्मयस्य हिलिंगस्यमज्जनंरूपमार्जनं ॥ नचेत्प्रमाणशून्यत्वाद्गतमस्नेहदीपवत् ॥ ७२२ ॥ ब्रह्मशब्देनचाप्युक्ता गुणबृंहिततैवहि ॥ अतस्तत्पदयोश्चस्यात्परस्परविरुद्धता ॥७२३॥ यदिज्ञापनमात्रेणपुनस्तेषांनिवृत्त ता ॥ ( मानशक्तेःपुनःप्राप्त्यानिर्गुणंतेकदापिन ) ॥ तद्वानांज्ञापकत्वेतुनोक्तदोषोनिवर्तते ॥ ७२४ ॥ अन्यगानांज्ञापकत्वेज्ञाप्यस्याप्यन्यनिष्ठता ॥ असतोज्ञापकत्वेस्याज्ज्ञाप्यमप्यसदेवहि ॥ ७२५ ॥

मेवप्राप्त्या केदापिन । तद्वानां निर्गुणब्रह्माश्रितानां । उक्तः सगुणत्वप्राप्तिलक्षणः । ननिवर्ततइतिसंबंधः । निर्गुणत्वस्यस्वसि द्ध्यर्थमानमेयत्वादिधर्मोपजीवनान्नतन्निवर्तकता । उपजीवकस्योपजीव्यनिवर्तकत्वायोगात् । अन्यस्यचनिवर्तकस्याभावात् । उक्तधर्मबलादागता सगुणता पुनर्ननिवर्त्यैतिभावः ॥ ७२४ ॥ अन्यगानामन्यनिष्ठानां । ज्ञाप्यस्य निर्गुणत्वस्य । साध्यसाधन

योरेकाश्रितत्वावश्यंभावात् । मिथ्यात्वात्तन्निवृत्तिरित्यतआह ॥ असतइति ॥ असतः मिथ्याभूतस्य । असन्मिथ्याभूतं ॥ ७२५ ॥ तत्रदृष्टांतमाह ॥ आरोपितेनेति ॥ दृष्टांतांतरंचाह ॥ शूद्रीति ॥ ७२६ ॥ व्यावहारिकसत्त्वांगीकारान्नोक्तदोष इतिचेत् उक्तविधयासाध्यनिर्गुणत्वस्यापिव्यावहारिकतापातात् । किंचबाधाविशेषेकिमनेनव्यावहारिकत्वव्यपदेशमात्रेण । बहो बाधकादस्मादपिप्रातिभासिकांगीकारएवश्रेयानित्याह ॥ व्यावहारिकसत्त्वमिति ॥ दुर्बलाश्वादपिप्रबलाश्वखुरताडनस्यव

आरोपितेनधूमेनसिद्ध्येदारोपितोऽनलः ॥ शूद्रीप्रसूतपुत्रस्यशूद्रतालोकसंमता ॥७२६॥ व्यावहारि कसत्त्वंतुराजाश्वखुरताडनं ॥ सशेषबाधाद्यदतिक्रूरंनिश्शेषबाधनं ॥ ७२७॥ ब्रह्मज्ञानेनबाधोहिस र्वबाधोभवन्मते ॥ ब्रह्मप्रमाबाध्यताचव्यावहारिकसत्यता ॥ ७२८ ॥ त्रिकालासत्त्वसाम्येतुकिंज्ञा नांतरतःफलं ॥ परप्रतारणेन स्याद्दोषोधिकतरस्तव ॥ ७२९ ॥ किंचबाधस्यबाध्यत्वेगुणानांस्यादबा ध्यता ॥ बाधस्याबाध्यतायांतुसदद्वैतमतंगतं ॥ ७३० ॥ तस्यापिब्रह्मरूपत्वेपुनर्धर्मित्वमापतेत् ॥ जडत्वंभावसापेक्षप्रतीतित्वमभावता ॥ इत्याद्यभावधर्माणांब्रह्मण्येवप्रसक्तितः ॥ ७३१ ॥

ह्वनिष्टहेतुत्वादित्यभिप्रायेणोक्तं ॥ राजाश्वेति ॥ तदेवोपपादयति ॥ सशेषबाधादिति ॥ ७२७ ॥ ७२८ ॥ परप्रतारणेन बाधितत्वेनमिथ्याभूतार्थस्यैवसत्यमितिव्यपदेशरूपपरप्रतारणेन ॥ ७२९ ॥ दूषणांतरंचाह ॥ किंचेति ॥ बाधस्य गुणबाधस्य ॥ ७३० ॥ तस्यअबाध्यस्याऽभावरूपबाधस्य । धर्मित्वं ब्रह्मणइतिशेषः । इत्यादीत्यत्रादिपदेन पदार्थत्वसाधिकरणत्वज्ञेयत्वादी ॥ १०१ ॥

नांग्रहणं । अभावधर्माणां अभावाश्रितधर्माणां । प्रसक्तितः ब्रह्मणएवाभावरूपत्वांगीकारात् ॥ ७३१ ॥ अभावधर्मशून्यत्वे उ क्ताभावत्वप्रयोजकधर्मशून्यत्वे । निषेधत्वं गुणनिषेधरूपाभावत्वं । ततःकिमित्यतआह ॥ निषेधेति ॥ निषेधप्रतियोगित्वंने तिहेतोः गुणानामबाध्यतास्यादित्यर्थः ॥ ७३२ ॥ उक्तार्थसंकलय्याह ॥ बोध्यंचेदिति ॥ बाध्यमितिपाठेतु प्रकारांतरेणापिनि र्गुणत्वंदुर्वचमित्याहेतिसंगतिः । आद्ये स्वविरोधिभूतनिर्गुणत्वाभावात्सगुणत्वसिद्धिः । द्वितीये अबाधितनिर्गुणत्वाख्यधर्मेणै

अभावधर्मशून्यत्वेनिषेधत्वंचतस्यन ॥ निषेधप्रतियोगित्वंगुणानांनेत्यबाध्यता ॥७३२॥बो(बा) ध्यंचेन्निर्गुणत्वंस्यान्निर्गुणत्वंनसिद्ध्यति ॥ न(बा)बोध्यंनिर्गुणत्वंचेन्निर्गुणत्वंनसिद्ध्यति ॥७३३॥ अतश्शुभगुणांभोधिर्हरिःसर्वेश्वरेश्वरः ॥ ततःपरतरंनान्यदितिसर्वमनोरमं ॥ ७३४ ॥ एष निष्कंटकःपंथायत्रसंपूज्यतेहरिः ॥ कुपथंतंविजानीयाद्गोविंदरहितागमं ॥ ७३५ ॥ इतिभा रतवाक्यंहिगोविंदरहितागमं ॥ कुपथंवक्ष्यतोप्यासीन्निर्मूलंनिर्गुणंतव ॥ ७३६ ॥

वसगुणत्वसिद्धिरित्यर्थः । नसिध्यति उक्तविधयामेयत्वादिधर्माणांप्राप्तेः । पक्षांतरेतु प्रमाणाभावादित्युभयत्राप्येकमेवदूषणं ॥ ७३३ ॥ उक्तार्थमुपसंहरति ॥ अतइति ॥ ७३४ ॥ किंबहुना भारतस्थैकपद्येनैवसर्वोपिमाध्वराद्धांतस्सिद्ध्यतीत्याह ॥ एष इति ॥ अतः गोविंदरहितागमस्यकुमार्गत्वा त्परोदीरितनैर्गुण्यमतस्यचगोविंदरहितागमत्वात् निर्मूलं कुमतस्यार्थासाधकत्वात्। अवैष्णवपुराणानां शैवब्राह्मपुराणानां । अवैष्णवमतस्य पाशुपतादिमतस्य । अवैष्णवश्रुतीनां रुद्रादिविषयत्वेनतैरंगीकृतश्रुती

नांच ॥ ७३५ ॥ ७३६ ॥ ७३७ ॥ पूज्यतइत्युक्त्या हरेःपूज्यत्वस्य पूज्यपूजकभावोपयुक्तभेदस्य पूज्यत्वप्रयोजकस्वामित्वस्यच लाभात्सिद्धमर्थमाह ॥ हरेरिति ॥ ७३८ ॥ संपूज्यतइत्यत्र समित्युपसर्गलब्धार्थमाह ॥ सम्यक्त्वेति ॥ तेन मिथ्यात्वरूपासम्यक्त्वनिषेधेन भेद पूज्यत्व स्वामित्वादिस्सत्योभूत् । तस्यहरेः रुद्रादिसाम्येनपूजनं अस्तं निराकृतं । हरेरेवसम्यक्पूज्यत्वोक्त्या तदितरेषांअतादृशपूजाविषयत्वलाभात् । एतावंतमर्थमेकमेवपद्यंवक्तीत्यहोइत्युक्तं ॥ ७३९ ॥ प्रकारांतरेणनिर्गुणस्य

अवैष्णवपुराणानामवैष्णवमतस्यच ॥ अवैष्णवश्रुतीनांचकुपथत्वमभूदहो ॥ ७३७ ॥
हरेर्भिन्नत्वपूज्यत्वस्वामित्वप्रतिपादिका ॥ निष्कंटकामाध्वशुद्धपद्धतिश्चेतिसिद्ध्यति ॥ ७३८ ॥
समक्त्वार्थोपसर्गोसावसम्यक्त्वंनिषेधति ॥ सत्योभूत्तेनभेदादिरस्तंतत्समपूजनं ॥ ७३९ ॥
शैवंब्राह्मंवैष्णवंचपुराणमखिलंयतः ॥ अतस्तेभ्यःपुराणेभ्योयद्बहिस्तच्छ्रुतेर्बहिः ॥ ७४० ॥
ब्रह्मविष्णुशिवेभ्योपिह्यन्यद्ब्रह्ममतंतव ॥ नहिलोकस्यसंमत्यापुराणंतत्रकिंचन ॥ ७४१ ॥
षट्कंषट्कंपुराणानांराजसंतामसंकिल ॥ षट्कंतुविष्णुविषयंसात्विकंमोक्षदंकिल ॥ ७४२ ॥

पुराणवेदबहिर्भूतत्वंप्रदर्शयति ॥ शैवमित्यादिना ॥ यतः अखिल मष्टादशात्मकंपुराणं शैवंब्राह्मंवैष्णवंच शिवब्रह्मविष्णवाख्यत्रिदेवताविषयं । अत स्सर्वपुराणानांत्रिदेवताविषयत्वात् यन्निर्गुणं पुराणेभ्योबहिः तन्निर्गुणं श्रुतेरपिबहिः । पुराणश्रुत्योरैकार्थ्यनियमात् ॥ ७४० ॥ तवब्रह्म निर्गुणं । त्रेधाविभाजकलोकसंमत्या । तत्र निर्गुणे ॥ ७४१ ॥ प्राक्सर्वाणिपुराणान्यंगीकृ

त्यनिर्गुणंबहिष्कृतं । अधुनातानिविविच्य विष्णोरेवोत्तमतां श्रौततांसाधयन्नाह ॥ षट्कंषट्कमिति ॥ किलेत्यनेनपौराणिकींप्रसिद्धिंद्योतयति ॥ ७४२ ॥ सात्विकत्वेनोक्तपद्मपुराणपूर्वकांडस्यशैवत्वात्कथंनिर्णयइत्यतआह ॥ पाद्मस्येति ॥ ध्रुवमित्यनेन पूर्वकांडपूर्वपक्षपदयोः उत्तरकांडोत्तरपक्षपदयोस्समानार्थकत्वलक्षणयुक्तिंसूचयति । युक्त्यंतरंचाह ॥ यतइति ॥ पंचपुराणेभ्यः

पाद्मस्यपूर्वकांडस्तुपूर्वपक्षोभवेद्ध्रुवं ॥ यतःपंचपुराणेभ्यस्सात्विकेभ्योबहिष्कृतः ॥७४३॥ विस्तरोस्य
प्रमेयस्यह्युत्तरत्रभविष्यति ॥ तत्सात्विकपुराणोक्तोविष्णुर्ब्रह्म स्मृतेर्बलात् ॥७४४॥ इतिहासपुरा
णाभ्यांवेदंसमुपबृंहयेत् ॥ बिभेत्यल्पश्रुताद्वेदोमामयंप्रचलिष्यति ॥७४५॥ इतिस्मृतेस्सत्पुराणभा
रतोक्तप्रकारतः ॥ यच्छ्रुतेर्योजना तस्माद्विष्णुर्ब्रह्मश्रुतेर्बलात् ॥७४६॥ वेदेरामायणेचैवपुराणेभारते
तथा॥ आदावंतेचमध्येचविष्णुस्सर्वत्रगीयते॥७४७॥ मांविधत्तेऽभिधत्तेमांविकल्प्योपोह्यइत्यहं ॥
इत्यस्याहृदयंसाक्षान्नान्योमद्वेदकश्चन ॥ वेदैश्चसर्वैर्वेद्योहमेवेत्यवदधारहि ॥ ७४८ ॥ ॥

ईदृग्विभागरहितेभ्यः केवलसात्विकेभ्यो बहिष्कृतः तदर्थविरुद्धार्थवादी ततोपिपूर्वपक्षइतिसंबंधः ॥ ७४३ ॥ त च्छैवब्राह्मपुराणानांतामसराजसत्वात् । स्मृतेस्सात्विकपुराणरूपस्मृतेः ॥ ७४४ ॥ तस्मा त्सात्विकपुराणानुसारेण भारतानुसारेण श्रुतेर्योजनीयत्वात् ॥ ७४५ ॥ ७४६ ॥ पूर्वश्रुतिस्मृत्योरैकार्थ्यरूपयुक्तितश्श्रौतत्वंविष्णोरानीतं । अधुना साक्षात्स्मृत्यैवतत्साधयन् श्रु

त्यंतःपातिनिर्गुणवाक्यस्यापिविष्णुप्रतिपादकतैवेत्याह ॥ वेदइत्यादिना ॥ ७४७ ॥ ७४८ ॥ ७४९ ॥ विष्णोर्दिव्यनामसहस्रेपठनात्निर्गुणोक्तिः तंविष्णुमाहेतिसंबंधः । निर्गुणनाम्ना यश्शिवेनस्तूयते सएवनिर्गुणश्रुतेरर्थो नपराभिलषितनिर्गुणइति भावः ॥ ७५० ॥ इतिहासपुराणाभ्यांवेदंसमुपबृंहयेदित्युक्त्या यद्यस्मात्कारणात् स्मृतिसखीवशेतिसंबंधः । अत स्सखीवश

पूर्वाद्भारतवाक्याच्चपराद्भागवतोदितात् ॥ स्पष्टगीतोक्तितस्सर्ववेदार्थोविष्णुरेवहि ॥७४९॥ वेदमध्यगतानिर्गुणोक्तिरप्याहतंप्रभुं ॥ निर्गुणोनिष्कलोनंतोऽभयोचिंत्योचलोच्युतः ॥ इतिविष्णोर्दिव्यनामसहस्रेपठनादपि ॥ ७५० ॥ श्रुत्याख्यराजकन्यायत्सर्वास्मृतिसखीवशा ॥ अतस्तदुक्तमार्गेणसाव्रजेन्नत्वदुक्तितः॥७५१॥ किंचाखंडार्थवादंतेस्मर वाक्यंपदानिच ॥ यत्रस्वार्थविशिष्टार्थपरंनैवहि किंचन ॥७५२॥ यस्मात्त्वदुक्तवाक्यार्थस्त्वयैवत्याजितोखिलः ॥ तस्मादैक्यंनैवसिद्ध्येन्निर्गुणत्वादिकंचते ॥७५३॥ इत्थंह्यनशनेनैवश्रुतीस्त्वंतुजिघांससि ॥ सत्यंकदशनेनापिनित्या सा वाग्जिजीविषेत् ॥७५४॥

त्वात् तदुक्तमार्गेण स्मृत्युक्तमार्गेण स्मृत्या तवायमर्थइत्युक्तमार्गेण । साश्रुतिः ॥ ७५१ ॥ निर्गुणइतिसामान्यतस्सकलगुणनिषेधकनिर्गुणोक्तेस्त्रिगुणवर्जितत्वरूपसंकुचितार्थकथनेन कथंविष्णुविषयतेतिशंकांनिराकर्तुमाह ॥ किंचेति ॥ ७५२ ॥ तस्मात्त्वदुक्तवाक्यार्थस्यत्वयैवत्याजितत्वात् ॥ ७५३ ॥ अनशनेन अर्थाभावलक्षणेन । जिघांससि वैयर्थ्यरूपहिंसांकर्तुमिच्छसि । ॥ १०३ ॥

संकुचितःअसंकुचितोवाकोप्यर्थोनास्तीतिवदसीतिभावः । कदशनेन संकुचितार्थकथनरूपेण । अनशनात्कदशनंवरमितिन्यायात् । जिजीविषेत् स्ववैयर्थ्यरूपाप्रामाण्यंपरिहर्तुमिच्छेत् । एतत्सत्यं । नित्येत्यनेनापौरुषेयतयाऽप्रामाण्यलेशस्यायोग्यतांसूचयति ॥ ७५४ ॥ फलितमाह ॥ सर्वथेति ॥ उपसंहरति ॥ अतइति ॥ अत स्संकोचस्यन्याय्यत्वात् ॥ ७५५ ॥ व्यावहारिकतयासिद्धसाधनत्वादिशंकांगर्भस्रावेणनिवारयन्परममुक्तंपरमात्मानंपक्षीकृत्य तस्यसगुणत्वेऽनुमानमाह ॥ विमतइति ॥ अत्र

सर्वथार्थपरित्यागात्संकोचंकोनमानयेत् ॥ अतोनिर्गुणवाग्वक्रेहरिंत्रिगुणवर्जितं ॥ ७५५ ॥ विमतःपरमोमुक्तःपरमात्माघटादिवत् ॥ मुक्तत्वाद्भावधर्माणामपिधर्मीत्यबाधिता ॥ अनुमा सगुणब्रह्मसाधिका बाधिकातव ॥ ७५६ ॥ बंधाभावाधिकरणोमुक्तोह्यत्रविवक्षितः ॥ बंधश्चचेतनस्यैवनघटेनापिमोचिते ॥ ७५७ ॥ अभावद्वैतवादेतेकथंनाभावधर्मिता ॥ अव्याहतमतिर्मुक्तेबंधाभावंनकोवदेत् ॥ ७५८ ॥ मुक्तत्वंनास्तिचेत्तर्हिबद्धत्वेनैवधर्मवान् ॥ बद्धपूरुषवत्स्याद्धिव्याहतिस्तुतवाधिका ॥ ७५९ ॥ ॥

परमोमुक्तःपरमात्मेतिपक्षः । भावधर्माणांधर्मीतिसाध्यं मुक्तत्वादितिहेतुः । घटादिवदितिदृष्टांतः ॥ ७५६ ॥ मुक्तत्वहेतोरसिद्ध्यादिकंपरिहर्तुंविवेचयति ॥ बंधाभावाधिकरणइत्यारभ्य मुक्तेबंधाभावंनकोवदेदित्यंतेन ॥ ७५७ ॥ ७५८ ॥ एवमपि चक्षुषीनिमील्य मुक्तत्वाभावं वदंतंप्रति चेतनस्यसतो मुक्तत्वाभावेबद्धत्वावश्यंभावेन तदेवहेतुस्स्यादित्याह ॥ मुक्तत्वंनास्ति चेदिति ॥ व्याहतिरित्यत्र मुक्तइत्यंगीकृत्य पुनर्मुक्तत्वाभावांगीकारादेका मुक्तस्यबद्धत्वांगीकारादपराचेति व्याहतिद्वयंद्रष्टव्यं

॥ ७५९ ॥ स्वमतेबद्धत्वहेतोरसिद्धिमाशंक्यद्वेधापरिहरति ॥ परांगीकारेत्यादिना ॥ ७६० ॥ बद्धत्वंमुक्तत्वंचोभयंनास्ती तिवदंतंप्रत्याह ॥ नोभयंचेदिति ॥ द्वयाभावा द्बद्धत्वमुक्तत्वयोरनधिकरणत्वात् । बंधाभाववंदतैवपुनस्सामान्यतोबंधाभा वरूपमुक्तत्वाभावोनवक्तुमुचितः व्याहतेः। अतोबंधध्वंसरूपमुक्तत्वाभावोवक्तव्यः । तत्रहेतोरसिद्धिप्रकारमाह ॥ बंधइति ॥ यत् यस्मात् । ततः पक्षदृष्टांतयोरनुपपत्त्यभावात्। एवंमुक्तत्वहेतौयद्यत्परेणदूषणमुदितं तत्तत्सर्वंहेतूकृत्यचमत्कारोदर्शितः ॥७६१॥

परांगीकारसिद्धेनहेतुनापरदूषणं ॥ भक्तेषुकरुणाबंधबद्धस्तुस्यान्ममापिहि ॥ ७६० ॥ नोभयंचेद्द्वया भावाद्भावधर्मीघटादिवत् ॥ बंधोबंधध्वंसरूपमुक्तत्वंचनयत्परे ॥ नित्यमुक्ते नापिघटेततःकामेक्षति र्वेद ॥ ७६१ ॥ अभावाधारत्वतोवाभावधर्मीकपालवत् ॥ समस्तधर्माभावेपिह्यभावाधारतादृढा ॥७६२॥ यतश्चाभावरूपोसौविनासाध्यंनगच्छति ॥ अतोनासिद्धिशंकास्यनानैकांत्यंचकुत्रचित् ॥७६३॥

हेत्वंतरंचाह ॥ अभावाधारत्वतइति ॥ अत्रापिपक्षःपूर्वोक्तएव । हेतोरसिद्धिमनैकांत्यंचपरिहरति ॥ यतश्चेति ॥ अभावरूपः अभावघटितः । अभावद्वैतवादेचास्यहेतोःपरेणाप्यंगीकृतत्वान्नासिद्धिः । यतश्चसाध्यंविनागच्छति सद्यामेवाभावोनिरूप्यतइति न्यायेनाभावाधिकरणस्य सत्त्वाख्यभावरूपधर्मवत्त्वनियमः ततोनानैकांत्यंचेतिभावः ॥७६२॥७६३॥ प्रकारांतरेणोक्तदोषद्वयंप रिहरति । गच्छन्निति । यस्माच्च गच्छन् असिद्ध्यर्थं पक्षंविहायान्यत्रगच्छन् स्वाभावदः पक्षेस्वाभावसंपादकः । तिष्ठन्यत्रकुत्रा ॥ १०४ ॥

पितिष्ठन् स्वाश्रयत्वकृत् हेतोस्स्वस्याश्रयत्वकृत् आश्रयत्वरूपभावधर्मं स्वाधिकरणेकुर्वन्। अतो हेत्वपगमे स्वाभावस्थापनेनैव अभावाधारत्वहेतोः पौनःपुन्येनच्छिद्यमानरावणशिरोवत्स्थिरीकरणात् साध्याभाववतिहेतुसत्त्वेनयत्रानैकांत्यंपरेणोच्यते तत्र तत्र स्वाश्रयत्वरूपभावधर्मधर्मित्वस्यचस्थिरीकरणान्नासिद्धिशंकानानैकांत्यंचेतिपूर्वेणान्वयः। अनैकांत्याभावेदृष्टांतमाह ॥ गांधर्वेति ॥ मिथस्समयंकृत्वोपगच्छेत सगांधर्वइति गांधर्वविवाहलक्षणं। समयाभावेसंगमएवन। समयेसतिविवाहएवेतिवत्हेत्वभावेव्यभिचारएवन। हेतुसत्त्वेच साध्यस्यापिसत्वनियमात् कुतोव्यभिचारइतिभावः॥ ७६४॥ हेतोरप्रयोजकताशंकांनि

गच्छन्स्वाभावदोयस्मात्तिष्ठंश्चस्वाश्रयत्वकृत् ॥ गांधर्वोद्वाहृशीलस्यकुत्रस्याद्यभिचारिता॥ ७६४॥ मुक्तत्वंभावधर्मोयत्तत्सत्त्वेधर्मवान्नकिं॥ ७६५॥ अभावाधारतात्मायमर्धनारीश्वरोयतः॥ तत्स्वाधारेस्थलेमूर्धभूषांयोषांनकिंदिशेत् ॥ ७६६॥ ॥

राकरोति॥ मुक्तत्वमिति॥ यत्यस्मान्मुक्तत्वं भावधर्मः स्वरूपानंदानुभवरूपतया भावधर्मः। तस्मात्तत्सत्त्वे मुक्तत्वसत्त्वे धर्मवान् भावधर्मवान्॥ ७६५॥ प्रकारांतरेणाप्यसिद्धिमनैकांत्यंचपरिहरति॥ अभावाधारतात्मेति॥ यतः अर्धनारीश्वरः अर्धनारीनरात्मकपरमेश्वरवद्वर्तमानः। पूर्वभागस्याभावरूपतया रौद्रत्वात्। आधारताख्यकोमलभावरूपस्यांतेवर्तमानत्वात्। इयांस्तुविशेषः। तस्यनारीशरीरार्धे। अस्यतुशिरसि। त त्तस्मान्मूर्धभूषां आधारताख्यां। अभावद्वैतवादाद्वा पंचमप्रका

राविद्यानिवृत्तिवद्वा अस्याप्यभावस्य मुक्तेपिपरमात्मनिअस्तित्वसंभवान्नासिद्धिः । आधारत्वाख्यभावधर्मसत्त्वस्यापि हेतुमत्याव श्यकत्वान्नानैकांत्यंचेतिभावः ॥ ७६६ ॥ अधुनासाध्यानंगीकारेबाधकान्याह ॥ नित्यत्वमित्यादिना ॥ अत्र सर्वधर्मशून्य त्वंपरस्य । अस्माकंतु पुण्यलक्षणधर्मशून्यत्वं । शून्यत्वस्यनिवारकानित्यनेन उक्तधर्मानंगीकारेशून्यत्वंस्यादितिसूचयति ॥ ७६७ ॥ ७६८ ॥ मुक्तपक्षीकरणात् तद्गतधर्माणांमुक्त्यवस्थायामप्यवश्यमपेक्षितानां व्यावहारिकत्वशंकैवनोदेतीतितत्वं ।

नित्यत्वंधर्मशून्यत्वंसरूपत्वमबाध्यतां ॥ ब्रह्मण्यानंदरूपत्वमनानंदविरोधितां ॥ ज्ञानरूपत्व
मज्ञानशून्यतांनित्यशुद्धतां ॥ ७६७ ॥ धर्मानेतान्विमुक्तानामप्यवश्यमपेक्षितान् ॥ कोवानि
वारयेद्वादीशून्यत्वस्यनिवारकान् ॥ ७६८ ॥ व्यावहारिकमस्तीतिव्याहतेर्मूलभूरियं ॥ त्रि
कालनास्तितासेतिह्यस्तितानास्तिताप्यभूत् ॥ ७६९ ॥ मुक्तत्वव्याहतिश्चस्याद्यावहारिकसंग
मे॥मुक्तादिस्स्यान्मुक्ततादिर्नेतिचव्याहतेर्गृहं ॥७७०॥ किंव्याहतिपुरंध्रीणांपाणिग्रहणमस्तिते ॥७७१॥

वैयात्याद्वदंतंप्रतिद्वेधाव्याहतिमाह ॥ व्यावहारिकमिति ॥ साव्यावहारिकता ॥ ७६९ ॥ मुक्तोभवतिमुक्तत्वंनास्ति । नित्यो भवतिनित्यत्वंनास्तीत्यादि प्रलपतोपिव्याहतिरेवेत्याह ॥ मुक्तादिरिति ॥ ७७० ॥ बहुव्याहतभाषिणंप्रतिवादिनमुपहसति ॥ किंव्याहतिपुरंध्रीणामिति ॥ स्त्रीलिंगत्वाद्याहतीनांस्त्रीत्वं ॥ ७७१ ॥ पूर्वोक्तव्याहतिदार्ढ्यायलौकिकोदाहरणान्याह ॥ ॥ १०५ ॥

विप्रस्स्यादिति ॥७७२॥ निर्गुणश्रुतिबलाद्याहतमंगीक्रियतइतिवदंतंप्रत्याह ॥तस्मादिति॥ तस्माद्याहतभाषित्वात्। इदंमायिमतं। साध्वीपतिव्रता अव्याहतार्थप्रतिपादननियमवतीत्यर्थः। त्वमेवोन्मत्तोव्याहतंवदसि । नश्रुतिरेवंवक्तुमर्हति । किंत्वनुकूलंकमप्यर्थ व्याहतमेववदेदितिभावः । त्वत्संगात् तवबलाद्ग्रहणरूपसंगात् । स्वैरिणीसंगदोषेण स्वैरिणीनां व्याहतीनां संसर्गदोषेण । स्वप तिवदेकस्यप्रामाणिकधर्मस्य जारवत्तद्विरुद्धाप्रामाणिकधर्मस्यचांगीकाराद्याहतीनांस्वैरिणीत्वंद्रष्टव्यं । निर्गुणश्रुतेःपरोदीरितार्थ

विप्रस्स्याद्विप्रतानैवगोमान्स्याद्गौर्नकाचन॥धनीनैवधनंचेतिकोनून्मत्तोवदेद्वद ॥ ७७२ ॥ तस्मान्निर्गुणता
वाणीव्याहतिस्वैरिणीगृहं ॥ इदंनैवविशेत्साध्वीत्वत्संगात्प्रविशेद्यदि ॥ ७७३ ॥ स्वैरिणीसंगदोषेणस्वयं
चव्याहताभवेत् ॥ यत्स्वोक्तनिर्गुणत्वाख्यगुणेनैवव्यरुध्यत ॥ ७७४ ॥ यदिब्रह्मणिनैर्गुण्यंधर्मंस्वार्थंसम
र्पयेत् ॥ अनुमानुग्राहकंसामानंतर्हिभविष्यति ॥ नस्थापयेच्चनैवस्यात्साधिकाबाधिकामम ॥ ७७५ ॥

कथनेस्वव्याहतिमुपपादयति ॥ यदिति ॥ यद्यस्मा त्सर्वधर्मशून्यत्वरूपसकलगुणाभावंवक्तुमागता अंततस्स्वार्थभूतंनिर्गुणत्वा ख्यगुणमपिवदतीतिव्याहत्याख्यविरोधमगमदित्यर्थः ॥ ७७३ ॥ ७७४ ॥ किंचनिर्गुणश्रुतिः स्वार्थंनिर्गुणत्वं ब्रह्मणिसमर्पयति नवेतिविकल्प्य प्रकारांतरेणदूषयति ॥ यदिब्रह्मणीति ॥ अनुमानुग्राहकं अस्मदुक्तानुमानस्यानुग्राहकं सहायभूतमितिभावः । तथापि ब्रह्मणिगुणाभावाधिकरणत्वरूपनिर्गुणत्वाख्यभावगुणस्यनिरूपणादित्याद्यपक्षदूषणं । द्वितीयपक्षंदूषयति ॥ नस्थापये

च्चेदिति ॥ ममानुकूलप्रतिकूलसगुणत्वनिर्गुणत्वयोरुभयोरप्यप्रतिपादनात्साधिकाबाधिकाचनेतिसंबंधः ॥ ७७५ ॥ तत्रलौकिकदृष्टांतमाह ॥ नहीति ॥ छत्रिपदंराजभृत्येस्वार्थभूतंछत्रमनादधत् छत्रच्छायामकुर्वदित्यर्थः । तस्यराजभृत्यस्यछत्रच्छायाविरोधिनं घर्मं नहिनिर्मूलयेदितिसंबंधः । एवंलक्षणयाप्रयुक्तानिर्गुणश्रुतिरपि निर्धर्मकतयांगीकृतेब्रह्मणिनिर्गुणत्वरूपंधर्ममसमर्पयंती स्वार्थविरोध्यपिसगुणत्वं नबाधेतेतिभावः ॥ ७७६ ॥ सगुणत्वविरोधिभूतनिर्गुणत्वाप्रतिपादनेतु निर्गुणइतिशब्दमात्रात्

नहिच्छत्रिपदंराजभृत्येच्छत्रमनादधत् ॥ घर्मंनिर्मूलयेत्तस्यच्छत्रच्छायाविरोधिनं ॥ ७७६ ॥ नहीयंपूतनावाणीयाशब्देनैवभीषयेत् ॥ ७७७ ॥ अतोनिष्कारणंब्रह्मधर्मानेतान्मनोरमान् ॥ निषेधतोगतिस्सास्याद्याधर्मैर्नैवसाध्यते ॥ ७७८ ॥ सुखरूपमितीयंवाक्सुखरूपत्ववादिनी ॥ तद्योगाद्रूपमप्याहनसाहिस्वाग्रहानुगा ॥७७९॥ विप्ररूपत्वशून्योहिनशूद्रोविप्ररूपकः ॥ सुखरूपत्वशून्यंयत्सुखरूपंचनैवतत् ॥७८०॥

नममभीरित्याह ॥ नहीयंपूतनेति ॥ याशब्देनैव मृतिकालीनार्तस्वरेणैवभीषयेत् सापूतनेयंवाणीनहीति ॥ ७७७ ॥ अतो निर्गुणत्वश्रुतेस्स्वार्थानाधायकत्वात् । सा अंधंतमोरूपा । धर्मैःपुण्यैः ॥ ७७८ ॥ अधुना भावरूपधर्मधर्मित्वलक्षणसाध्याभावेमुक्तत्वरूपहेतूच्छित्तिमेवबाधकंवक्तुमुपक्रमते ॥ सुखरूपमिति ॥ तद्योगा त्सुखरूपत्वाख्यधर्मयोगात् रूपं । सुखरूपव्यक्तिं ॥७७९॥ उक्तेऽर्थेदृष्टांतमाह ॥ विप्ररूपत्वेति ॥ दार्ष्टांतिकंयोजयति ॥ सुखरूपत्वेति ॥ तत्तस्मात् अस्यार्थस्यलोकेदृष्टत्वा

त् ॥ ७८० ॥ सुखरूपत्वाभावेसुखरूपमपिनेत्यत्रज्ञापकमाह ॥ सुखरूपार्थेति ॥ तत्रदृष्टांतमाह ॥ जलेति ॥ ७८१ ॥ अस्तु सुखरूपत्वाभावेसुखरूपस्याभावः प्रकृतेकिमित्यतआह ॥ अतइति ॥ अतः मोक्षेसुखरूपवस्त्वनंगीकारात् । तत स्सुखरूपत्वसुखरूपयोरविनाभावात् साध्याभावे भावधर्मधर्मित्वरूपसाध्याभावे सुखरूपत्वरूपधर्मस्याभावप्रसंगेन तदविनाभूतसुखरूपमपि ब्रह्मनस्यादितिमुक्तत्वहेतोरुच्छित्तिस्स्यात् । त्वदभिलषितामुक्तिरेवनाभूदितिभावः ॥ ७८२॥ परमप्रकृतमुपसंहरति ॥एवंचेति॥

सुखरूपार्थसद्भावेकथंतच्छब्दलक्षणा ॥ जलप्रवाहरूपेऽर्थेकिंगंगापदलक्ष्यता ॥ ७८१॥ अतोमुक्तिरमुक्तिस्स्यादियंतार्किकमुक्तिवत् ॥ मुक्तत्वहेतोरुच्छित्तिस्साध्याभावेततोध्रुवा ॥ ७८२॥ एवंचनिर्गुणंब्रह्म निर्गुणादिश्रुतेरपि ॥ उक्तरीत्याबहिर्भूतमश्रौतमभवद्ध्रुवं॥ ७८३ ॥ श्रुतिस्त्रीसंगशून्यंतद्ब्रह्म भिक्षुरभूत्तव ॥ ७८४ ॥ अन्यापोहेनतत्संगेछद्मस्त्रीसंगदोषतः ॥ भ्रष्टस्वधर्ममित्यार्यैस्त्यक्तंबाह्यानुपाश्रयत् ॥ ७८५ ॥

नञापरशुना शैवंब्राह्मंवैष्णवंचेत्याद्युक्तरीत्याच ॥ ७८३ ॥ तत्तस्मा द्विवाहवत्स्वाभाविकसंबंधरूपमुख्यवृत्त्याप्रतिपादकश्रुत्यभावात् सर्वथाऽवाच्यस्य लक्षणायामप्ययोग्यतयाऽमुख्यवृत्त्याप्रतिपादकश्रुत्यभावाच्च श्रुतिस्त्रीसंगशून्यं श्रुतिस्त्रीसंबंधमात्ररहितं तवब्रह्म भिक्षुरभूत् स्वस्वरूपसिद्ध्यैप्रमाणांतरगवेषणाख्यभिक्षाटनपरोभूत् ॥ ७८४ ॥ ननुस्वरूपमात्रलक्षणयाऽतद्व्यावृत्त्यावा ब्रह्मणोपिश्रुतिबोध्यत्वांगीकारात्कथंप्रागुक्तभिक्षुत्वमित्यतआह ॥ अन्यापोहेनेति ॥ अन्यस्याः सर्वथामुख्यवृत्तेः त्रिगु

णराहित्यरूपसंभवन्मुख्यवृत्तेः अन्यस्य प्रतिपाद्यार्थादन्यस्या सत्यत्वादेश्चापोहेन त्यागेन । अन्यस्य मुख्यभर्तुरपोहेनेतिध्वनिः। तत्संगे श्रुतिस्त्रीसंगे व्यभिचारवत् अयोग्यसंबंधेनसंगइतियावत् । छद्मस्त्रीसंगदोषतः छद्मना स्वघटकमुख्यवृत्तिच्छादनेन सं भवन्मुख्यवृत्तिच्छादनेन भावतया लघुभूतसार्वजनीनसत्यत्वादिधर्मच्छादनेनच स्त्रीसंगा च्छुत्याख्यस्त्रीसंगा त्प्राप्तदोषतः आ वश्यकमुख्यवृत्तित्यागाख्यदोषात् संभवन्मुख्यवृत्तित्यागाख्यदोषात् बाह्यमतप्रवेशाख्यदोषाच्च । भिक्षोस्तु वेषांतरेणस्त्रीसंग जातानृताब्रह्मचर्यदोषतइतिध्वनिः। भ्रष्टस्वधर्मे अपगतसत्यत्वादिस्वापेक्षितधर्मे । अयोग्यसंबंधेनचब्रह्मणश्श्रुतिस्त्रीसंगो भिक्षो र्गार्हस्थ्यवत्नसभायोग्यो नापिभिक्षुत्वापादकः। स्वरूपमात्रलक्षणायामतद्व्यावृत्तौच सत्यत्वादिर्ब्रह्मधर्माणां तवब्रह्मणोपेक्षित

अस्मद्ब्रह्माप्रतिद्वंद्वंसर्वमानमनोरमं ॥ अनंतसुगुणस्तोममुखेनपरितोदिशं ॥
अपारोपनिषन्नारीमुखान्याचुंब्यजृंभते ॥ ७८६ ॥

निर्गुणत्वैक्यादिधर्माणांच अलाभात् त्वयैवत्यागेन मानांतरेणापिसाधनायोगात् । इयांस्तुविशेषः । प्राग्भिक्षुरेव । इदानीमयो ग्यसंबंधेन त्वद्दुष्प्रक्रियाख्यदूत्या पुनस्स्त्रीसंगाद्दुर्भिक्षुरिति । आर्यै इशब्दार्थकुशलैर्विवेकिभिस्त्यक्तं । अप्रामाणिकत्वादुपेक्षितं । स्वोक्तनिर्गुणत्वैक्यसत्यत्वादिधर्माणामप्यपलापिनामुन्मत्तानामेवयोग्यंसत् बाह्यान् शून्यवादिनः सर्वधर्मरहितशून्येनजीवैक्य वादिनःउपाश्रयदित्यर्थः। शशशृंगंवाशून्यंवा तेब्रह्मस्यात् नश्श्रौतमतयोग्यमितिभावः। दुर्भिक्षुरपिआर्यैस्त्यक्तःकापालिकादी नुपाश्रयतइतिध्वनिः ॥ ७८५ ॥ अनुमानफलमाह ॥ अस्मद्ब्रह्मेति ॥ निर्गुणनिराकरणादप्रतिद्वंद्वं । महत्त्वेसत्यलौकिकदिव्य

रूपवत्त्वात् अव्यभिचरितस्वातंत्र्यादिलिंगवत्त्वात्सकलशब्दप्रवृत्तिनिमित्तवत्त्वाच्च सर्वमानमनोरमं । लक्ष्म्याः वेदाभिमानि त्वात् शृंगारमुद्रयावर्णयति ॥ अपारेति ॥ वेदस्य वेदाभिमानिन्याश्रियो वेद्यस्यहरेश्च व्याप्तत्वात्परितोदिशमित्युक्तं । वैदि कपदानामनंतत्वात् अपाराणि उपनिषन्नारीमुखानीत्युक्तं । प्रतिपादकतन्मुखयोग्यमुखानि प्रतिपाद्यगुणाएवेत्याशयेनोक्तं अनंते ति । अनेन श्रीश्रीशयोरपि विश्वरूपतयाविश्वतोमुखत्वंचध्वनितं ॥ ७८६ ॥ अनुमानकथनमुपसंहरति ॥ अतइति ॥ अतः असिद्ध्यव्याप्त्याख्यदोषरहितत्वात् । प्रागुक्ता व्याहतिरेवानुकूलतर्कः। वेदमंत्रानुकूलत्वात्सएवमंत्री । सकलमनोनुरंजकत्वादनु

अतोनुकूलतर्काख्यमंत्रिणासर्वतोदिशं ॥ पालितामेऽनुमानाख्यराजाज्ञा राजतेतरां ॥७८७॥ अतश्श्रुतिपुराण स्थनिर्गुणाख्या हरिंप्रभुं ॥ निर्गुणब्रह्म मद्दासीसंग्येवासी न्नमत्प्रियं ॥ ७८८ ॥ अहंपतिव्रतैवासंतत्रोपक्रमवा गियं ॥ उपसंहारवाक्येयंसदात्वत्पक्षपातिनी ॥ साक्षिणीतिनिगद्यात्ममनश्शौक्ल्यंप्रबोध्यच ॥ ७८९ ॥

मैव राजा । तस्याज्ञा भगवतो भावधर्मधर्मित्वरूपा ॥ ७८७ ॥ युक्तियुक्तत्वादिममेवार्थश्रुतिपुराणस्था निर्गुणवागपिवक्तीति साहित्यमुद्रयाह ॥ अतइति ॥ यौक्तिकत्वादित्यर्थः। निर्गुणब्रह्म सर्वधर्मशून्यंपरोदीरितंब्रह्म मद्दासीसंगि ममदास्योः दुर्जना नामंधंतमोदानाख्यमदभिमतकर्मकर्त्र्यो रापातप्रतीत्यसज्जनभ्रांत्योरेवसंबंधवदासीत् मत्प्रियं ममस्वारसिकार्थभूतंन । पतिव्रता पत्यौत्वय्येवव्रतवती तत्रमदीयपातिव्रत्ये उपक्रमवाक् एकोदेवइत्यादिका श्रुतावुपसंहारवाक् ससर्वद्दगुपद्रष्टेत्यादिका । त्वत्पक्ष

युक्ति- पातिनी सगुणंत्वामेवस्पष्टंवदंती साक्षिणी साक्षिभूता । तदननुगुणमर्थं मध्यस्थानिर्गुणवाक् नवक्तीति सुप्रसिद्धमेवेतिभावः । मल्लिका
॥ १०८ ॥ उपलक्षणंचैतत् । समाख्यास्मृत्या तदनुसारिण्या निर्गुणश्चेतिश्रुत्याच साक्षाद्धरिपदेनसगुणस्यतवैवाभिधानाच्च । मनश्शौद्ध्यं गुणसौ०
जारोपमनिर्गुणब्रह्माद्यविषयत्वरूपशुद्धतां । सर्वधर्मवैधुर्याख्यान्यार्थशून्या । मान्यार्थं दोषरूपहीनगुणाभावं । अर्थमित्यनेन
भर्तुर्मनश्शंकापरिहारायतन्मनःप्रियद्रव्यदानमिवेतिध्वनितं । उक्त्वा प्रभुंहरिं शरणमीयुषीतिसंबंधः । स्वपत्न्यां व्यभिचारशं
किनंपतिंप्रतिपतिव्रतायास्तस्याःवचनमिवेदंवचनं । स्वस्वामिनःभर्तुर्नारायणस्य गुणान् सौंदर्यादीन् । जग्रास । प्राकृतान्गुणा

अन्यार्थशून्या मान्यार्थमुक्त्वाशरणमीयुषी॥ स्वस्वामिनोगुणान्हित्वाजग्रास प्राकृतान्गुणान्
॥ ७९० ॥ नैर्गुण्येनैवगुणिता नैर्गुण्यंचनचेन्नञौ ॥ सगुणत्वंस्थिरीकृत्यविरुद्धार्थत्वकारकौ
॥ ७९१ ॥ बद्धसेतुनिरुद्धांभस्सेतुभंगेस्त्रवेद्ध्रुवं ॥ यथाहिनिर्गुणत्वस्य(त्यागे)च्छेदेसर्वगुणा
गमः ॥ घटाभावक्षयोनामघटस्यागतिरेवहि ॥ ७९२ ॥ ॥ ॥

नित्यनेन स्वभर्तुःप्रीत्यै तद्भोजनपात्रस्थतदुपेक्षितताल्पान्नेनैवग्रासंकुर्वतीवेतिध्वनितं ॥ ७८८ ॥ ७८९ ॥ ७९० ॥ इदानींनिर्गु
णश्रुतेरापातरमणीयार्थकथने महाननर्थस्स्यादित्याह ॥ नैर्गुण्येनैवेति ॥ नैर्गुण्येन निर्गुणत्वाख्यगुणेन गुणिता गुणवत्ता ।
अंततोगुणस्यैवकथनाद्व्याहतिरितिभावः । नञौ नैर्गुण्यंनेत्यत्रविद्यमानौ निषेधार्थकौ द्वौशब्दौ स्थिरीकृत्य द्वौनञौप्रकृतमर्थं ॥ १०८ ॥
सातिशयंगमयत इतिवचना त्सगुणतामेवदृढीकृत्य पुनर्व्याहतार्थत्वकारकौ ॥ ७९१ ॥ अलौकिकमपीममर्थं अतिस्पष्टत्वाल्लौ

किंकेदृष्टांतीकरोति ॥ बद्धसेत्विति ॥ यथा निर्गुणत्वस्य गुणनिवारकगुणाभावस्य छेदे नञंतरेणनिषेधे सर्वगुणागमः अतिशयेनगुणप्राप्तिः । गुणाभावोनेत्युक्तेसुतरांगुणप्राप्तिरितियावत् । तथा जलनिरोधकसेतुभंगे सर्वजलंस्रवेदित्यर्थः । दृष्टांतांतरं चाह ॥ घटाभावेति ॥ ७९२ ॥ संकोचे भावगुणमात्रनिषेधरूपे । परसंकोचः तत्ववाद्युक्तगुणत्रयनिषेधरूपः । मुख्यार्थलाभतः मुख्यवृत्तिलभ्यार्थलाभतः । अखंडार्थवादिनापरेण लाक्षणिकार्थत्वकथनात्तदलाभइतिभावः ॥ ७९३ ॥ कपिंजलाधिकरणन्यायानुसरणात् कपिंजलानालभेतेत्यत्र बहुत्वार्थकविभक्त्यंतकपिंजलपदस्यशतसंख्याककपिंजलपक्षिपरत्वसंभवेपि बहुहिंसा

संकोचेपरसंकोचश्श्रेयान्मुख्यार्थलाभतः ॥७९३॥ कपिंजलाधिकरणन्यायानुसरणादपि ॥ अनंतसुगुणच्छे
दात्त्रिगुणच्छेदनंवरं ॥७९४॥ किंचनिर्गुणतांस्वार्थेक्षिपंतींसगुणश्रुतिः ॥ अबाध्यस्वार्थवर्गेणकपोलेताडयि
ष्यति॥७९५॥यद्यभावोस्ति भावस्याप्यभावाभावतानकिं॥सर्वंनास्तीतिवदताकिमभावोपिरक्ष्यते॥७९६॥

भयेनत्रित्वेपर्यवसानकरणन्यायानुसरणादित्यर्थः ॥ ७९४ ॥ यदिच निर्गुणश्रुतिः स्वार्थनिर्गुणत्वमपिनिषेधति तदाऽतत्वावेदकत्वेनदुर्बला तत्वावेदकतयाप्रबलसगुणश्रुत्यैवबाध्यास्यादित्याह ॥ किंचेति ॥ ७९५ ॥ निर्गुणश्रुतेरभावरूपनिर्गुणत्वानिषेधकत्वेदूषणांतरंचाह ॥ यद्यभावोस्तीति ॥ तर्हीतिशेषः । अभावाभावो भावएवेत्यार्याणांवागुक्तविधया भावस्याप्यभावाभावतया सोप्यंगीकार्यइतिभावः । प्रकारांतरेणापिभावस्यांगीकार्यत्वमुपपादयति ॥ सर्वमिति ॥ सर्वशब्दसंकोचेकारणाभावादि

त्यर्थः ॥ ७९६ ॥ संकोचेकारणमाशंकते ॥ नेहनानेति ॥ वाक्यार्थत्वेपि कुतोनतदभावइतिपृच्छति ॥ ततोपिकिमिति ॥ ततोपि वाक्यार्थत्वेपि । परमुखेनैवस्वापेक्षितंन्यायमुद्घाटयति ॥ अर्थत्यागइति ॥ श्रुतेः नेहनानेतिश्रुतेः । उत्तरमाह ॥ गुण श्रुतीनामिति ॥ श्रुत्यप्रामाण्याद्भीतेन सकलश्रुत्यप्रामाण्याद्भेतव्यं । श्रुतित्वाविशेषादितिभावः ॥ ७९७ ॥ निर्गुणश्रुतिरपि युक्तिप्रिया इमामेवयुक्तिमनुसंधाय सकलश्रुतिप्रामाण्यरक्षायै त्रैगुण्यवर्जितमित्यादिस्मृतिसमाख्ययादुर्गुणानेवनिषेधतीत्याह

नेहनानेतिवाक्यार्थरूपत्वाच्चेत्ततोपिकिं ॥ अर्थत्यागेश्रुतेरप्रामाण्यंस्यादितिधीर्यदि ॥
गुणश्रुतीनांबह्वीनांनाप्रामाण्याद्बिभेषिकिं ॥ ७९७ ॥ एवंसगुणवाग्युक्तयुक्तित्यागोन
मेगुणः ॥ इतिमत्वानिर्गुणाख्याभेजेहरिपदांबुजं ॥ ७९८ ॥ किंचनिर्गुणशब्देनलक्ष्यंचे
न्निर्गुणंकथं ॥ मुख्यार्थबाधमूलैवलक्षणेतिसतांमतं ॥ ७९९ ॥ वाच्यत्वंनपरोवक्तितेन
स्यान्मेगतिर्वृथा ॥ इत्याद्यालोच्यसावाणीप्राणेशमतमन्वगात् ॥ ८०० ॥ ॥

॥ एवमिति ॥ ७९८ ॥ प्रकारांतरेण श्रुतेःपरमतेनिर्गुणार्थकत्वंनायातीत्याह ॥ किंचेति ॥ मुख्यार्थबाधमूलैव मुख्यार्थबाधे तद्योगेरूढितोथप्रयोजनादितिवचनान्निर्गुणत्वरूपमुख्यार्थबाधमूलैव । एवंचलक्षणावादीमायावाद्येवममार्थंबाधितवान् ॥७९९॥ वाच्यत्वंमुख्यतोनिगुणशब्दवाच्यत्वं । परोमायावादी । तेन मुख्यपक्षस्यपरैरनंगीकारात् लक्षणापक्षेचमदर्थस्यैवबाधेन । सावाणी निर्गुणतावाणी । प्राणेशमतं मुख्यवृत्त्यात्रिगुणवर्जितत्वरूपाबाधितार्थप्रतिपादकमुख्यप्राणमतं ॥ ८८० ॥ श्रुतेरालोचनांतरमाह ॥ वाच्यत्वेनेति ॥ वाच्यत्वेनैव वाच्यत्वाख्यधर्मेणैव । एवंलक्ष्यत्वेपिद्रष्टव्यं । लक्ष्यत्वेपीत्युपलक्षणं । गौणत्वेपीतिद्रष्टव्यं । नोभयंचेत् सगुणत्वभीत्याउक्तधर्मद्वयंत्यज्यतेचेत् । अशाब्दत्वधर्मेण शब्दाबोध्यत्वरूपधर्मेण । मुख्यामुख्यवृत्त्योरभावेशब्दा बोध्यत्वरूपधर्मस्यबलात्प्राप्तेरितिभावः । एवंच धर्ममुपजीव्यैव ममप्रवृत्तिर्निवृत्तिर्वास्यात् । अतःकथमुपजीव्यंधर्मंरुणध्मि ॥ ८०१ ॥ धर्माणांव्यावहारिकतायां उक्तधर्माणांबाधा व्यावहारिकपक्षेपिबाधावश्यंभावात् सःबाधितोधर्मः अर्थकृत् ममोप

वाच्यत्वेनैवगुणितावाच्यत्वेनिर्गुणोक्तितः ॥ लक्ष्यत्वेनैवगुणितालक्ष्यत्वेनिर्गुणोक्तितः ॥ नोभयंचेदशाब्द
त्वधर्मेणस्याद्विधर्मिता ॥८०१॥ व्यावहारिकतायांचबाधाद्धर्मोनसोर्थकृत् ॥ गुंजापुंजाग्निनाकुंजेकिंजायेत
हिमौषधं ॥८०२॥ इतिसर्वंसमालोच्यश्रुतिस्साव्याहतेर्भयात्॥अव्याहतगतिंविष्णुमव्याजस्नेहतोभजत्८०३

जीवनाख्यकार्यकारी । बाधितादर्थक्रियाभावेदृष्टांतमाह ॥ गुंजापुंजेति ॥ गुंजापुंजाग्नितः गुंजापुंजेआरोपिताग्नितः । हिमौषधं शीतनिवृत्तिः ॥ ८०२ ॥ साश्रुतिः निर्गुणश्रुतिः । व्याहतेरितिजात्येकवचनं । अव्याहतगतिं ब्रह्मांडखर्परनिरोधेपितद्भेदस्यैवक्ृ तत्वादव्याहतगतिं । अपौरुषेयतया प्रामाण्यनियमात्अहमप्यव्याहतगतिः । अतोयमेवमत्संबंधयोग्यइतिअव्याजस्नेहतइत्यनेन तन्मनःप्रियसार्वज्ञादिगुणानामच्छेदिका । तदनपेक्षितदोषरूपसत्वादिगुणानामेवच्छेदिकेतिध्वनितं । अव्याहतगतिमित्यनेनापि

युक्ति- अतिद्रढीयसाखर्परेणापियस्यगतिरूपगुणोनव्याहतः निर्गुणइतिकोमलवर्णपदात्मिकाहं कथंश्रौततयादृढतरसार्वज्ञादिगुणान्व्या मल्लिका
हन्मीत्यपिध्वनितं ॥ ८०३ ॥ अधुना निर्गुणत्वं मिथ्यासत्यंवेति विकल्पं मनसिनिधायाद्यंदूषयति ॥ मृषाचेदिति ॥ मृषामि गुणसौ०
॥ ११० ॥ थ्या । अद्वैतवत् तवाद्वैतवत् भेदमिथ्यात्वे ऐक्यश्रुत्याप्रतिपादितभेदविरुद्धैक्यस्यसत्यत्ववत् । अन्यथातदपिनस्यादित्यात्मी
यएवबाणोभवंतंप्रहरतीतिभावः ॥८०४॥ तत्रयुक्तिमाह ॥ अतत्वावेदकमिति ॥ हीत्यनेन नास्तीतिविप्रलंभकवाक्याद्धटास्ति
तायाअपायादर्शनादितिप्रसिद्धिमाह। अत्रापिमूलीभूतयुक्तिमाह॥ अतत्वतत्वयोरिति ॥ आरोपितरजतत्वस्यानारोपितशुक्ति

मृषाचेन्निर्गुणत्वंस्यात्सगुणत्वश्रुतेर्बलात् ॥ सत्यासगुणतातर्हिसिद्ध्येदद्वैतवत्तव ॥८०४॥ अतत्वावेदकंवाक्यं
नह्तित्वस्यबाधकं ॥ अतत्वतत्वयोश्चैवनविरोधोस्तिकश्चन ॥ ८०५ ॥ नमृषानिर्गुणत्वंचेन्निर्गुणत्वश्रुतिर्गता ॥
तेनैवसगुणत्वासे भावमात्रनिषेधने ॥ अन्योन्याभावभेदस्यपट्टबंधोभविष्यति ॥ ८०६ ॥ ॥
बंधध्वंससदाभावौविरुद्धौयत्सदातनौ ॥ मंत्रिणौमंत्रशक्त्यातंसदाबोधयतोनृपं ॥ ८०७ ॥

त्वस्यचविरोधादर्शनादितिभावः ॥ ८०५ ॥ द्वितीयपक्षंदूषयति ॥ नमृषेति ॥ तेनैव निर्गुणत्वरूपगुणेनैव । भावमात्रनिषेधने
निर्गुणपदेनस्वार्थभूतमभावमनिषिध्य भावमात्रनिषेधने अन्योन्याभावभेदस्य अन्योन्याभावाख्यभेदस्य पट्टबंधोभविष्यति ।
अभावरूपतयातस्याप्यवश्यमंगीकार्यत्वंस्यादितिभावः ॥ ८०६ ॥ अभावांतरापत्त्याप्यनिष्टमाह ॥ बंधध्वंसेति ॥ बंधस्य ॥ ११० ॥
ध्वंसात्यंताभावौ सदातनौनित्यौ मुक्त्यनंतरमपिसदाविद्यमानावित्यर्थः । विरुद्धौ सार्वज्ञासार्वज्ञवदेकत्रानवस्थितौ । सदाभेद

साधकौ। ध्वस्तबंधस्य नित्यमुक्तस्यचै क्यायोगादितिभावः । मंत्रिणौ यतस्त्वसौनित्यमुक्तोऽयंचबंधान्मोक्षंततएवाभिवांछेदिति मंत्रवंतौ । विरुद्धावित्यनेन अविरुद्धौराजपुरुषावेकीभूय कदाचिद्राजानमेवनाशयतः । तयोर्विरोधेतु राज्ञएवस्थैर्यमितिलोके दृष्टं । तद्वदिहापि सहावस्थित्याऽविरुद्धधर्मौ नभेदप्रापकौ । प्रत्युतैक्यस्यैवसाधकौ । गोत्वाश्वत्ववत्सहानवस्थितौतु स्वधर्मिणोर्भेदस्यैवसाधकावितिध्वनयति। मंत्रशक्त्या द्वासुपर्णेत्यादिमंत्रशक्त्या नृपं भेदं बोधयतः प्रतिपादयतः । मुक्तौसदाविद्यमान विरुद्धधर्माभ्यां मुक्तावपि सर्वदाजीवपरयोर्भेदइतिभावः ॥ ८०७ ॥ भृत्यावप्याह ॥ भटौचेति ॥ रिपुसेनामुखागतौ अभा

भटौचाग्रेसरौतस्यरिपुसेनामुखागतौ ॥ अल्पज्ञत्वबहुज्ञत्वाभावौचोभयपार्श्वगौ ॥ ८०८ ॥
पृथक्त्वंतुगुणं भावभेदं हंत्वैक्यवाक्तव ॥ अभावधर्मवद्भेदोप्यभावात्माऽस्तुनिर्भयः ॥ ८०९ ॥

वद्वैतवादिनोभेदरिपोर्मायावादिनोमुखादागतौ स्वांगीकृताभावरूपतयामायावादिनाप्यनिवार्यावििति । स्वसेनातोबलाद्गृहीतंभटं सैवसेना पुनर्ननिहंतीतिलौकिकं । अल्पज्ञत्वबहुज्ञत्वाभावौ किंचिज्ज्ञत्वस्यबहुज्ञत्वस्यचअभावौ द्वौ मायिमतेसंसारकालीनयोर्जीवेश्वरनिष्ठयोःकिंचिज्ज्ञत्वसर्वज्ञत्वयोर्भावधर्मयोर्मुक्तौनिवृत्तावपि संसारकालीनयोरभावरूपयोर्मुक्तावप्यनुवृत्त्या जीवेश्वरभेदसाधकत्वात्तदैक्यबाधकत्वाच्चभटावित्युक्तं । नहिसंसारेपीश्वरेऽल्पज्ञत्वाभावः जीवेसर्वज्ञत्वाभावश्च नास्तीतिपरोवक्ति॥८०८॥ तर्ह्यैक्यवाक्यस्यकागतिरित्यतः परोदीरितन्यायेनैवगतिमाह ॥ पृथक्त्वंत्विति ॥ तवैक्यवाक् एकमेवाद्वितीयमित्यैक्यवाक् ।

भावभेदं भावरूपभेदं हंतु। अभावधर्मवत् निर्गुणवाक्येनबोधिताभावधर्मवत् अभावात्मा अन्योन्याभावात्मा। अस्त्विति नकेवलंममाज्ञा अद्वितीयपदेनाभावरक्षणार्थं भावरूपंद्वितीयंत्वमेवहंसीत्यपिद्रष्टव्यं। पृथक्त्वमितितार्किकमर्यादयोक्तं। अस्मन्मतेतुविभागंभावभेदं ॥ ८०९ ॥ ननुभवन्मतेपृथक्त्वस्यांगीकारात्कथंतन्निषेधइत्यतआह ॥ अन्योन्याभावेति ॥ अन्योन्याभावातिरिक्तं तार्किकेणभावरूपगुणतयांगीकृतमितियावत्। तत्ववादिना अन्योन्याभावएवपृथक्त्वमितिवदता निषेद्धुंशक्यते। युक्तिहीनतयास्माभिस्त्यक्तंतत्पृथक्त्वं अस्मन्मतस्यश्रौतत्वसंपादनायतवैक्यश्रुतिरपिनिषेधत्विति भावः। विभागाख्या

अन्योन्याभावातिरिक्तंपृथक्त्वंतत्ववादिना ॥ निषेद्धुंशक्यतेजीवेविभागाख्याभिदातथा
॥ ८१० ॥ तयोरन्यइतिप्रोक्तस्त्वन्योन्याभावइष्यते ॥ श्रुतिप्रामाण्यरक्षायैनैर्गुण्येत्वद्विवे
कवत् ॥ ८११ ॥ आत्महत्येवयल्लोकेपरहत्यापिदूषणं ॥ अतस्त्वव्याहतेर्भीतौभयंभेदश्रुते
र्नकिं ॥ ८१२ ॥ ज्ञातत्वाभावधर्मित्वपूर्वात्सानबिभेतिकिं ॥ ८१३ ॥

भिदाचनिषेद्धुंशक्यतइत्यावृत्त्यायोज्यं। बिंबप्रतिबिंबतयासदाऽविभक्तयोः तन्निषेधस्यन्याय्यत्वात् ॥ ८१० ॥ प्रामाणिकत्वाच्चनाभावस्यनिषेधइत्याह ॥ तयोरिति ॥ श्रुतिप्रामाण्यरक्षायै अन्योन्याभावइष्यतइतिसंबंधः। नैर्गुण्येत्वद्विवेकवत् श्रुतिप्रामाण्यरक्षायै अभावंविना भावमात्रनिषेधाख्यविवेकवत् ॥ ८११ ॥ स्वाप्रामाण्यमिवपराप्रामाण्यमपिदोषायेत्यत्रदृष्टांतमाह ॥ आत्महत्येति ॥ ८१२ ॥ अभावमंगीकुर्वतैव तन्निष्ठज्ञातत्वप्रमेयत्वादिभावधर्माणां ब्रह्मनिष्ठाभावाधिकरणत्वादिभावधर्मा

णांचावश्यमंगीकार्यत्वेन भावमात्रनिषेधोपिनयुक्तइत्याह ॥ ज्ञातत्वेति ॥ ८१३ ॥ तत्त्वमसीत्यैक्यश्रुतिरपि जीवावाचकतत्पदेनब्रह्मैवव्यपदिशंती ब्रह्मावाचकत्वंपदेनचजीवमेवव्यपदिशंती कथंतयोर्भेदमात्रंनिवारयेत्। अन्योन्यावाचकपदबोध्ययोर्घटपटयोर्भेदाविनाभूतत्वदर्शनादित्याह ॥ व्यवस्थितादिति ॥ इयंतेश्रुतिरितिसंबंधः। विशेषंवेतिस्वमतरीत्योक्तं अहमपिविशेषमंगीकरोमीतिवदंतंप्रत्याह ॥ विशेषइति ॥ भावः भावरूपोविशेषोनास्ति। तेनाभावः अन्योन्याभावरूपो भेदएव गतिरिति

व्यवस्थितादियंतत्त्वंपदार्थत्वाच्चतेश्रुतिः ॥ कथंनभीताभेदंवाविशेषंवाविनावद ॥ विशेषोनास्तिभावस्तेभे
दोऽभावोगतिर्ध्रुवा ॥८१४॥ व्यावहारिकभेदाच्चनात्रतत्त्वंपदार्थता॥ यत्सत्ययोरैक्ययोग्यचितोरेवकथातव
॥ ८१५॥ यद्वाब्रह्मस्थितैक्यस्यभावरूपस्यतद्रिपोः ॥ निर्गुणोक्तिशिरश्छिद्या त्वेनैवास्याःपराभवे॥८१६॥
सर्वज्ञशर्वशक्तित्वश्रुतिरर्थबलोर्जिता ॥ पट्टंबध्नातिभेदस्यहंतिचास्यविरोधिनं ॥ ८१७ ॥

संबंधः ॥ ८१४ ॥ व्यावहारिकभेदाद्व्यवस्थोपपत्तिरित्याशंक्य पारमार्थिकैक्यबोधसमसमयवर्तिन्याःव्यवस्थायाअपि पारमार्थिकत्वावश्यंभावादित्याह ॥ व्यावहारिकभेदादिति ॥ चितो रैक्ययोग्यचिन्मात्रयोः कथा व्यपदेशःतत्त्वंपदाभ्यां ॥८१५॥ प्रकारांतरेणाप्यैक्यश्रुतेर्भेदश्रुतिबाधकतानास्तीत्याह ॥ यद्वेति ॥ निर्गुणोक्तिः त्वद्रीत्याब्रह्मनिष्ठभावधर्मनिषेधिकानिर्गुणोक्तिरितियावत्। तद्रिपोर्भेदरिपोः भावरूपस्य ब्रह्मस्थितैक्यस्य ब्रह्मधर्मभूतैक्यस्य शिरश्छिद्यात् निर्गुणश्रुतिरेवैक्यश्रुतिबाधिके

युक्ति- तियावत् । एवमपिनभेदस्यहानिः । तेनभावरूपैक्येनैवास्याःनिर्गुणश्रुतेःपराभवे ऐक्यश्रुत्यानिर्गुणश्रुतिबाधने । सर्वज्ञत्वादि मल्लिका
॥ ११२ ॥ श्रुतिः अबाधितार्थासती भेदस्यपट्टंबध्नाति । अस्यभेदस्यविरोधिनंऐक्यंहंतिच । सर्वज्ञासर्वज्ञयोरैक्यायोगात् । एवंत्वदैक्यश्रु गुणसौ०
तेःप्रामाण्येपिभेदश्रुतेरेवजयः । निर्गुणश्रुतेःप्रामाण्येपिभेदश्रुतेरेवजयइतिभावः ॥ ८१६ ॥ ८१७ ॥ पूर्वनिर्गुणश्रुतेर्भावमात्र
परत्वेनसंकोचे गुणत्रयपरत्वेनसंकोचएवश्रेयानित्युक्तं । अधुनाप्रकारांतरेणदूषयति ॥ किंचेति ॥ श्रुतिंनिर्गुणश्रुतिं । प्रबला
असंकुचितस्वस्वगुणाभिधानात्प्रबला । अनंतेत्यनेन बहुत्वेनापिप्राबल्यंसूचयति । क्वचित्कोणे गुणत्रयाख्यकोणे । स्वबोध्यसा

किंचसंकोचमार्गेणपलायनपरांश्रुतिं ॥ प्रबलानंतसगुणश्रुतिःकोणेक्वचित्क्षिपेत् ॥ ८१८ ॥ व्यावहारिकता
चात्मधर्माणां स्यात्तदैवहि ॥ यद्यहंप्रतिषेधामिनोचेत्तेस्युरबाधिताः॥८१९॥ अहंचमुख्यतस्स्वार्थपरैवान्यवि
रोधिनी ॥ नह्विगंगापदंलक्ष्येतीरेस्वार्थविरोध्यपि ॥ तीरत्वघोषावासत्वपार्थिवत्वादिकंक्षिपेत् ॥ ८२० ॥

र्वज्ञादिगुणान्विहायगुणत्रयनिषेधपरामेवकुर्यादितिभावः ॥ ८१८ ॥ ननु भगवतिसार्वज्ञादिभावरूपगुणप्रतिपादकानांश्रुतीनां
व्यावहारिकगुणपरत्वेन शतमप्यंधानांनपश्यतीतिन्यायेनदुर्बलत्वा न्निर्गुणश्रुतिरेवसंकुचितवृत्तिरपि अबाध्यार्थत्वाद्बाधिकास्या
दित्याशंकां निर्गुणश्रुतेरभिप्रायमुद्घाटयन्परिहरति ॥ व्यावहारिकताचेति ॥ अहं निर्गुणइत्याकारा । प्रतिषेधामि भगवद्गु
णान्निराकुर्यां तदैवात्मधर्माणांव्यावहारिकतास्यादितिसंबंधः । नोचे न्नप्रतिषेधामिचेत् तेश्रौतागुणाः अबाधिताःस्युः ॥८१९॥ ॥ ११२ ॥
अहंच लोकमर्यादयामुख्यवृत्त्यास्वार्थपरा धर्मान्निषेधामिवा उतमायिमतरीत्या लक्षणयावृत्त्यास्वार्थपरा निषेधामिवेतिविकल्प्य

द्वितीयपक्षेदोषंवदंती आद्यमेवपक्षंस्थिरीकरोति ॥ अहंचेति ॥ हियस्मात्गंगापदंतीरेलक्षणयाप्रवृत्तं लक्ष्येस्वलक्ष्येतीरेस्वार्थ विरोधि स्वार्थस्यप्रवाहस्यविरोध्यपि तत्राविद्यमानमपि तीरत्वपार्थिवत्वादिकं नक्षिपेत् ननिराकुर्यात् । तस्मान्मायावाद्युक्तरी त्या स्वरूपमात्रलक्षणयाब्रह्मस्वरूपमात्रप्रतिपादिकाऽहं वस्तुगत्या ममुख्यार्थभूतनैर्गुण्यविरोधिनोपिभगवद्गुणान्ननिषेद्धुंशक्ता। तेनमुख्यतस्स्वार्थपरैवान्यविरोधिनी मदर्थनैर्गुण्यविरोधिभूतगुणविरोधिनी । धिङ्मायिमतं लोकमर्यादैवाश्रयणीयेतियावत् ॥ ८२० ॥ अतोमुख्यवृत्तेरावश्यकत्वात् । शाब्दत्वंशब्दाभिधेयत्वं आदिपदेनबोध्यत्वादिकंग्राह्यं । अन्यनिषेधिका भावधर्म

अतश्शाब्दत्वादिधर्मबलादन्यनिषेधिका ॥ कथंतानेवबाधेहंहसिष्य
तिसहोदरी ॥ कृतघ्नंदूषयंतीवागुपजीव्यविरोधिनीं ॥ ८२१ ॥

निषेधिका अहं तानेव मदुपजीव्यशाब्दत्वादिभावरूपधर्मानेव कथंबाधे कथंनिवारयामि । यदिनिषेधामि तर्ह्युपजीव्यविरोधिनीं मां सहोदरी मयासहभगवदुदरनिस्सृता कृतघ्नंदूषयंती कृतघ्नेनास्तिनिष्कृतिरित्यादिकावाक् हसिष्यति । ननूपजीव्यमपिशाब्द त्वादिकं बाध्यत्वान्निषेद्धुंशक्यतेइतिचेत् तत्रवक्तव्यं किंबलात्तेषांबाधइति । निर्गुणोक्तिबलादेवेतिचेत् न । सार्वज्ञादिगुणनिषे धार्थमुख्यवृत्त्याप्रवृत्तया निर्गुणोक्त्या सार्वज्ञादिगुणनिषेधकालएव नशाब्दत्वादिकमपिनिषेद्धुंशक्यं । स्वदंतभंगस्यैवप्रसंगेन परदंशनासामर्थ्यात् । तद्बाधानंतरंचनहितद्बाधिका । विरम्यव्यापारायोगात् । शाब्दत्वादेस्तदाप्यावश्यकत्वाच्च बाधकांतरं

चनास्तीत्यबाध्यमेवशाब्दत्वादिकं ॥ ८२१ ॥ एवंदूषणेविद्यमानेपि तुष्यतुदुर्जनइतिन्यायेनदूषणांतरमाह ॥ बाध्यस्येति ॥
रज्जुसर्पोपजीवकः रज्जुसर्पस्योपजीवकः ॥ ८२२ ॥ ततः लोकेप्युपजीव्यस्यबाध्यत्वादर्शनात् । तस्मा दुपजीव्यबाधायोगात् ।
एकत्र शाब्दत्वादौभावधर्मे छिन्नधारेण तन्निषेद्धुमशक्तेन कुठारेण नञा । वनेआरण्यके । अपरं सार्वज्ञादिकं तज्जातीयं भाव
त्वेनज्जातीयं कथंछिंद्यां । प्रामाणिकेकास्मिंश्चिद्भावधर्मेकुंठितशक्तिनानञा कथंप्रामाणिकंभावांतरंनिषेद्धुंशक्यमितिभावः । मंद

बाध्यस्यचोपजीव्यत्वमबाध्यंचोपजीवकं ॥ नश्रुतं नहिसत्सर्पोरज्जुसर्पोपजीवकः ॥ ८२२ ॥
ततोपिनिर्गुणत्वंनस्वोपजीव्यस्यबाधकं ॥ ८२३ ॥ तस्माच्छाब्दत्वबोध्यत्वधर्मित्वादिगुणानु
गा ॥ एकत्रच्छिन्नधारेणकुठारेणापरंवने ॥ ८२४ ॥ तज्जातीयंकथंछिंद्यांमंदाशंकितदुर्गुणान् ॥
छिनद्मिमंदधारापीत्यगान्निर्गुणवाग्बहिः ॥ ८२५ ॥ उपजीव्यसजातीयास्सर्वेपिह्युपजीव्यवत् ॥
भर्तुस्सहोदरास्सर्वेकिंनपोष्यास्स्वभर्तृवत् ॥ ८२६ ॥ ॥ ॥ ॥

धारापि प्रामाणिकभावधर्मेऽल्पीभूतधारापि मंदाशंकितदुर्गुणा न्मंदैराशंकितदुर्गुणा न्भगवत्यप्रामाणिकान्सत्वादिभावगुणान्वा
सार्वज्ञाद्यभावरूपगुणान्वा निषेधामीति प्रामाणिकेभ्योबहिरगादितिसंबंधः ॥ ८२३ ॥ ८२४ ॥ ८२५ ॥ भावत्वादिनासजाती ॥ ११३ ॥
यत्वेपि उपजीव्यत्वेनसाजात्यंनास्तीतिमंदाशंकामाभूदितिसद्दृष्टांतमाह ॥ उपजीव्यसजातीयाइति ॥ ८२६ ॥ अधुनासर्वज्ञ

त्वादीनामेवसाक्षादुपजीव्यत्वंवक्तुमुपक्रमते ॥ किंचेति ॥ सर्वज्ञत्वपूर्वास्सर्वज्ञत्वसर्वेश्वरत्वादयः । अपूर्वाः भगवत्येवविद्यमा
नाः सर्वगुणाः तत्तच्छ्रुतिभिः सार्वज्ञादिश्रुतिभिः प्रसक्ताश्चेत् । अन्यथा प्रसक्त्यभावे ॥ ८२७ ॥ तत्तच्छ्रौततत्पदानि सर्वज्ञादि
पदानि एषां सार्वज्ञादीनां मुख्यतयामुख्यवृत्त्याअभिदध्युः ब्रूयुः ॥८२८॥ गुणिनि ब्रह्मणि तत्तत्सत्तां सार्वज्ञादिसत्तां । सर्वज्ञ

किंचसर्वज्ञत्वपूर्वापूर्वसर्वगुणाहरौ ॥ तत्तच्छ्रुतिप्रसक्ताश्चेन्निषेध्यास्स्युर्नचान्यथा ॥८२७॥ तत्तच्छ्रौत
पदान्येषांप्रसक्त्यैस्युस्तदैवहि ॥ यदिमुख्यतयैवैतानभिदध्युर्गुणानपि ॥ ८२८ ॥ मुख्यावृत्तिश्चगुणि
नितत्तत्सत्तामपेक्षते ॥ कथंतत्रैवतद्धर्मसत्तापेक्षावतीपुनः ॥ ८२९ ॥ तांस्तत्रैवनिषेधामियाहंतदुप
जीविनी ॥ यदायत्रघटस्तत्रतदाकिंतन्निषेधनं ॥ ८३० ॥ इत्थंप्रसंजकंवाक्यंयस्मादासीत्प्रसाधकं ॥
अतोपिसाश्रुतिस्सर्वाह्युपजीव्यैवमेभवत् ॥ ८३१ ॥ बिभेमितद्विरोधायत्रिगुणास्तुजडात्मकाः ॥
जीवेषुप्रमिताभ्रांत्याप्रासाब्रह्मणिनिर्मले ॥ निरवद्यश्रुतिस्थेन्नेनिषेध्याइत्यगाद्बहिः ॥ ८३२ ॥ ॥

त्वसहिते सशब्दोमुख्यः । तद्रहिते सर्वज्ञशब्दः तीरेगंगाशब्दवत्अमुख्यएव । एवंच तत्रैवब्रह्मण्येव तद्धर्मसत्तापेक्षावती । अ
पूर्वाणामन्यत्रसत्तायोगात् । तान्सार्वज्ञादीन् । तदुपजीविनी ब्रह्मणिसर्वज्ञत्वादिसत्त्वोपजीविनी ॥ ८२९ ॥ ८३० ॥ फलित
माह ॥ इत्थमिति ॥ ८३१ ॥ तद्विरोधाय उपजीव्यसार्वज्ञादिश्रुतिविरोधाय । तर्हिकस्यनिषेधोममार्थस्स्यादित्यतआह ॥ त्रि

युक्ति- गुणास्त्विति ॥ निर्मलेब्रह्मणिभ्रांत्याप्राप्ताइत्यनेन तत्रैवतत्सत्ता नोपजीव्येतिसूचयति ॥ ८३२ ॥ अभावशेषेअभावावशेषे । मल्लिका
सर्पइतिध्वनिः । हरेस्सुगुणद्रोहिणांमायिनां। तस्याः शेषाशायाः उक्तात्मधर्माणांविषये पक्षपातः उक्तविधयानिर्गुणश्रुतेराग्रहः। गुणसौ०
॥ ११४ ॥ गरुडइतिध्वनिः ॥ ८३३ ॥ भावाभावयोःभावएवावशेषार्हः लघुत्वात् । नत्वभावो गुरुत्वादित्येतत् साहित्यमुद्रयाऽऽह ॥ अ
भावइति ॥ ८३४ ॥ प्रकारांतरेणभावएवश्रुतेरपेक्षितइत्याह ॥ भावोहीति ॥ भावःशृंगारचेष्टा । वाचांचभावः अभिप्रायः।

अभावशेषेयाप्याशासुगुणद्रोहिणांहरेः ॥ तस्याश्चोक्तात्मधर्माणांपक्षपातोभयंकरः ॥ ८३३ ॥
अभावेगौरवंप्राहुर्भावेचलघुतांबुधाः ॥ चित्रंश्रुत्यंगनाधत्तेशिलांनकिलमालिकां ॥ ८३४ ॥ भावो
हियोषितांभूषाभावोवाचांचभूषणं ॥ तंभावंवाग्वधूरेषादूषयेत्केनहेतुना ॥ ८३५ ॥ किंच किं
चनशब्दस्य भावंयोवेत्तिकंचन ॥ अभावशेषंसकथंदोषंनमनुतेबुधः ॥ ८३६ ॥ स्वव्याहतिभया
त्स्वार्थनाभावंयर्हिवारयेत् ॥ नमारयेत्तर्हिनित्यांस्वांचभावस्वभाविनीं ॥ ८३७ ॥ ॥

वाग्वधूःवाग्रूपावधूः । तंभावं द्विविधंभावं ॥ ८३५ ॥ अभावशेषवादिनोदूषणांतरमाह ॥ किंचेति ॥ भावं किमपिनास्तीति
भावं ॥ ८३६ ॥ अभावशेषपक्षेपुनरपिदूषणमाह ॥ स्वव्याहतिभयादिति ॥ तर्हि भावस्वभाविनीं भावरूपां । नित्यां याव ॥ ११४ ॥
द्ब्रह्मविष्ठितंतावतीवागिति ब्रह्मसमानयोगक्षेमतयासदातनां स्वां नेहनानेतिश्रुतिंच नमारयेत् नबाधेत । बोध्यार्थइवबोधकश्रु

तिरप्यबाध्यैवभवेत् । नह्यालोकाभावेघटबोधोदृष्टः । अतोभावोप्यवशेषणीयइत्यर्थः । स्वार्थेस्वत्वाभिमानाद्धितवस्वव्याहतिरि
त्युपचारः । अस्मदुक्तस्वात्मबाधनंतुमुख्यतस्स्वव्याहतिरित्यवश्यंवर्जनीयेतिभावः ॥ ८३७ ॥ प्रकारांतरेणापि अभावशेषणात्
भावशेषणमेवन्याय्यमित्याह ॥ मानत्वेति ॥ भावार्थप्रतिषेधने श्रुतिरूपधर्मिनाशः ॥ ८३८ ॥ उक्तार्थेपूर्वेषांसंमतिमाह ॥ स
तिधर्मीणीति ॥ ८३९ ॥ प्रकारांतरेणपरशंकामनूद्यदूषयति ॥ यदीति ॥ तत्वज्ञानतायै तद्घतितत्प्रकारकज्ञानत्वार्थे । तदर्थे

मानत्वधर्मनाशस्स्याद्भावप्रतिषेधने ॥ धर्मिनाशोभवेद्धंतभावार्थप्रतिषेधने ॥ ८३८ ॥
सतिधर्मिणिधर्मस्यचिंतामाहुर्विपश्चितः ॥ धर्मिनाशाद्भयंनोचेद्धर्मनाशेनकिंभयं ॥ ८३९ ॥
यदितत्वज्ञानतायैनबोध्यस्यनिषेधनं ॥ तदर्थमेवतद्यज्ञबोधकंचनबाध्यतां ॥ ८४० ॥ वक्तृ
त्वगुणबाधेहिश्रुतेर्बाधे नबोधकं ॥ नेहनानेतिवाक्येतुसाक्षाद्बाधा न्नबोधकं ॥ ८४१ ॥

तत्वज्ञानोत्पत्त्यर्थे । बाष्पारोपितधूमात्वह्निप्रमितेरदर्शनात् । सद्धूमादेवतत्प्रमितिदर्शनाच्च । अत्रापित्वदुक्ता धर्मचिंता । अस्म
दुक्तातुधर्मिचिंतेतिप्रबला ॥ ८४० ॥ ननुनिर्गुणश्रुतौभावरूपभगवद्गुणबाधएव । नतुश्रुतिस्वरूपबाधः । अतोनुक्तोपालंभइत्य
तआह ॥ वक्तृत्वेति ॥ वक्तृत्वगुणबाधे हरेर्भावरूपवक्तृत्वगुणबाधे उच्चारकाभावेनश्रुतेरेवाभावेसति नबोधकं । साक्षाद्बाधा
त् भगवतोन्यस्यसाक्षान्निषेधात् । साक्षात्परंपरयावा श्रुतिबाधस्तूभयत्रापिसमइति नोक्तदोषइतिभावः ॥ ८४१ ॥

स्वस्वरूपहानिर्महादोषइत्यत्रलौकिकदृष्टांतमाह ॥ सतोपीति ॥ सतोपिचक्षुरादेर्दोषतः काचादिदोषात् दोषः प्रमाजनकत्वा भावः । स्वासत्त्वे चक्षुषएवाभावे दुष्टता प्रमाजनकत्वाभावोनकिं भवेदेवेत्यर्थः । नकिमित्याक्षेपेण पूर्वत्रधर्म्यंशप्रमाजन कत्वमात्रमस्ति । अत्रतुतदपिनास्तीतिसूचितं ॥ ८४२ ॥ उक्तमर्थमुपसंहरन्नेवबाधकंचाह ॥ धर्मीति ॥ ब्रह्म ऐक्यस्य त्वदभिल षितनिषेधस्यच धर्मिभूतंब्रह्म । तद्ब्रह्म । इहेतिपदात् नेहनानेत्यत्रविद्यमानात् । तत्पदं इहेतिपदं । अतएव ब्रह्मस्थापकत्वादेव ।

सतोपिदोषतोदोषस्स्वासत्त्वेकिंनदुष्टता ॥ ८४२ ॥ धर्मीस(र्वा)त्त्वात्मानारक्ष्योनचेद्ब्रह्मैवशा
म्यति ॥ तदिहेतिपदात्सच्चेत्तत्पदंचातएवसत् ॥८४३॥ व्यावहारिकसत्त्वेनबोधकंयदिबोधकं ॥
व्यावहारिकसत्त्वेनबोध्यस्याप्यस्तुबोध्यता ॥ ८४४ ॥ घटधीरिवतद्धीश्चस्यादविद्यानिवर्तिका
॥ ८४५ ॥ एवंच यदिबोध्यस्यतत्वतायांभरो मम ॥ बोधकस्यापितद्भावेभरोवश्यमपेक्षितः
॥८४६॥ नहिवंध्यासुतंसूतेनाप्यात्मानंजिघांसति ॥ अतोभावाभावतयानविभागोममोचितः॥८४७॥

सत्अबाध्यं ॥ ८४३ ॥ शंकते ॥ व्यावहारिकसत्त्वेनेति ॥ उत्तरमाह ॥ व्यावहारिकेति ॥ बोध्यस्य ब्रह्मणःऐक्यस्यच ॥ ८४४ ॥ ननुबोध्यस्यव्यावहारिकत्वेअतत्वावेदकंज्ञानं कथमविद्यानिवर्तकमित्यतआह ॥ घटधीरिति ॥ घटधीः व्यावहारि कघटज्ञानं । घटाधिष्ठानचैतन्यावरकाज्ञानस्येव । तद्धीः व्यावहारिकब्रह्मधीः ॥ ८४५ ॥ एवंच प्रयोजनाभावेपि बोध्यस्यब्र ह्मणः । भरस्तवाग्रहः । ममेत्युत्तरार्धेनसंबध्यते ॥ ८४६ ॥ अधुनाबोधकश्रुतेरेवबाध्यत्वमावश्यकमित्यन्यापदेशेनाह॥नहीति॥ ॥ ११५ ॥

वंध्या आरोपितस्त्रीत्ववतीदारुमयीयोषा । एवमारोपिताश्रुतिः सुतस्थानीयंतत्वज्ञानं नजनयेत् । यद्वा वंध्यास्त्री स्वयंविद्यमा नापि अदृष्टाख्यसहकारिमात्रविरहात् सुतंनजनयति । किंवाच्यं तदास्वरूपतएवाविद्यमाना कार्यंनकुर्यादिति । नापिलोके आत्मानंकोपिजिघांसति । अतश्श्रुतिरपिनस्वात्मनाशायप्रयतते । अतोपिबोधकमबाध्यमेवेतिभावः । श्रुतिस्स्वाभिप्रायमुपसंह रति ॥ अतइति ॥ अतो भावस्याप्यावश्यकत्वात् ॥ ८४७ ॥ इयंवाक् निर्गुणइतिवाक् ॥ ८४८ ॥ श्रुतिःगुणत्रयेसंकोचंभ्रं

तयत्रनास्तितत्तत्रनिषेधामीतिवागियं ॥ त्रैगुण्यवर्जितेविष्णौगुणत्रयमदूषयत् ॥ ८४८ ॥
ह्रीमत्याममसंकोचगमनंनैवदूषणं ॥ गुणिनांगुणनिंदातुमहादोषप्रदाकिल ॥ ८४९ ॥ इतिनि
र्गुणवाग्धर्मवशीकृतमतिःप्रभोः ॥ धर्मनिर्मूलनंधर्मनमेनइतिमेमतिः ॥ ८५० ॥ अपिचैकत्व
धर्मस्यसत्त्वेभावगुणोस्तिते ॥ तदभावेगतंशास्त्रमैक्यमेकत्वमेवयत् ॥ ८५१ ॥ ॥

गारमुद्रयाघटयति ॥ ह्रीमत्याइति ॥ अभिमानिश्रीदेवीमादायह्रीमत्याइत्युक्तं । संकोचगमनं कुलस्त्रीणांतु लज्जावशाद्राजमार्गं विहाय संकुचितमार्गेणगमनंयुक्तमितिध्वनिः । गुणिनांपुंसां गुणनिंदा गुणापलापः ॥ ८४९ ॥ इतिनिश्चित्य धर्मवशीकृतमतिः धर्मैस्सार्वज्ञादिधर्मैः वशीकृतमतिः । धर्मेणपुण्येनवशीकृतमतिरिरितिध्वनिः ॥ ८५० ॥ अधुनामायावाद्युक्तार्थकथने निर्गुणैक्य श्रुत्योःपरस्परविरोधेनाप्रामाण्यंस्यादितिभीता स्वप्रामाण्यसंपादकमेवमतमनुससारेत्याह ॥ अपिचेति ॥ ब्रह्मण्येकत्वाख्यगुण

स्यसत्त्वे ऐक्यवाक्यार्थतयासद्भावे । तइतिमायिनंप्रतिश्रुतेरुक्तिः । तथाचनिर्गुणश्रुतेरर्थशून्यत्वेनाप्रामाण्यंस्यादितिभावः । तद भावे तस्य एकत्वगुणस्याभावे मायावादिमते भावगुणनिषेधकनिर्गुणश्रुत्यासंपादितेंसति शास्त्र मैक्यप्रतिपादकतयाभिमतवा क्यं गत मर्थशून्यमभूदित्यर्थः । तत्रनिमित्तमाह ॥ ऐक्यमिति ॥ यद्यस्मा देकत्वमैक्यमितिपर्यार्य स्तस्माद्गतमितिपूर्वेणान्व यः ॥ ८५१ ॥ इदानींसाहित्यमुद्रयाफलितमाह ॥ सुंदोपसुंदेति ॥ मायामततिलोत्तमा मायावादिमताख्यतिलोत्तमा तिलो

सुंदोपसुंदन्यायेननिर्गुणैक्यश्रुती मिथः ॥ विरोधेन हते कुर्यान्मायामततिलोत्तमा ॥ ८५२ ॥ इत्याद्यालो च्यनैर्गुण्यश्रुतिरैक्यश्रुतिंसखीं ॥ आदायभारतीप्राणनाथंशरणमीयुषी ॥ स्वमिथ्यात्वभयाभावात्तदुक्ता र्थेष्ववर्तत ॥ ८५३ ॥ विद्वत्प्रयोगबाहुल्याच्छब्दस्यार्थोभिधीयते ॥ पदलभ्यत्वतोनैवयद्वातद्वानिगद्यते ॥ ८५४ ॥ नहिपंकजशब्देनभेकंलोकोनुमन्यते ॥ किंवासुवर्णशब्देनवह्निःकेनापिकथ्यते ॥ ८५५ ॥

त्तमाख्याप्सरःस्त्री स्वार्थेपरस्परविरोधमुत्पाद्य सुंदोपसुंदौघातयामासेतिपौराणिकी क( प्र )था । तदुक्तार्थेषु तेनमध्वमुनिना उक्तार्थेषु त्रिगुणवर्जितत्वरूपसादृश्याद्यर्थेषु अवर्ततेतिसंबंधः । अविरुद्धार्थांतरकथनेपि जगत्सत्यत्ववादिनःतस्यमतेस्वमिथ्या त्वाभावात् जीवन्भद्राणिपश्यतीतिन्यायेन तमेवानुससारेतिभावः ॥८५२॥८५३॥ प्रकारांतरेणापिनिर्गुणपदस्यहरिरेवार्थइत्याह ॥ विद्वदिति ॥ पदलभ्यत्वतः पदसमासलभ्यत्वतः । यद्वातद्वा अप्रामाणिकमित्यर्थः ॥ ८५४ ॥ तत्रदृष्टांतमाह ॥नहीति॥

पंकाज्जातःपंकजइतियोगसंभवेपि भेकंमंडूकं । दृष्टांतांतरमाह ॥ किंचेति ॥ सुष्टुवर्णोयस्येतिव्युत्पत्तिसंभवेपि वह्निःकथ्यतेकिं वेतिसंबंधः । पदयोगसंभवेपिभेकादौविद्वत्प्रयोगाभावात् नतत्पदंप्रयोक्तुंशक्यतइतिभावः॥ ८५५ ॥ अशब्दे तेतव शब्दावाच्ये ॥ ८५६ ॥प्रयोगोदर्शितः । एकोदेवस्सर्वभूतेषुगूढइतिश्रुत्या देवत्वादिगुणविशिष्टेहरावेवनिर्गुणपदश्रवणात् । हरिस्तुनिर्गुणस्साक्षादितिस्मृतौ स्पष्टंहरावेवनिर्गुणपदप्रयोगाच्च । सनिर्गुणशब्दः बलात्प्रयोगमनपेक्ष्य केवलं निर्गतागुणायस्मादितियोग

अशब्देतेप्रयोगोनप्रयोगबहुताकुतः ॥ ८५६ ॥ श्रौतस्मार्तप्रयोगश्चहरावेवप्रदर्शितः ॥
बलात्त्वया स नीतश्चेत्कूर्मरोम्ण्यपरोनयेत् ॥ ८५७ ॥ तत्तत्पदार्थसामर्थ्यानुपमर्देन
शब्दतः ॥ अर्थोबोध्योनशब्दस्यसत्त्वादर्थोपमर्दनं ॥ ८५८ ॥ गुरौगुरुपदंहिस्यादुपदेशा
दिकैर्गुणैः ॥ भारेणतुशिलायांस्यात्कल्पनायांबहुत्वतः ॥ ८५९ ॥ ॥

बलात्नीतश्चे त्सर्वधर्मशून्येतवब्रह्मणिप्रयुक्तश्चेत् अपरः त्वत्प्रतिवादी कूर्मरोम्ण्यपिनयेत् सर्वधर्मशून्येतुच्छेपिसुवचत्वात् । विद्वत्प्रयोगाभावात् नतन्निर्गुणपदार्थइतिचेत्समंप्रकृतेपीतिभावः ॥ ८५७ ॥ नन्वस्तुहरौनिर्गुणपदप्रयोगः तथापितेनैवतस्मिन्सर्वधर्मशून्यत्वरूपोर्थोपिसेत्स्यतीत्यतआह ॥ तत्तत्पदार्थेति ॥ ८५८ ॥ तत्रदृष्टांतमाह ॥ गुराविति ॥ उपदेष्टरिगुरौ प्रयुक्तंगुरुपदं तस्मिन् विद्याभावाख्यलाघवमेवप्रतिषेधति । नतुतद्गतभाराभावाख्यलाघवमप्युपमर्दयति । नाप्येकत्वरूपलाघवं । शिला

यांचप्रवृत्तंगुरुपदं तस्यांभाराभावाख्यलाघवमेवप्रतिषेधति । नतु तन्निष्ठविद्याभावाख्यलाघवमप्युपमर्दयति । नाप्येकत्वरूपलाघवं । कल्पनायांचप्रयुक्तंगुरुपदं तस्यामेकत्वरूपलाघवमेवप्रतिषेधति । नपुनर्विद्याभावाख्यलाघवं भाराभावरूपलाघवंचोपमर्दयति । एवंहरौप्रयुक्तंनिर्गुणपदमपि संकोचमाश्रित्य तस्यायोग्यगुणत्रयमेवनिषेधति । नतुतद्गतसार्वज्ञादिगुणमप्युपमर्दयतीति भावः । कथमन्यथा अपशूद्राधिकरणेक्षत्रियेप्रयुक्तशूद्रशब्देन नतद्गतक्षत्रियत्वोपमर्दनं ॥ ८५९ ॥ स्पष्टंदृष्टांतमाह ॥ कन्येति ॥ कन्यकाऽनुदरेत्युक्ते निर्गुणपदसत्त्वेनसर्वथागुणशून्यत्ववत्अनुदरपदसामर्थ्येन सर्वथा उदराभावमर्थंपरिकल्प्य मृतेति

कन्यकानुदरेत्युक्तेकाष्ठंसंयोजयंतिकिं ॥ ८६० ॥ अशोभनगुणैःपूर्णेप्रयुक्तानिर्गुणाभिधा ॥
सुशोभनगुणानेवनिषेधतिनतान्गुणान् ॥ ८६१ ॥ सुशोभनगुणैःपूर्णेप्रयुक्तंतत्पदंहरौ ॥
अशोभनगुणानेवनिषेधतिनशोभनान् ॥ ८६२ ॥ यस्मा त्तत्पुरुषश्श्रेष्ठ स्तस्मा द्गुणसंज्ञया ॥ गुणोऽप्रधानो नेतीशेप्रोक्तासर्वप्रधानता ॥ ८६३ ॥ ॥ ॥

दाहार्थंकाष्ठंसंयोजयंतिकिमित्युपहासः । किंतूदरशब्दस्यसंकोचमाश्रित्य प्रतीतोदरानुपमर्देन स्थूलोदराभावमेवार्थंकल्पयंति । तथानिर्गुणपदस्यापिसंकोचमाश्रित्य श्रौतसार्वज्ञादिगुणानुपमर्देनेन गुणत्रयशून्यत्वमेवार्थोवक्तव्यइतिभावः ॥ ८६० ॥ अधुना निर्गुणपदस्यैव गुणिनिष्ठगुणानुपमर्दकतां तत्राविद्यमानगुणनिषेधकत्वंच सार्वजनीनप्रयोगेनलोकेप्रदर्श्य हरावपियोजयति ॥ अशोभनेति ॥ अशोभनगुणैःपूर्णे दुर्जनबालकादौ ॥ ८६१ ॥ ८६२ ॥ किंच नविद्यंतेगुणायस्येतिसमासादपि गुणोनभ



वती तितत्पुरुषस्यप्रबलत्वात् गुणशब्दस्याप्रधानार्थकत्वाच्च अगुणनिर्गुणादिशब्दैस्सर्वोत्तमोहरिरितिसेत्स्यतीत्याह॥यस्मादिति॥ ॥ ८६३ ॥ अस्तुवाबहुव्रीहिः । तथापि निर्गताः सृष्टिकालेउदराद्बहिष्कृताः गुणाः अप्रधानभूताःब्रह्माद्या यस्मादितिव्युत्पत्त्या निर्गुणपदेनैवगुणसिद्धिरित्याह ॥ अप्रधानमिति ॥ ८६४ ॥ अधुना भागवते हरौप्रयुक्तनिर्गुणपदस्य त्रिगुणवर्जितत्वम

अप्रधानंजगदिदंसृष्टौयस्माद्विनिर्गतं ॥ सनिर्गुणोहरिस्सर्वस्रष्टृत्वाख्यमहागुणः ॥ ८६४॥ शिवश्शक्तियुतश्शश्वत्रिलिंगोगुणसंवृतः ॥ वैकारिकस्तैजसश्चतामसश्चेत्यहंत्रिधा ॥ ८६५ ॥ ततोविकारा अभवन्षोडशामीषुवर्त्मसु ॥ उपधावन्विभूतीनांसर्वासामश्नुतेगतिं ॥ ८६६ ॥ हरिस्तुनिर्गुणस्साक्षात्पुरुषःप्रकृतेःपरः ॥ ससर्वदृगुपद्रष्टा तंभजन्निर्गुणोभवेत् ॥ ८६७ ॥ इतिभागवतेप्रोक्तोहरिरेवहिनिर्गुणः ॥ समस्तगुणसंपूर्णश्श्रुत्यास्मृतिसमार्थया ॥ केवलोनिर्गुणश्चेतिव्यापीदेवस्सकथ्यते ॥ ८६८ ॥
अतस्त्रिगुणशून्यत्वाद्गुणसर्वस्वबृंहितः ॥ सएवनिर्गुणंब्रह्म शुद्धंब्रह्मसएवनः ॥ ८६९ ॥

र्थं तत्रस्थयुक्तिभिरेवसमर्थ्य तत्समाख्ययाश्रुतेरपिसएवार्थइत्याह ॥ शिवश्शक्तियुतइत्यादिना ॥ हि यस्मात् समस्तगुणसंपूर्णोहरिरेव भागवते निर्गुणःप्रोक्तः तस्मात् स्मृतिसमार्थया समानार्थया व्यापीसएवदेवः केवलोनिर्गुणश्चेतिकथ्यते ॥८६५॥ ॥ ८६६ ॥ ८६७ ॥ ८६८ ॥ अतश्श्रुतिस्मृत्योरेकार्थत्वनियमात् सएव हरिरेव निर्गुणंब्रह्म । केवलइत्यस्यार्थःशुद्धमिति ।

नोस्माकंतत्ववादिनां ॥ ८६९ ॥ निर्गुणोभवेदित्युक्तोमहामोक्षो यत्पादभजनात् तंभजन्नित्यत्रोक्तात् । सहरिःकिलेत्युपहासः । गंगायत्पादसंगतस्सद्यश्शुद्धिकरीतितु आपस्तेंघ्र्यवनेजन्यस्त्रींल्लोकान्शुचयोपुनन्नित्यादिभागवतोक्तवाक्यांतरार्थसंग्रहइतिद्रष्टव्यं ॥ ८७० ॥ निर्गुणोभवेदित्यत्रफलत्वेनोक्तनिर्गुणत्वंच त्रिगुणवर्जितत्वमेवेति बहिरंगांतरंगयुक्तिभ्यांसाधयति ॥ मोक्षस्येत्या दिना ॥ ८७१ ॥ ८७२ ॥ सगुणस्य सार्वज्ञादिगुणयुक्तस्यहरेः प्रीत्यालभ्यमोक्षस्य । तद्वत् हरिवत् । यथा हरिस्सगुणएव

नैर्गुण्याख्योमहामोक्षोयत्पादभजनाद्भवेत् ॥ शबलंब्रह्मसकिल गंगायत्पदसंगतः॥ सद्यश्शुद्धिकरी नृणां सोशुद्धःकिलदुर्धियां॥८७०॥ मोक्षस्यनिर्गुणत्वंचत्रैगुण्योज्झिततैवहि ॥ समस्तधर्मशून्यत्वेमो क्षायप्रयतेतकः ॥ ८७१ ॥ धर्माययशसेऽर्थायज्ञानाययततेजनः ॥ लुब्ध्यैसमस्तभाग्यानांकोनून्मत्तः प्रवर्तते ॥ ८७२ ॥ सगुणप्रीतिलभ्यस्यनैर्गुण्यंतद्वदेवहि ॥ यथोपास्तेतथैवासौभवतीतिहिवेदवाक् ॥८७३॥नहिनिर्गुणशब्दोयंचिन्मात्रस्यविवक्षया॥ भाविनैर्गुण्यदृष्ट्यावाशिवस्यापिप्रसक्तितः॥८७४॥

त्रिगुणशून्यत्वान्निर्गुणः तद्वत्स्यादितिभावः । तत्रश्रौतयुक्तिमाह ॥ यथेति ॥ ८७३ ॥ अधुना हरिस्तुनिर्गुणःप्रोक्तइत्यत्रोक्तनि र्गुणशब्दस्यापि गुणत्रयशून्यत्वार्थकत्वेयुक्तिमाह ॥ नहीति ॥ चिन्मात्रस्य विशिष्टांतर्गतविशेष्यांशचिन्मात्रस्य । भाविनैर्गुण्य दृष्ट्या भविष्यन्मुक्तिकालीननैर्गुण्यविवक्षयावानहीतियोजना । कुतोनेत्यतआह ॥ शिवस्यापीति ॥ एतादृशनिर्गुणत्वस्यत

त्रापिसुवचत्वेन हरेरेवविशिष्यनिर्गुणत्वकथनेकारणाभावात् ॥ ८७४ ॥ अतः विशिष्यहरौप्रयोगेकारणांतरस्यवक्तव्यत्वात् (अ यंनिर्गुणशब्दः । तेनत्रिगुणवर्जितत्वार्थकनिर्गुणशब्दवाच्यत्वेन) मुक्तोपि तेन त्रिगुणवर्जितत्वेनप्रवृत्तिनिमित्तेन सः निर्गुणइति शब्दोयस्यासौतच्छब्दः । गुणबद्धाश्शिवादयः । अतएवसगुणशब्दवाच्याः ॥ ८७५ ॥ युक्त्यंतरंचाह ॥ प्रकृतेरिति ॥ अत द्गुणः प्रकृतिगुणरहितः अतएवनिर्गुणइतियोजना । तस्याः प्राकृताहंकृते र्गुणास्सत्वादयोयस्यासौतद्गुणः शिव स्सगुणइतियो

अतोनिर्गुणशब्दोयंहरौत्रिगुणवर्जनात् ॥ मुक्तोपितेनतच्छब्दोगुणबद्धाश्शिवादयः ॥ ८७५ ॥
प्रकृतेःपारगत्वोक्त्यानिर्गुणोतद्गुणोहरिः ॥ प्राकृताहंकृतेरुक्त्यासगुणस्तद्गुणश्शिवः ॥ ८७६ ॥
इत्येवसर्वथावाच्यंनचेद्व्यर्थेविशेषणे ॥ गुणसंवरणंचोक्तंभवेदावरणैर्गुणैः ॥ ८७७ ॥ संपत्तेः
प्राकृतत्वेनतद्बद्धोपासनेनसा ॥ तद्धीनातुनसेत्याहयावाक्सावक्तिमन्मतं ॥ ८७८ ॥ उमक्रमा
नुगुण्यार्थमर्थोत्रावश्यकोह्ययं ॥ नचेत्प्रक्रमरोधेनवाक्यंस्यान्मत्तभाषितं ॥ ८७९ ॥

जना ॥ ८७६ ॥ विशेषणे प्रकृतेःपरइति त्रिलिंगइति विशेषणे उक्तंगुणसंवृतइत्यत्र ॥ ८७७ ॥ देवासुरमनुष्येषुयेभजंत्यशिवं शिवं । प्रायस्तेधनिनोब्रह्मन्नतुलक्ष्मीपतिंहरिमित्युक्तप्रश्नपरिहारोपयोगित्वेनच शिवस्यप्राकृतगुणसंवृतत्वेनसगुणता हरेस्तद्रहित त्वेननिर्गुणतावक्तव्या । नान्यथेत्याह ॥ संपत्तेरिति ॥ सासंपत्तिः । यावागाह सामन्मतंवक्तीतिसंबंधः ॥ ८७८ ॥ अयं प्रा कृतगुणसाहित्यराहित्यरूपः । प्रक्रमरोधेन उपक्रमविरोधेन ॥ ८७९ ॥ अप्राकृतपुंसः प्रकृतेःपरःपुरुषइतिचोक्तस्यास्यहरे श्चि

न्मात्राकारता अप्राकृतशुद्धचिद्रूपविग्रहता । सः चिन्मात्राकारः सर्वदृगुपद्रष्टेत्याद्युक्तसार्वज्ञादिधर्मा चिन्मात्राकारेप्यविद्यमाना सर्वधर्मच्युतिःकदास्यात् । नकदाचिदित्यर्थः ॥ ८८० ॥ इदानीं निर्गुणशब्दस्यगुणमात्रवैधुर्यार्थकत्वे तद्वाक्यस्थपदानामेवपरस्परविरोधइत्याह ॥ ससर्वदृगिति ॥ ८८१ ॥ निर्गुणइतिनिषेद्धुं एकोदेवइत्यादिरनुवादइत्यतआह ॥ निषेद्धुमिति ॥ यद्य

किंचाप्राकृतपुंसोस्यचिन्मात्राकारताध्रुवा ॥ सचसार्वज्ञादिधर्मोसर्वधर्मच्युतिःकदा ॥ ८८० ॥
ससर्वदृगितिप्रोक्तोवाक्येस्मिन्नेवसद्गुणः ॥ एकस्साक्षीदेवइतिश्रुतिवाक्येपिसद्गुणः ॥ अतस्त्व
दर्थकथनेस्वविरुद्धैववाग्भवेत् ॥ ८८१ ॥ निषेद्धुमनुवादश्चेत्सिद्धंममसमीहितं ॥ अनूद्यतेनि
र्गुणत्वमेकइत्यादिकोक्तितः ॥ निषेद्धुमितियच्छक्यंवक्तुंतद्वन्मयापिहि ॥ ८८२ ॥ अभावस्या
निषेधात्माभावोपिहिविदांमते ॥ बहुत्वान्मन्निषेधानांप्रबलत्वंचविद्यते ॥ ८८३ ॥ समुच्चिनोति
किंश्रौतश्चशब्दोन्यनिषेधने ॥ यद्येकतापक्षपातीमध्यस्थातिक्रमस्तदा ॥ ८८४ ॥

स्मात्तस्मात्सिद्धमितिसंबंधः ॥ ८८२ ॥ ननुनञोभावाद्भवतांकथंनिषेधइत्यतआह ॥ अभावस्येति ॥ बहुत्वादुक्तरीत्या एकइत्यादिगुणविधायकविशेषणानांसर्वेषामपिनिर्गुणनिषेधरूपत्वात् ॥ ८८३ ॥ निर्गुणइत्यत्रदूषणांतरंचाह ॥ समुच्चिनोतीति ॥  श्रौतः निर्गुणश्चेत्युक्तः । अन्येनिषेधने एकत्वादिकैवल्यांतसकलनिषेधने । चशब्दैनैक्यवादानुकूलत्वादेकत्वगुणस्समुच्चीयतइतिचेत् तर्हिपरस्परविरोधस्संकोचोवादुष्परिहरः । दूषणांतरमाह ॥ यदीति ॥ एकतापक्षपाती एकत्वगुणसमुच्चायकइतियावत् । मध्यस्थानां कैवल्यादिदेवत्वांत तदुभयमध्यस्थगुणानां अतिक्रमः उल्लंघनं । समीपस्थगुणानुल्लंघ्यातिदूरस्थगुणसमुच्चयोऽनुचितइतिभावः ॥ ८८४ ॥ दूषणांतरमाह ॥ संख्यारूपइति ॥ सा एकता । परे देवत्वादयः धर्ममात्रगुणाः पदार्थधर्मतामात्रेणगुणशब्दवाच्याः । स्वनिर्गुणशब्दः प्रबलेन मुख्यगुणेन निर्गुणपदादवश्यनिषेध्येन कृतस्नेहः तंसमुच्चिन्वन्नित्यर्थः । सःचशब्दः । दुर्बलात् गुणशब्दार्थत्वसाम्येनधर्ममात्रात् अतिविरोधंकर्तुंअसमर्थादित्यर्थः । नगच्छति नापयाति । अतिविरोधिनमपि

संख्यारूपोगुणस्साहिधर्ममात्रगुणाःपरे ॥ प्रबलेनकृतस्नेहोदुर्बलान्नसगच्छति ॥ स्थानभ्रंशं
स्वार्थनाशंसहतेनहिसोव्ययः ॥ ८८५ ॥ एकत्वरूपमैक्यंचनिषेध्यंस्यात्कथंतव ॥ एकपात्रस्थ
पक्वान्नेपाकश्चैकविधोभुवि ॥ अतस्तत्तद्गुणौघेषुत्यागोत्यागश्चनेष्यते ॥ ८८६ ॥

समुच्चिन्वन्नविरोधिनस्तुसर्वथासमुच्चिनुयादितिभावः । नह्यत्यंतविरोधिनंव्याघ्रंस्वगोष्ठेसंगृह्णंतीगौ स्स्ववत्सानेवमुंचतीतिक्वापि दृष्टं । किंच अव्ययः अव्ययसंज्ञःचशब्दः अतिस्थिरइतिध्वनिः । स्थानभ्रंशं स्वस्थानादन्यत्रगमनं स्वार्थनाशं समुच्चयाख्यस्वरसार्थपरित्यागंनसहते । व्ययशीलस्यैवस्वार्थनाशोनाव्ययस्येतिध्वनिः । अतस्स्वेतरनिषेधेचशब्दवैयर्थ्यमपरिहार्यमितिभावः ॥ ८८५ ॥ स्वेतरसकलनिषेधेदूषणांतरंचाह ॥ एकत्वरूपमिति ॥ तर्हितन्मात्रानिषेधोस्त्वित्याह ॥ एकपात्रेति ॥ ८८६ ॥ यु

त्त्यंतरंचाह ॥ आदिरिति ॥ आदिःएकत्वगुणः अंत्येन निर्गुणत्वेन सहितः तेनाऽनिषिद्धइतियावत् । तन्मध्यपतितगुणान् देवत्वादीन् संगृह्णाति आत्मवदनिषिद्धान्करोति । अंततोविचार्यमाणे अंत्यो निर्गुणत्वरूपधर्मएव न । सावकाशनिरवकाशयोर्मध्येसावकाशस्यैवान्यथाकार्यत्वादितिभावः । तत्रदृष्टांतमाह ॥ प्रत्याहारमिति ॥ सहि आदिमध्यवर्णान्संगृह्यांत्यमेववर्णमित्संज्ञयालोपयति । तद्वदितिभावः ॥८८७॥ निर्गुणइत्यत्र नञःसंकोचेन त्वदभिलषितैकत्वगुणरक्षणे मदभिलषितगुणानांप्रथम

आदिरंत्येनसहितस्तन्मध्यपतितान्गुणान् ॥ संगृह्णा त्यंततोनांत्यःप्रत्याहारमनुस्मर ॥ ८८७ ॥
दूरस्थमर्त्यपानीयपानार्थसेतुभेदने ॥ तृषितानेकमध्यस्थतृप्तेःपश्चात्सतृप्यति ॥ ८८८ ॥ तव
प्रियैक्यरक्षार्थसंकोचेतुनञःकृते ॥ ममप्रियगुणौघस्यरक्षापूर्वंभविष्यति ॥ ८८९ ॥ इयंराजवधूः
कामचारावारांगना नते ॥ स्वेच्छानुसारसंचारोमानच्छेदायतेभवेत् ॥ ८९० ॥

तएवरक्षास्यादित्यत्र लौकिकंदृष्टांतमुक्त्वा दार्ष्टांतिकमपियोजयति ॥ दूरस्थेति ॥८८८॥८८९॥ किंच ब्रह्मसूत्रानुसारेणश्रुतिर्व्याख्येयानस्वेच्छानुसारेण । सूत्रंच भगवद्गुणानेवांगीकरोतिनप्रतिषेधति । अतश्श्रुतिरपितथैवव्याख्येयेतिसाहित्यमुद्रयाऽऽह ॥ इयमितिं ॥ इयंश्रुतिः । राजवधूः राज्ञोवधूरिववधूः तेनैवभर्तुःपोष्येत्यर्थः । कामचारेवकामचारा स्वकपोलकल्पितेतिया वत् । ते वारांगनेववारांगना स्वार्थव्यभिचारवती । पौरुषेयविद्येतियावत् । तेमानच्छेदाय अभिमानच्छेदाय । श्रुतेरेकदेशस्या

प्रामाण्ये श्रुतित्वाविशेषादपरभागस्याप्यप्रामाण्यंस्यादितिप्रमाणच्छेदायच। यद्यस्मात्। एकत्यागंनमन्यतइतिसंबंधः॥८९०॥८९१ व्यासोनमन्यतेचेत् वेदस्यकिमायातमित्यतआह ॥ वेदेति ॥ वेदार्थंवेदेतिसंबंधः । तत्रहेतुगर्भंविशेषणमाह ॥ वेदव्यासइति ॥ वेदानांव्यासोविस्तारोयस्मात्सइत्यर्थः । स्पष्टंचनिमित्तमाह ॥ सहीति ॥ हि यस्मात् श्रुतिसत्याः कंठसूत्रस्थानीयब्रह्मसूत्रकृत् तस्माद्वेदार्थंवेदेतिपूर्वेणसंबंधः ॥ ८९२ ॥ युक्त्यंतरेणापि एकइत्यादिविधेरेवप्राबल्यमित्याह ॥ नञइति ॥ आर्थे निर्गुणइति

व्यासश्श्रौतगुणांभोधौनैकत्यागंचमन्यते ॥ सर्वधर्मोपपत्तेश्चेत्याहयत्स्वयमंजसा ॥ ८९१ ॥

वेद वेदार्थमखिलं वेदव्यासस्सतांपतिः ॥ सहिश्रुतिसतीकंठसूत्रसूत्रकृदीश्वरः ॥ ८९२ ॥

नञोविभज्ययोगेतुश्रोतंतत्तन्निषेधनं ॥ समस्तनञ्विभागस्यायोगादार्थंनिषेधनं ॥ ८९३ ॥

अतस्तवार्थिकादस्मान्निषेधान्मेविधिश्श्रुतः ॥ बलीयांस्तन्निषेधायदुर्बलोसौनशक्नुते ॥८९४॥

एकइत्यादिशब्दानांनञ्योगादर्शनाच्छ्रुतौ ॥ संभावितक्रियायोगाद्भवतीत्येवयोजना ॥ ८९५ ॥

नचेद्वाक्यमपूर्णंस्यात्समस्तपदसंस्थितः ॥ निषेधार्थोयतश्शब्दोबुधैश्छेत्तुंनशक्यते ॥ ८९६ ॥

सामान्यतोगुणनिषेधे गुणत्वाक्रांतत्वादेकत्वादिगुणानांनिषेधस्स्यादित्यर्थात्सिद्धमित्यर्थः ॥ ८९३ ॥ मेविधिः एकोभवति देवो भवतीत्यादिविधिः श्रुत स्साक्षाच्छ्रुतिसिद्धोनत्वार्थिकः । असौनिर्गुणशब्दः ॥ ८९४ ॥ एकत्ववानेकइत्यादिना एकादिशब्दैनै वविधिलाभेपि युक्त्यंतरेणचतमाह ॥ एकइति ॥ यतोयस्मात्। निषेधार्थश्शब्दः नञ्शब्दः । अतः वाक्यमपूर्णं । क्रियाभा

वादित्यर्थः ॥ ८९५ ॥ ८९६ ॥ पुनः विधानानंतरं तेषांगुणानां । अतः विहितगुणनिषेधायोगात् ॥ ८९७ ॥ अनुवादकपक्षेदू
षणांतरंचाह ॥ अनुवादकेति ॥ आदिपदेननञोग्रहणं । तत् यत्तदितिपदद्वयं । एकवाक्यनिषेधे नसुरांपिबेदित्यादिके नञ्
नञेव लिंगं अनुवादकलिंगं ॥ ८९८ ॥ अधुना मानसिद्धानुवादोवा अमानसिद्धानुवादोवेतिविकल्प्य आद्यंदूषयति ॥ मान
सिद्धेति ॥ तेनैव प्राचीनप्रमाणेनैव । ते निषेधश्चन । प्रमाणसिद्धानांब्रह्मवन्निषेधायोगात् । द्वितीयंदूषयति ॥ मानामान

पुनस्तेषामेवबाधेवाक्यंस्यान्मत्तभाषितं ॥ अतस्त्रिगुणशून्यत्वान्निर्गुणत्वंबलाद्भवेत् ॥ ८९७ ॥ अनु
वादकलिंगंचयत्तदित्यादिकंनहि ॥ भिन्नवाक्यतयायत्रनिषेधस्तत्रतद्ध्रुवं ॥ एकवाक्येनिषेधेतुनञ्लि
गमितरत्रतत् ॥ ८९८ ॥ मानसिद्धानुवादेतुतेनैवस्युर्गुणाहरेः ॥ निषेधश्चनते मानामानतादूषणंश्रृणु
॥ ८९९ ॥ निर्गुणत्वेस्थिरेतेनमानानांस्यादमानता ॥ तत्सत्त्वेचाविरुद्धंते निर्गुणत्वंस्थिरंभवेत्
॥ ९०० ॥ निर्गुणोक्तौगुणोक्त्यैवनिषेध्यस्यानुवादनात् ॥ एकत्वाद्यनुवादत्वकथाचेयंवृथातव ॥ ९०१ ॥

तेति ॥ निर्गुणत्वे गुणनिषेधरूपे स्थिरे प्रामाणिकेसतिहि तेन गुणनिषेधेन । मानानां गुणप्रतिपादकप्रमाणानां । अन्यथाऽ
बाधितार्थकत्वेनतेषामप्रामाण्यायोगात् । तत्सत्त्वे गुणप्रतिपादकप्रमाणानामप्रामाण्यसत्त्वे । अन्यथा प्रामाणिकनिषेधायोगेन ॥ १२१ ॥
त्वदभिलषितनिर्गुणत्वमेवनसिद्ध्येत् । तथाचान्योन्याश्रयस्स्यादितिभावः ॥ ८९९ ॥ ९०० ॥ अधुनानिर्गुणइत्यत्र गुणपदेनैव

गुणमनूद्यनिषेधात् पदांतरेणानुवादोव्यर्थइत्याह ॥ निर्गुणोक्ताविति ॥ ९०१ ॥ अधुनावेदेतरप्रमाणप्राप्तिमादायानुवादत्व
मुच्यते उतसमयप्राप्तिमादायवा अथवावेदप्राप्तिमादायवेतिविकल्प्य पक्षत्रयेपिदूषणमाह ॥ वेदैकप्राप्तेत्यादिना ॥ अमान
त्वार्हेत्यनेन वेदेतरप्रमाणानांकदाचिदप्रामाण्यमपिसंभावितं वेदस्यतुनकथंचिदितिध्वनयति ॥ ९०२ ॥ तेतवापि एषसर्वज्ञइ
त्यादिसार्वज्ञादिभगवद्धर्मप्रतिपादकवाक्यार्थे असंदेहा दयंवावाक्यार्थः अन्योवेतिसंदेहाभावात् समयप्राप्तता केवलसमयेनैव

वेदैकप्राप्तसार्वज्ञपूर्वसर्वगुणाहरेः ॥ अमानत्वार्हवेदान्यमानप्राप्तोनकश्चन ॥ ९०२ ॥
वाक्यार्थेतेप्यसंदेहात्समयप्राप्ततापिन ॥ कथमित्थमपूर्वार्थागुणोक्तिरनुवादिका
॥ ९०३ ॥ श्रुतिप्राप्तस्यचश्रुत्यानिषेधेमानताहृता ॥ एतद्बाधे सावकाशेनिर्गुणैक्याग
मेतव ॥ विश्वासस्स्यात्कथंनृणांगजेमग्नेकगर्दभः ॥ ९०४ ॥ ॥

प्रसक्ततापिन । स्पष्टवाक्येनैवप्रसक्तिसद्भावात्अगतिकागतिःकिमर्थमाश्रयणीयेतिभावः । अपूर्वार्था वेदेतरप्रमाणासिद्धार्था
कथमनुवादिकेतियोजना । अन्यथानिर्गुणवाक्यस्याप्यनुवादकत्वप्रसंगात् ॥ ९०३ ॥ दूषणांतरमाह ॥ श्रुतिप्राप्तस्येति ॥
मानता निषेध्यश्रुतेःप्रमाणता । एतद्बाधे निरवकाशसगुणश्रुतेरप्रामाण्ये सावकाशे त्रिगुणवर्जितत्वसादृश्यादिनासावकाशे
निर्गुणैक्ययोरागमे । निरवकाशत्वेनप्रबलश्रुतीनांअप्रामाण्ये दुर्बलत्वच्छ्रुतेरप्रामाण्यंकिंवक्तव्यमितिभावः । तत्रदृष्टांतमाह ॥

गजइति ॥ ९०४ ॥ इदानीमस्तुवाअनुवादकत्वं तथापि काहानिरितिदृष्टांतमुखेनाह ॥ हिमस्येति ॥ अग्निर्हिमस्यभेषज मितिश्रुत्येत्यर्थः । एकामानता उभयोरन्यतरस्याप्रमाणताभवेत्किमितिसंबंधः । औद्धत्याद्भवेदितिवदंतंप्रत्याह ॥ वह्नेरशीत तावेति ॥ अप्रामाण्यस्यार्थायाथार्थ्यव्याप्तत्वेन अनुवादकश्रुतेरप्रामाण्येवह्नेरशीततावश्यंभवेदितिभावः । अतः अनुवादेप्य र्थाविघातात् । अनुवादमात्रेण निषेधशून्यानुवादेन । बहुप्रमाणसंवादात् प्रत्यक्ष श्रुति रूपानेकप्रमाणसंवादात् ॥९०५॥९०६॥

हिमस्यभेषजंह्यग्निरितिश्रुत्याप्यनूदिते ॥ किमेकामानता वह्नेरशीततावा
भवेद्धद ॥ ९०५ ॥ अतोनुवादमात्रेणनार्थस्यस्याद्विदूषणं ॥ बहुप्रमाणसं
वादाद्दार्ढ्यमेवभविष्यति ॥ ९०६ ॥ निषेद्धुमनुवादश्चमानसिद्धस्यनेष्यते ॥
निषेधएवान्यगामीस्याददहिंसाश्रुतौयथा ॥ ९०७ ॥ दृढप्रत्यक्षसिद्धौष्ण्यं
यानुवक्तिश्रुतिस्सती ॥ नमुंचतिनिषेद्धुंसायथायागवियोगभीः ॥ ९०८ ॥

निषेद्धुमनुवादइतिपक्षमाशंक्यदूषयति ॥ निषेद्धुमिति ॥ मानसिद्धस्य । निरवकाशमानसिद्धस्य । अन्यगामी श्रुतिविहितसा र्वज्ञादिगुणेभ्योन्यगुणत्रयविषयः । तत्रदृष्टांतमाह ॥ अहिंसाश्रुतौयथेति ॥ यथा नाहिंस्यात्सर्वाभूतानीतिसामान्यश्रुतिर्वि शेषश्रुतिविहितयाज्ञीयहिंसातिरिक्तविषयातथेतिभावः । युक्त्यंतरेणापिनिषेद्धुमनुवादोनघटतइतिसदृष्टांतमाह ॥ दृढेति ॥ सा

अग्निर्हिमस्यभेषजमितिश्रुतिः । यागवियोगात्भीर्यस्यास्सा स्वानूदितहिमभेषजत्वस्यनिषेधे वह्नेश्शीतलतापत्त्यातस्मिन्होमाख्य यागेवियोगस्स्यादितिभीतेतियावत् ॥ ९०७ ॥ ९०८ ॥ दार्ष्टांतिकेपियोजयति ॥ एवमिति ॥ एवं सार्वज्ञदिव्येंद्रियशरीरत्वा दिगुणनिषेधे वक्तुरेवाभावप्रसंगेन स्वोन्मूलनमेवस्यादितिभीत्या सा निर्गुणत्वश्रुतिः श्रौतं सार्वज्ञादिकं ननिषेधति । श्रौतमिति युक्त्यंतरसूचनायोक्तं ॥ ९०९ ॥ श्रौतमित्यनेनसूचितांयुक्तिमाह ॥ वंशस्येति ॥ वंशस्ययद्दशार्धंतत्स्वात्मनोपिभवेदितिलोक

एवंहरेर्हिसार्वज्ञंसाश्रौतंननिषेधति ॥ दिव्येंद्रियशरीरत्वंदिव्येच्छांचकृपालुतां ॥ नि
त्यत्वंब्रह्मगुरुतांनित्यानंदत्वमेवच ॥ ९०९ ॥ वंशस्ययद्दशार्धंतत्स्वात्मनोपिभवेदिति ॥
श्रौतस्यास्यत्यागसाम्यात्स्वार्थत्यागप्रसक्तितः ॥ ९१० ॥ उपदेष्टुरभावेनस्वाप्रचाराच्चशं
किता ॥ जगत्कर्तुरभावेनचाध्येतॄणामभावभीः ॥ ९११ ॥ सर्वशक्तेरभावेचदैत्योपद्र
वशंकिता ॥ सर्वेश्वरत्वाभावेचब्रह्मासाध्याकृतेर्भयात् ॥ ९१२ ॥ ॥

सिद्धन्यायेनेत्यर्थः । अस्य सार्वज्ञादेः । स्वार्थनिर्गुणत्वत्यागप्रसक्तितः ॥ ९१० ॥ एवमितिसाम्येनोक्तमर्थंप्रपंचयति ॥ उपदे ष्टुरिति ॥ पूर्वोक्तसार्वज्ञाद्यभावे उपदेष्टुरभावेन जगत्कर्तुरभावे जगदंतःपातिनामध्येतॄणामभावात् भीःयस्याःसा । भगवतस्सर्वश क्तेरभावे दैत्योपद्रवशंकिता हयग्रीवमधुकैटभादिदैत्योपद्रवशंकिता । ब्रह्मासाध्यस्यकार्यस्य अकृतेः करणासंभवात् ॥ ९११ ॥ ९१२ ॥

इत्थंपूर्वोक्तप्रकारेण । अतस्स्वस्यैवप्रयोजनसद्भावात् । एषामुक्तभगवद्गुणाना ॥ ९१३ ॥ व्यावहारिकगुणांगीकाराद्धकृत्वादिकं संभवतीतिपरस्याशांनिराकरोति ॥ प्राक्सृष्टेरिति ॥ जगत्सृष्टेःप्राक् सतोविद्यमानस्य तस्य सार्वज्ञादिगुणसमूहस्य । जगत्सृ ष्ट्युपयोगिसार्वज्ञादिगुणानांसृष्टेःपूर्वंविद्यमानत्वादितियावत् । तथासतिब्रह्मणोप्यज्ञानकार्यत्वंस्यादितिभावः । नित्या मनाद्यनं तकालीनां । यत्सार्वज्ञादिकंतस्यबाधांनसेहइतियोजना । सदाअनंतवेदधारणस्यसदासर्वज्ञत्वंविनाअयोगादितिभावः ॥ ९१४ ॥

इत्थंश्रौतगुणेभ्योयच्छ्रुत्याएवप्रयोजनं ॥ अत(स्ते)एषामभावंसाखाभावंमनुतेसती ॥ ९१३ ॥
प्राक्सृष्टेश्चसतस्तस्यसेहे नाज्ञानकार्यतां ॥ बाधांनसेहेनित्यांस्वांनित्यंधर्तुंयदीप्सितं ॥ ९१४ ॥
अमुख्यनित्यतायांचब्रह्मतेस्यात्तथैवहि ॥ विष्ठितंब्रह्मयावत्तेतावद्वाक्किलविष्ठिता ॥ ९१५ ॥
उपसर्गस्तयोस्सर्गोनोत्सर्गश्चेतिशंसति ॥ तस्माच्छ्रुतेर्हिविच्छेदेबधिरंब्रह्मतेभवेत् ॥ ९१६ ॥
बधिरंचनतज्जीवेत्सलज्जमितिमेमतिः ॥ ९१७ ॥ ॥ ॥ ॥

बहुकालीनत्वमेवश्रुतेर्नित्यत्वं नतुसार्वकालीनत्वमित्याशंकांनिराकरोति ॥ अमुख्येति ॥ किलेत्यनेन यावद्ब्रह्मविष्ठितंतावतीवा गितिश्रुतिंसूचयति ॥ ९१५ ॥ उपसर्गः वीत्युपसर्गः । तयोर्वाग्ब्रह्मणोः सर्गस्सृष्टिरुत्सर्गोनाशः । सृष्टिनाशौविनासर्वदायास्थि तिः सैवविशेषस्थितिः । उपसंहरति ॥ तस्मादिति ॥ विच्छेदे वक्तृश्रोतृणामभावादिनाअभावे । तेब्रह्म बधिरमिवबधिरं । यथा बधिरश्श्रुतिशून्यः तथाब्रह्मापिस्वप्रतिपादकश्रुतिशून्यमित्यर्थः ॥ ९१६ ॥ सलज्जं शशश्रृंगसाम्येनलज्जयासहितं तद्ब्रह्म

नजीवेदितिसंबंधः । प्रतिपादकश्रुत्यभावेब्रह्मणएवाभावस्यादितिपरमार्थः । सलज्जःपुरुषस्स्वबाधिर्येसतिनजीवेदितिध्वनिः ॥ ९१७ ॥ अतः उक्तविधयाब्रह्मगुणानामावश्यकत्वात् । भोकृत्व मानंदभोक्तृत्वंयज्ञभोकृत्वंवा । फलदातृत्वं स्वर्गापवर्गफल दातृत्वं । भगवतः ज्ञानयज्ञ कर्मयज्ञाख्ययज्ञभोक्तृत्वाभावेतत्फलदातृत्वाभावेच ब्रह्मकांडकर्मकांडयोर्विफलत्वेनअनुपादेयत्वप्र संगादितिभावः । अन्य त्प्राकृतगुणादिकं ॥ ९१८ ॥ श्रुत्याश्रुत्यंतरप्रामाण्यमेवरक्षणीयमित्येतल्लौकिकदृष्टांतेनप्रदर्शयति ॥

अतःकर्तृत्वभोक्तृत्वफलदातृत्वपूर्वकात् ॥ श्रुत्युक्तसर्वसर्वस्वादन्यत्किंचिन्निषेधति ॥ ९१८ ॥
स्वयंसंकुचितान्नोपिमानीज्ञातिसुखंदिशेत् ॥ अनेकश्रुतिरक्षार्थंपदमल्पानिषेधितत् ॥ ९१९ ॥
निषेधबलवत्त्वेतुभेदवाग्बाधिकातव ॥ तादात्म्यप्रतिषेधत्वंभेदस्याखिलसंमतं ॥ ९२० ॥
अंधानांनास्तितावाक्यैर्बाध्यंस्यादस्तितावचः॥ शून्योक्तिर्ब्रह्मसत्त्वोक्तेर्बाधिकेत्यतिसंकटं ॥९२१॥
विरुद्धार्थमतोबाध्यमविरुद्धंनबाध्यते ॥ अहेःपुच्छंहिकर्शिछ्यान्मुखंछिंदंतिसर्वशः ॥ ९२२ ॥

स्वयंसंकुचितेति ॥ तत्तस्मा त्पदंनिर्गुणपदं अल्पनिषेधि त्रिगुणमात्रनिषेधि ॥ ९१९ ॥ निषेधरूपत्वान्निर्गुणवाक्यंबलवदि त्याशंकांपरिहरति ॥ निषेधेति ॥ तव अद्वैतवादिनः ॥ ९२० ॥ पुनरपिदूषणद्वयमाह ॥ अंधानामित्यादिना ॥ ९२१ ॥ अतः निषेधरूपस्याप्रयोजकत्वात् । विरुद्धार्थं गुणप्रतिपादकश्रुतिविघातकनैर्गुण्यार्थं हिंसकविषाख्यविरुद्धार्थवत्त्वंदृष्टांते

द्रष्टव्यं । तमेवदृष्टांतमाह ॥ अहेःपुच्छमिति ॥ ९२२ ॥ गुणप्रतिपादकवाक्यानिसंगृह्णाति ॥ सर्वेधर्मेत्यादिना ॥ सर्वधर्मे
त्यनेन सर्वधर्मासर्वकर्मेतिश्रुतिमुपादत्ते ॥ ९२३ ॥ ९२४ ॥ ९२५ ॥ श्लोकयं अंगीकार्यमित्यर्थः । सभगवान् भुजंगजित्का
लियमर्दनः । पूर्वोक्तनिर्गुणत्वाख्यसर्पमुखमर्दनशक्तिसूचनायेदंविशेषणं ॥ ९२६ ॥ युक्त्यंतरंचाह ॥ किंचेति ॥ लसत्पदं पूर्वो

सर्वधर्मेषसर्वज्ञस्सर्वस्येशानइत्यपि ॥ श्रुतयस्स्मृतयोगायन्गुणानित्यादयोनाकिं ॥ ९२३ ॥
मय्यनंतगुणेऽनंतेगुणतोनंतविग्रहे ॥ ९२४ ॥ जन्मकर्माभिधानानिसंतिमेंगसहस्रशः ॥
नचक्यंतेनुसंख्यातुमनंतत्वान्मयापिहि ॥ ९२५ ॥ इत्यादिभगवद्वाक्यंश्लोक्यंसहिभुजंग
जित् ॥ ९२६ ॥ किंचानिर्गुणइत्येवपदच्छेदेलसत्पदं ॥ वाक्यंस्यान्नांगविच्छेदस्तस्येत्यतिस
मंजसं ॥ ९२७ ॥ समयप्राप्तनैर्गुण्यत्याजनंचफलंभवेत् ॥ ९२८ ॥ श्रुतिस्स्वोक्तगुणस्थेम्नेनैर्गु
ण्यंप्रतिषेधति ॥ इतिसंगतिरप्यस्तिवाक्यास्याप्येकवाक्यता ॥ ९२९ ॥ किंचनिर्गुणता
वाक्तेगुणमात्रनिषेधने ॥ ज्ञानानंदाद्यभिमतगुणानांस्यान्निषेधिका ॥ ९३० ॥ ॥

त्तराविरुद्धार्थपदं । अंगविच्छेदः निर्गुणपदातिरिक्तसकलवाक्यावयवाप्रामाण्यं । तस्यवाक्यस्य ॥ ९२७ ॥ समयप्राप्तस्य माया
वादिसमयप्राप्तस्यनैर्गुण्यस्यत्याजनं । फल मनिर्गुणइतिपदच्छेदस्यफलं ॥ ९२८ ॥ संगतिः गुणप्रतिपादकभागस्य नैर्गुण्यमते
नविरोधेआशंकिते तदेवनेत्याहेतिसंगतिः ॥ ९२९ ॥ निर्गुणशब्देनगुणमात्रनिषेधने मायावादिनःस्वस्याप्यपेक्षितज्ञानानंदादि

गुणानामभावप्रसंगेन स्वमतविरोधस्स्यादित्याह ॥ किंचेति ॥ ते निर्गुणतावाक् निषेधिकास्यादित्युत्तरेणान्वयः ॥ ९३० ॥
ज्ञानानंदादीनामभेदेननतन्निषेधिकानिर्गुणवागित्याशंकांप्रतिबंद्यापरिहरति ॥ यदीति ॥ नेहनानेतिवाक्यात्भीतागर्भगताभू
त्वाऽभेदिनःसंत्वितियोजना । नेहनानेतिवाक्यबलात्ज्ञानानंदादिवत्सार्वज्ञादीनामप्यभेदसाम्यादितिभावः । भीतोपिकस्यचि
दुदरंप्रविशति तथागुणाअपीतिसाहित्यमुद्रा ॥ ९३१ ॥ अभिन्नत्वेगुणतानस्यादित्यतआह ॥ अनयेति ॥ अनया नेहनानेति

यद्यभिन्नंसुखंज्ञानंगुणास्सर्वेप्यभेदिनः ॥ संतुनेहेतिवाक्यस्यभयाद्गर्भगताहरेः ॥ ९३१ ॥ अन
यैवगुणादीनामभेदोक्त्यास्त्वभिन्नता ॥ गुणत्वोक्तिशतैश्चोक्तैर्गुणताप्यस्तुका(क्ष)हातिः ॥ ९३२ ॥
निर्गुणोक्तिश्चभिन्नानांगुणानामस्तुबाधिका ॥ ९३३ ॥ भेदाभेदप्रमाणाभ्यांभेदाभेदौयथातव ॥
घटादौगुणकर्मादे स्तथात्र स्तां गुणैकते ॥ नामुख्यातत्रगुणतायथात्रापितथैवन ॥ ९३४ ॥ नेह
नानेतिभेदस्यसाक्षादत्रनिषेधनात् ॥ गुणत्वघटकंचान्यत्कल्प्यमंकुरकर्तृवत् ॥९३५॥ ॥

श्रुत्या अभिन्नताअस्त्वितिसंबंधः । उक्तै स्सर्वधर्मेत्यादिनोक्तैः ॥ ९३२ ॥ अभिन्नभगवद्गुणसिद्ध्यालब्धंनिर्गुणोक्तेरर्थांतरमाह ॥
निर्गुणोक्तिश्चेति ॥ ९३३ ॥ गुणत्वाभेदयोर्मध्ये एकमुपचरितमस्त्वित्याशंकांदृष्टांतमुखेनपरिहरति ॥ भेदाभेदेति ॥ तथा
गुणैकते भगवद्धर्माणां गुणता एकताचेतिगुणैकते स्तामितिलोटिप्रथमपुरुषद्विवचनं । तत्रघटादौरूपादीनामभेदेपिगुणतायथाऽ
मुख्यान तथात्रापिभगवद्धर्मेष्वपि गुणताऽमुख्यानेत्यावृत्त्यायोजनीयं ॥ ९३४ ॥ ननु घटरूपादौ गुणत्वघटकोभेदोप्यस्ति भग

वद्गुणेषुकिंघटकमित्यतआह ॥ नेहेति ॥ अत्र भगवर्द्धर्मेषु । अन्यत् भेदादन्यत् । घटरूपादौप्रमाणसिद्धगुणगुणिभावान्यथा
नुपपत्त्याकल्प्योभेदःनतुघटपटयोरिवस्वरससुंदरः । इहतुभेदस्यश्रुतिनिषिद्धत्वात्तत्प्रतिनिधिरन्यःकल्पनीयः नतुकल्पकादर्शना
त्प्रमाणसिद्धव्यवहारापलापइतिभावः ॥ ९३५ ॥ उक्तमेवोपपादयति ॥ नहीति ॥ अबाधितकार्यस्य सस्यादेः दृष्टहेतोः प्रत्य
क्षसिद्धकर्तुः अन्यमलौकिकंकर्तारं ॥ ९३६ ॥ भगवतोनुपचरितसार्वज्ञादिगुणान् अनुपचरितंगुणानंत्यंच सयुक्तिकंप्रसाधयन्द्भा

नह्यबाधितकार्यस्यदृष्टहेतोरभावतः ॥ अभावंम(न्व)न्यतेलो(काः)कःकिंत्वन्यमनुम(न्व)न्यते ॥ ९३६ ॥
नशक्यंतेनुसंख्यातुमनंतत्वान्मयापिहि ॥ इतीरयन्गुणादीनामानंत्यंस्वगुणादिषु ॥ गुणादित्वंचकिंत
त्वमुत्सिसृक्षतिसप्रभुः ॥ ९३७ ॥ पक्षीकृत्यगुणान्हेतूकृत्यानंतत्वमंजसा ॥ अनंतजीवसंस्थात्मतनुवत्सं
ख्ययोज्झितिं ॥ ९३८ ॥ प्रसाधयन्प्रभुःपक्षासिद्धिंहेतोरसिद्धतां ॥ यतोनसहते तस्मादनंतत्वंगुणाश्रते
॥ ९३९ ॥ नोपचारादितस्सिद्धा स्तत्सर्वंचससर्वदा ॥ आत्मशक्तिविशेषेणसर्वथानिर्वहेत्परं ॥ ९४० ॥

गवतस्थभगवद्वचनमुदाहृत्य तदुपात्तयुक्तिंचद्रढयति ॥ नशंक्यतइत्यादिना ॥ तत्वंउत्सिसृक्षतिकिमितिसंबंधः ॥ ९३७ ॥
कुतइत्यतआह ॥ पक्षीकृतेति ॥ गुणान्पक्षीकृत्य अनंतत्वंहेतूकृत्येतिसंबंधः । अत्रास्मदुक्तदृष्टांतोमय्यनंतगुणेऽनंतइतितदु
क्तग्रंथसूचितएवेतिद्रष्टव्यं । तस्माद्धेतूकरणात् पक्षीकरणाच्च ॥ ९३८ ॥ ९३९ ॥ नोपचारादितइत्यत्रादिपदेनभ्रांतिर्ग्राह्या । ॥ १२५ ॥

उपचारादिसिद्धस्यापिहेतूकरणेसिंहत्वेन देवदत्तस्यापिपशुत्वसाधनं बाष्पारोपितधूमेनवह्निमत्त्वसाधनंच प्रसज्येतेतिभावः ।
प्राक्सामान्येनोक्तंघटकंविशिष्याह ॥ तत्सर्वमिति ॥ तत्सर्वं श्रौतंगुणगुण्यैक्यं गुणगुणिभावं गुणानंत्यंच । आत्मशक्तिविशे
षेणेति शक्तिविशेषएव भेदप्रतिनिधिर्विशेषः । सएवभेदाभावस्थलेभेदकार्यनिर्वाहकइत्युक्तंभवति ॥ ९४० ॥ सूत्रसम्मत्याप्ययं
विशेषोप्यंगीकार्यइत्याह ॥ यतइति ॥ विचित्रांशक्तिमात्मनीत्यनेना त्मनिचैवंविचित्राश्चहीतिसूत्रमभिप्रैति । ततःविशेषस्यप्रा
माणिकत्वात् शक्तिविशेषेणनिर्वहेदितिपूर्वेणान्वयः । उक्तविधयाहरिणास्वगुणानंत्येकथिते गुणपारादर्शिनाशेषेणचगुणानंत्येऽ

यतस्सूत्रकृदप्याहविचित्रांशक्तिमात्मनि ॥ धनीवक्तिधनानंत्यमनुवक्त्यनुयाय्यपि ॥ ९४१ ॥
प्रतिवक्तिकथंयस्तौनश्रृणोतिनपश्यति ॥ अतोविष्णोर्गुणानंत्यमभूत्सर्वमनोरमं ॥ ९४२ ॥
मिथ्योपाधिकसार्वज्ञमिथ्यात्वान्नैकतेतिचेत् ॥ सत्यविश्वस्यसामर्थ्यादितितस्योत्तरंवदेत् ॥ ९४३ ॥

गीकृते कोन्योनरस्तदभावंभावयेदित्यत्रलौकिकदृष्टांतमाह ॥ धनीवक्तीति ॥ उक्तमुपसंहरति ॥ अतइति ॥ अतः श्रुतियु
क्तिसद्भावात् ॥ ९४१ ॥ ९४२ ॥ ननुजगदुपाधिकसार्वज्ञादेःकथंनिरुपाधिकब्रह्मैक्यमितिचेत् तत्रप्रष्टव्यं । किंजगतोमिथ्या
त्वेनतदुपाधिकसार्वज्ञस्यापिमिथ्यात्वात्ब्रह्मैक्यंनेतिवदसि अथवा जगदुपाधिकसार्वज्ञस्यब्रह्मैक्ये जगतोप्यैक्यंस्यादितिवावद
सीति । आद्यस्योत्तरमाह ॥ मिथ्येति ॥ सत्यविश्वस्यसामर्थ्यात् सत्यविश्वोपाधिकत्वेनसत्यत्वादित्यर्थः । स्वकपोलकल्पित

मिथ्यात्वेनानुपपत्तिमुद्धाटयतः श्रुतिसिद्धसत्यत्वेनकुतोनसमाधानमितिभावः ॥ ९४३ ॥ कलहेन वादिप्रतिवादिविवादेन । अ स्मिन्जगन्मिथ्यात्वे । ततसत्यत्वे श्रुतिसिद्धसार्वज्ञादिसत्यत्वे ॥ ९४४ ॥ द्वितीयस्योत्तरमाह ॥ घटोपाधिकेति ॥ घटोपाधिक वृत्तेः घटविषयकमानसज्ञानस्य ॥ ९४५ ॥ अतः घटोपाधिकज्ञानैक्येघटैक्यादर्शनात् । सिंहावलोकनन्यायेनपुनरप्याद्यपक्षेदू षणमाह ॥ मिथ्यारजतेति ॥ तवमते मिथ्याभूतरजतज्ञानत्वेनांगीकृतसाक्षिणः । तथा मिथ्याभूतजगद्विषयकस्यापिसार्वज्ञा

सत्यत्वेयदिसंदेहोमिथ्यात्वेकस्यनिश्चयः ॥ कलहेनविरुद्धेस्मिंस्तत्सत्यत्वेनबाधकं ॥ ९४४ ॥
घटोपाधिकवृत्तेश्चमनोरूपत्वमिष्यते ॥ घटस्तुनमनोरूपोबाह्योसावांतरंमनः ॥ ९४५ ॥
अतस्सार्वज्ञैकतायांसर्वस्यैक्यंचनोच्यते ॥ मिथ्यारजतदृष्टेश्चसाक्षिणस्सत्यतातव ॥९४६॥
मिथ्याभूतार्थसंबंधान्मिथ्या ज्ञानंयदीष्यते ॥ सत्येशज्ञानसंबंधादर्थास्सत्याःकथंनते ॥
॥ ९४७ ॥ तत्पादसंगिसलिलादशुद्धस्याहिशुद्धता ॥ ९४८ ॥ निर्दोषेश्वरचिद्योगात्सत्य
तालोकसंमता ॥ अबाधितार्थसंबंधाद्बाध्यताशावृथातव ॥ ९४९ ॥ ॥

देस्सत्यताभविष्यतीतिभावः ॥ ९४६ ॥ मिथ्याभूतार्थसंबंधात्मिथ्यात्वमितिवदतस्स्वमतविरोधःप्राग्दर्शितः । अधुनाउत्तरांतर माह ॥ मिथ्याभूतार्थसंबंधादिति ॥ ९४७ ॥ नकेवलमियंप्रतिबंदी । किंतु इदमेवयुक्तियुक्तमित्यत्रदृष्टांतमाह ॥ तत्पादसं गिसलिलादिति ॥ गंगाजलादित्यर्थः ॥ ९४८ ॥ अधुनाईश्वरज्ञानस्यप्रमात्वनियमेन तद्विषयस्यजगतःकथंनसत्यतेत्याह ॥

॥ निर्दोषेति ॥ जगतोबाधादर्शनेनमिथ्यात्वायोगाच्चनतत्संबंधात्सार्वज्ञमिथ्यात्वमित्याह ॥ अबाधितेति ॥ ९४९ ॥ किंच किमिदंसार्वज्ञस्यसोपाधिकत्वंनाम उपाधिभूतजगन्मिश्रणंवा उपाधिनिरूपितत्वमात्रंवेतिविकल्प्याद्यंदूषयति ॥ यदीति ॥ तदा गुरुतरमहीमहीधरादीनामप्यांतरज्ञानेनसहहृदयांतःप्रवेशादितिभावः ॥ ९५० ॥ शब्दात् शशशृंगशब्दात् ज्ञानेनसहशृंगस्या पिमिश्रणात्ज्ञानित्वमिवशृंगित्वमपितवस्यादितिभावः । दूषणांतरमाह ॥ अत्यंतासदिति ॥ समयोरेवमिश्रणयोग्यत्वादिति

यदिसोपाधिकत्वंतेमिश्रणंक्षीरनीरवत्॥तदासर्वज्ञयोगींद्रहृदयेस्याद्विदारणं॥९५०॥
शब्दाच्चशशशृंगस्यज्ञानेशृंगीभवान्भवेत् ॥ अत्यंतासच्चतेज्ञानंस्यात्तेनह्यतिसंकटं
॥ ९५१ ॥ ज्ञानेनांतस्स्थितेनैवबहिस्स्थजगतोयदि ॥ संबंधःकश्चिदेवस्यात्तदैक्ये
किंनुबाधकं ॥ सौरालोकोजगद्व्यापीमंडलाभिन्नएवहि ॥ ९५२ ॥ किंचनानापदा
र्थानांभ्रमोपिब्रह्मचित्तव ॥ मिथ्यार्थज्ञानरूपंतेब्रह्मकिंनाभवत्तदा ॥ ९५३ ॥

भावः ॥ ९५१ ॥ द्वितीयंदूषयति ॥ ज्ञानेनेति ॥ कश्चित्संयोगातिरिक्तोविषयविषयिभावादिः । ऐक्ये सार्वज्ञस्यब्रह्मैक्ये । घट विषयकवृत्तिज्ञानस्यमनोरूपत्वदर्शनेनसार्वज्ञस्यापिब्रह्मैक्ये नकिंचिद्बाधकमितिभावः । दृष्टांतांतरमाह। सौरालोकइति ॥९५२॥ किंचयन्मिथ्यार्थसंबंधि तन्मिथ्येति त्वदुक्तन्यायेनतवब्रह्मैवमिथ्यास्यादित्याह ॥ किंचेति ॥ तवमते तदा ब्रह्मचितएवभ्रम

रूपत्वे । ततश्चत्वद्ब्रह्मैवमिथ्याभूतार्थसंबंध्यभवदितिभावः ॥ ९५३ ॥ नायंदोषोममेत्याह ॥ सत्यार्थेति ॥ ९५४ ॥ तवतूक्त न्यायेनमिथ्याभूतार्थसंबंधाद्ब्रह्मणोमिथ्यात्वमवर्जनीयमित्याह ॥ मिथ्यार्थेति ॥ एवंच नाळीस्थविषचूर्णनिद्रितस्यरिपोःगुदद्वारे मुखवायुनाआपूर्य तन्नाशयामीत्यागतस्य स्वस्यैव तदीयगुदवायुनास्वोदरंप्रविष्टेनतेनैवविषचूर्णेनैवमरणमभूदित्याभाणकस्यत्वमे

सत्यार्थज्ञानरूपोसौकथंमिथ्याममप्रभुः ॥ ९५४ ॥ मिथ्यार्थज्ञानरूपत्वात्त्वद्ब्रह्मैवाभवन्मृषा ॥
अतस्त्वाद्विषचूर्णेनतवैवाभूद्विसंकटं ॥ ९५५ ॥ अतोभगवतोधर्माःसर्वेसर्वेश्वरात्मकाः ॥
तच्छक्त्याधर्मधर्मित्वमेकताऽनेकतादिच ॥ ९५६ ॥ तस्माद्गुणानृतत्वाशानारीगर्भस्रवोप्यभूत् ॥
नेहनानेतिवाक्येनभिन्नस्यैवनिषेधनात् ॥ ९५७ ॥ अतोस्मदुक्तसद्युक्तिशृंखलाभिःपदेपदे ॥
बद्धायाब्रह्मसुगुणसर्वस्वद्रोहदोषतः ॥ ९५८ ॥ कारागृहनिविष्टायानिर्गुणोक्तेर्नमोचकः ॥
विनात्रिगुणशून्यत्वरूपार्थस्यप्रदानतः ॥ नापरःकोप्युपायस्स्यादितिसर्वस्यसंमतं ॥ ९५९ ॥

पात्रीभवसीत्याह ॥ अतइति ॥ ९५५ ॥ अस्तु सार्वज्ञादीनांब्रह्मैक्येबाधकाभावः । तथापिप्रकृतेकिमागतमित्यतआह ॥ अत इति ॥ ऐक्येबाधकाभावादित्यर्थः ॥ ९५६ ॥ तस्मा द्गुणानांब्रह्मस्वरूपत्वात् । गर्भस्रवेनिमित्तमाह ॥ नेहेति ॥ ९५७ ॥ ॥ १२७ ॥
निर्गुणश्रुत्यर्थकथनंसाहित्यमुद्रयोपसंहरति ॥ अतइति ॥ ब्रह्मसुगुणसर्वस्वद्रोहदोषतः अस्मदुक्तसद्युक्तिशृंखलाभिःपदेपदेब

द्धायाः मायावादिहृदयाख्यकारागृहेनिविष्टायाःनिर्गुणोक्ते स्त्रिगुणशून्यत्वरूपार्थस्यप्रदानतः प्रदानंविना अपरोमोचकः कोप्यु पायोनस्यात् सर्वस्ययुक्तिमतइतिसंबंधः ॥ ९५८ ॥ ९५९ ॥ कुतइत्यतआह ॥ अभिन्नेति ॥ ब्रह्मसुखादिवत् अभिन्नब्रह्मगु णानांसार्वज्ञादीनां । ध्रौव्यात्तन्निमित्तादपरःकोप्युपायोनास्तीतिपूर्वेणसंबंधः ॥ ९६० ॥ ननुगुणानामभेदेएकतरपरिशेषस्स्यादि त्यतआह ॥ अभेदेपीति ॥ यथा तवसुखादावभेदेप्येकशेषोन ब्रह्मैवास्ति । नसुखंनामकिंचिदस्तीत्येकस्यैवावशेषः । तथा मम ब्रह्मगुणानामभेदेप्येकशेषोनेतियोजना । अन्यथा सुखादावेकशेषोभवतिचेत् तार्किकःजीयात् । ब्रह्मणिदुःखनिवृत्तिरेवास्तिन

अभिन्नगुणसत्यत्वध्रौव्याद्ब्रह्मसुखादिवत् ॥ ९६० ॥ अभेदेप्यन्यशेषोनयथातवतथा
मम ॥ अन्यथातार्किकोजीयान्मोक्षस्स्यादप्रयोजकः ॥ ९६१ ॥ यथासुखाभाववादाद्भि
न्नस्त्वप्रतिवाद्यभूः ॥ तथानिर्गुणतावादाद्गुणवादीभवाम्यहं ॥ ९६२ ॥ गुणतागुणिताच
स्यात्सुखतासुखितायथा ॥ आनंदंब्रह्मणोविद्वानित्यप्याहश्रुतिस्स्फुटं ॥ ९६३ ॥

सुखमितितदुक्तप्रमेयस्यत्वयाप्यंगीकारादितिभावः । किंचैवंसतिदुःखनिवृत्तिरेवमोक्षइत्युक्तंस्यात् । ततःसुखाभावात्मुक्तिरपुरु षार्थस्स्यादित्याह ॥ मोक्षइति ॥ ९६१ ॥ अभिन्नगुणतापक्षे मायावाद्युक्तगुणाभावपक्षस्य भवदुक्तसगुणवादस्यकोविशेषइ त्यतः अभिन्नसुखतापक्षे तार्किकोक्तसुखाभावपक्षात्सुखवादिनस्तवयोविशेषःसएवममापिस्यादित्याह ॥ यथेति ॥ प्रतिवादीसु खभाववादी । भिन्नइतिदार्ष्टांतिकेपियोजनीयं ॥ ९६२ ॥ अभेदेगुणगुणिभावःकथमित्यतआह ॥ गुणतेति ॥ अस्यसुखस्यब्र

ह्मणश्च सुखतासुखितायथा तथा अस्यब्रह्मणः तत्सार्वज्ञादेश्च गुणतागुणिताचस्यादितियोजना । ननुब्रह्मणि विज्ञानमानंदंब्र ह्मेतिसुखतैवास्ति नसुखितेतिचेत् तत्राह ॥ आनंदमिति ॥ ९६३ ॥ अमुष्य ब्रह्मणइतिषष्ठीप्रयोगस्य । तर्हि आनंदमित्यत्रता किंकबालकैरप्युपचारस्यवक्तुंशक्यत्वादितिभावः । कथमुपचारइत्यतआह ॥ दुःखाभावेति ॥ श्रुतीना मानंदप्रतिपादकवा क्यानां ॥ ९६४ ॥ अतः उपचारस्यवक्तुमशक्यत्वात् । आनंदादीनामभिन्नगुणत्वेयुक्तिंचाह ॥पर्यायशब्दावाच्यत्वमिति॥

यद्यमुष्योपचारत्वंजितंतार्किकबालकैः ॥ दुःखाभावपरत्वंहिश्रुतीनांवक्त्यसौखलः ॥ ९६४ ॥
अतोगुण्यात्मकाएतेगुणग्राह्यायथाश्रुतं ॥ पर्यायशब्दावाच्यत्वंतवापिचममापिच ॥ ९६५ ॥
अतस्तन्मात्रतैतेषांनवाच्याशब्दकोविदैः ॥ प्रभोश्शक्तिविशेषेणसर्वंतद्धिसमंजसं॥ ९६६ ॥
निर्गुणत्वश्रुतिस्तस्मान्नैवंसद्गुणबाधिका ॥ अधर्मधर्मदुःखेर्ष्याद्वेषादीन्प्रतिषेधति ॥ ९६७ ॥

आनंदोब्रह्मेतिसहैवप्रयुज्यमानशब्दवाच्यत्वमित्यर्थः ॥ ९६५ ॥ अतः अपर्यायशब्दवाच्यत्वात् । तन्मात्रता केवलब्रह्मता । ए तेषा मानंदादीनां । शब्दकोविदैरित्यनेन केवलाभिन्नेषु घटकरीरकलशाद्यर्थेषु सहप्रयोगाभावं केवलभिन्नेषुचसामानाधिकरण्य प्रयोगाभावंच ध्वनयति । अभेदस्यगुणगुणिभावस्यचघटकमाह ॥ प्रभोश्शक्तिविशेषेणेति ॥ ९६६ ॥ सगुणवादमुपसंह रति ॥ निर्गुणत्वेति ॥ तस्मा त्सार्वज्ञादिगुणानामानंदादिगुणसमानयोगक्षेमत्वात् । निर्गुणश्रुतेरत्यल्पग्रासेनार्थपुष्ट्याख्यपुष्टे

रभावंपरिहर्तुमधर्मेत्याद्युक्तं । द्वेषादीनित्यत्रादिपदेन प्राकृतरूपरसगंधस्पर्शादीनांग्रहणं ॥ ९६७॥ तर्हिकिंमूलंनिर्गुणवादस्ये
त्यतो भगवतिद्वेषएवेतिसदृष्टांतमाह॥ यस्ययस्मिन्नित्यादिना ॥ नचे द्गुणादर्शनंद्वेषमूलकंनचेत् ॥ ९६८ ॥ विज्ञानंचशक्ति
श्च । आदिपदेनअणिमाद्यैश्वर्यंगृह्यते । योगिनामित्यनेन सर्वत्रवैराग्येपि नज्ञानादिगुणेषुवैराग्यंयुक्तमितिसूचयति । कस्त्यजेन्न
कोपीत्यनेन योगीश्वरोभगवांश्चशुभगुणानेतान्नैवविसृजेदितिध्वनितं ॥ ९६९ ॥ दोषा न्मायावाद्युक्ताज्ञानसंसारदुःखनीचैक्या

यस्ययस्मिन्मनोद्वेषस्तद्गुणस्तेननेक्ष्यते ॥ नचेद्ब्रह्मानंतगुणंकथंनिर्गुणमब्रवीत् ॥ ९६८ ॥ यत्नः
कृत्स्नोपिविज्ञानशक्त्याद्यर्थंहियोगिनां ॥ सार्वज्ञशौर्यसौंदर्यपूर्वैश्वर्याणिकस्त्यजेत् ॥ ९६९ ॥
गुणोणुरपिसंपोष्योदोषोदूष्योबुभूषुभिः ॥ गुणांस्त्यजेत्कथंदोषान्भजेद्धातत्परःप्रभुः ॥९७०॥
सर्वंहरतुसर्वस्वंविद्यांकोविदुषोहरेत् ॥ किंगुणांस्त्याजयन्विष्णोर्निर्गुणत्वंगुणंत्यजेत् ॥ ९७१ ॥
ज्योतिष्ट्वेनहिचंद्रस्यस्वरूपज्ञानवान्पुनः ॥ चंद्रत्वेनैवतंज्ञातुंकश्चंद्रइतिपृच्छति ॥ ९७२ ॥

दीन् । तत्तस्मा द्गुणस्यपोष्यत्वाद्दोषस्यदूष्यत्वाच्च ॥ ९७० ॥ विदुषोविद्यांकोहरेदित्येनेन सर्वस्वहरणेसतिवैराग्यदार्ढ्येनवि
द्याभिवृद्धिरेवभवतीतिसूचयति । तत्रदृष्टांतमाह ॥ किंगुणानिति ॥ अत्रापियावान्गुणत्यागः तावत्तावन्निर्गुणत्वाख्यगुणो
दृढोभवतीतिभावः ॥ ९७१ ॥ परोदीरिताखंडार्थवादस्यापि सत्यत्वादिगुणविरोधित्वेननैर्गुण्यवादांतःपातित्वात्तमप्यत्रैवदूषय

ति ॥ ज्योतिष्ट्वेनेत्यादिना ॥ हि यस्मा द स्मिन्ज्योतिर्मंडलेकश्चंद्रइतिप्रश्नंकुर्वन्ज्योतिष्ट्वेनचंद्रस्यज्ञानवानेव । तस्मा त्सामा न्यतःज्योतिष्ट्वेनचंद्रस्वरूपज्ञानवत्त्वात् पुनस्तं चंद्रत्वेन इतरज्योतिर्विलक्षणचंद्रत्वेनैवज्ञातुं कश्चंद्रइतिपृच्छति । नतुज्योतिष्ट्वेन प्रागेवज्ञातस्वरूपमात्रज्ञानार्थं ॥ ९७२ ॥ अत स्वरूपमात्रप्रश्नायोगात् । अर्थातुरः मायावाद्युक्तस्वरूपमात्रातिरिक्त सजाती यविजातीयव्यावृत्ततयाचंद्रत्वाख्यासाधारणाकारव्यंजकप्रकृष्टप्रकाशरूपार्थांतरेऔत्कंठ्यवान् ॥ ९७३ ॥ कश्चंद्रइतिप्रश्नस्यापा

अतःकश्चंद्रइत्येषप्रश्नःप्रश्नविदांमते ॥ किंलक्षणकइत्येवस्वार्थमर्थातुरोभजेत् ॥ ९७३ ॥
चंद्रत्ववान्कइत्येववाक्यस्यार्थोयतःस्फुटः ॥ स्वरूपमात्रप्रश्नत्वंस्वरूपासिद्धमेवते ॥९७४॥
एवंलक्षणवाक्यंचलक्षणंवक्तिनापरं ॥ अपृष्टोत्तरमेवस्याद्रूपमात्रनिरूपणे ॥ ९७५ ॥
अतोलक्षणवाक्यत्वंविरुद्धोहेतुरेवते ॥ ९७६ ॥ ॥ ॥

ततस्स्वरूपमात्रार्थत्वदर्शनेपि नत्वदभिलषितसिद्धिरित्याह ॥ चंद्रत्ववानिति ॥ चंद्रासाधारणधर्मवानित्यर्थः । एवंच कश्चंद्र इत्यस्य चंद्रत्ववान्कइत्यर्थलाभेनासाधारणधर्मप्रश्नएवकथंनाभूदितिभावः । जातिप्रश्नश्च तद्व्यंजकप्रश्ननांतरीयइतिसुप्रसिद्धं ॥ ९७४ ॥ स्वरूपमात्रप्रश्नत्वेदोषांतरमाह ॥ एवमिति ॥ एवं स्वरूपमात्रप्रश्नस्यव्यावर्तकधर्मपरत्ववत् ॥ ९७५ ॥ अतः लक्ष णवाक्येलक्षणस्यकथनेन प्रश्नोत्तरयोरानुगुण्यायप्रश्नस्यापिलक्षणविषयत्वावश्यंभावात् सत्यज्ञानादिवाक्यं ब्रह्मस्वरूपमात्रपरं



लक्षणवाक्यत्वा त्प्रकृष्टप्रकाशश्चंद्रइतिवाक्यवदित्यत्र तेहेतुर्विरुद्धएव ॥ ९७६ ॥ अतएवमदभिलषितप्रत्यनुमानसिद्धिरित्याह ॥ सत्यज्ञानादीति ॥ तत्तस्मा ल्लक्षणोत्तर प्रश्नस्यापिलक्षणविषयत्वनियमात् ॥ ९७७ ॥ प्रश्नोत्तरयोस्स्वरूपमात्रपरत्वेदूषणां तरमाह ॥ स्वरूपमात्रेति ॥ एकेनपदेन सत्यपदेन । किंफलं नकिमपीत्यर्थः ॥ ९७८ ॥ असत्यादिव्यावृत्तिसंपादनेनसार्थ

सत्यज्ञानादिवाक्यंतद्विशिष्टब्रह्मतत्परं ॥ लक्षणप्रश्नवाक्यत्वाचंद्रलक्षणवाक्यवत् ॥९७७॥ स्वरूप
मात्रज्ञानस्यपदेनैकेनसंभवात् ॥ व्यर्थंपदांतरंचस्याज्ज्ञातस्यज्ञापनेनकिं ॥ ९७८ ॥ यदिसत्यादिपद
तोलक्ष्येब्रह्मणिकेवलं ॥ व्यावृत्तिस्स्यादसत्यादेस्तेनसार्थ(क)क्यमिष्यते ॥ ९७९ ॥ तर्हिगंगापदाल्ल
क्ष्येतीरेपिन्यायसाम्यतः ॥ व्यावृत्तिस्स्यादगंगायास्तीरेस्यान्मज्जनंसदा ॥९८०॥ अन्यव्यावृत्तिरपि
हितदास्या यदि तत्पदं ॥ स्वार्थंसमर्पयेत्तर्हिसाप्यार्थाल्लभ्यतेपरं ॥९८१॥ साक्षादन्यापोहएवनह्यर्थो
भवतोमते ॥ अतस्सत्यत्वपूर्वार्थंयदिब्रह्मणिनार्पयेत् ॥ कथंव्यावर्तयेद्ब्रह्मविपक्षेतूक्तमेवहि ॥९८२॥
किंचमुख्यार्थबाधेहिलक्षणातेनसत्यता ॥ ज्ञानतानंतताचैवभवेद्ब्रह्मणिबोधिता ॥ ९८३ ॥

क्यमाशंक्यपरिहरति ॥ यदीत्यादिना ॥ केवलं सत्यत्वादिधर्मप्रतिपादनंविना ॥ ९७९ ॥ अगंगायाःव्यावृत्तिरितिसंबंधः ॥ ९८० ॥ अधुनासत्यत्वादिधर्माप्रतिपादनेत्वदभिलषिताव्यावृत्तिरेवदुर्लभेत्याह ॥ अन्यव्यावृत्तिरपीति ॥ तत्पदं सत्या दिपदं । स्वार्थं सत्यत्वादिकं । सापि असत्यादिव्यावृत्तिरपि ॥ ९८१ ॥ अत स्साक्षादन्यापोहस्यपदार्थत्वाभावात् । विपक्षे ध

र्मार्पणाभावेपिव्यावृत्त्यंगीकारे बाधकमुक्तं तीरेस्यान्मज्जनंसदेत्यादिकमेवेतियोजना ॥ ९८२ ॥ सत्यादिपदानाब्रह्मणिलक्षणांगीकारे बाधकांतरंचाह ॥ किंचेत्यादिना ॥ ९८३ ॥ सत्यत्वरहितमितिहेतुगर्भविशेषणं । सत्यत्वरहितत्वादित्यर्थः । ननुसत्यत्वाभावेपिसद्रूपत्वेनैवब्रह्मणोनमिथ्यात्वमित्यतआह ॥ सद्रूपमपीति ॥ तद्ब्रह्म । तद्वद्घटवत् । पररीत्यायंदृष्टांतः । तेनैव सत्त्वाभावेनैव ॥ ९८४ ॥ विपक्षेबाधकमाह ॥ नचेदिति ॥ सत्त्वाभावेसद्रूपत्वाभावोनचेत् । सत्त्वाभावेसद्रूपत्वाभावस्य सत्तायां

सत्यत्वरहितंब्रह्ममिथ्यैवस्याद्घटादिवत् ॥ सद्रूपमपितन्नस्यात्तद्वत्तेनैवहेतुना ॥ ९८४ ॥ नचेच्छशविषाणंचसद्रूपंब्रह्मवद्भवेत् ॥ केवलान्वयिधर्मत्वात्सत्त्वेसत्त्वंचवर्तते ॥ ९८५ ॥ अतस्सत्यत्वरहितंमिथ्यैवस्यान्नसंशयः ॥ शिरसोमुंडनेतस्माच्छिखामुंडनमप्यभूत् ॥ ९८६ ॥ यदिसत्यपदेनापिब्रह्मलक्ष्यंभवेत्तव ॥ तर्हितत्पदवाच्यंमेजगत्सत्यंभविष्यति ॥ ९८७ ॥

व्यभिचारमाशंक्यपरिहरति ॥ केवलान्वयीति ॥ ९८५ ॥ अतस्सत्त्वेपिसत्त्वसद्भावात् । तस्मा त्सत्त्वाभावकथनेसद्रूपत्वाभावस्यावर्जनीयत्वात् । शिरसोमुंडनेशिखामुंडनवत् सत्त्वाभावेत्वदभिलषितसद्रूपत्वमपिगतमितिभावः ॥ ९८६ ॥ सत्यपदस्य ब्रह्मणिलक्षणांगीकारेपुनरपिबाधकमाह ॥ यदीति ॥ ब्रह्मणिसत्यपदलक्षणांगीकारे तत्पदवाच्यंकिंचिदवश्यंवक्तव्यं । शब्दस्या

भिधायकत्वनियमात् । तच्च परिशेषाज्जगदेवस्यात् । तेनचैतन्यस्यसत्यत्वंनसिद्ध्यतीतिभावेनाह ॥ तर्हीति ॥ तत्पदवाच्यं सत्यपदवाच्यं । हेतुगर्भविशेषणमेतत् । सत्यपदवाच्यत्वादित्यर्थः । वाचकस्यसत्यपदस्य सत्यत्वरूपप्रवृत्तिनिमित्तपुरस्कारित्वादितिभावः ॥ ९८७ ॥ तत्रदृष्टांतमाह ॥ गंगेति ॥ ९८८ ॥ तत्त्वमसीत्यत्र परोदीरिततत्पदार्थनिष्ठसत्यादिपदानामखंडार्थत्वं निराकृत्येदानींऐक्यरूपवाक्यार्थपरवाक्यस्याप्यखंडार्थत्वंनिराकरोति ॥ ब्रह्मैक्यवाक्यमपीति ॥ अमानत्वात् स्वप्रतिपादक

गंगापदेनयावाच्यासैवगंगायतोनृणां ॥ अतस्त्वल्लक्षणासर्वजगतोरक्षणायमे ॥ ९८८ ॥ ब्रह्मैक्यवाक्यमपितेस्वरूपपरमेवहि ॥ एवंचेद्वैतमद्वैतममानत्वान्नृशृंगवत् ॥ भेदश्चश्रुतिमुख्यार्थस्सुस्थिरोभूदितिस्थितं ॥ ९८९ ॥ दुर्जनस्सज्जनस्यार्थमुज्जिहीर्षेच्छनैश्शनैः ॥ किंनोचुर्वेदिवाच्यस्यस्वपदैरप्यवाच्यतां ॥ अंधस्यांध्यंहिसंदध्युरपदेपदसंपदः ॥ ९९० ॥ अलक्षणंकिलार्थोर्थोलक्षणोक्तेर्नलक्षणं ॥ स्वयंभूत्वास्वमातैववंध्येत्यतिखलोवदेत् ॥ व्यावर्तकोक्तिर्व्यावृत्त्यैन व्यावर्तकवाक्किल ॥ ९९१ ॥

प्रमाणरहितत्वात् ॥ ९८९ ॥ अखंडार्थत्वंलोकप्रवादहृष्टांततयापिनिराकरोति ॥ दुर्जनइत्यादिना ॥ अर्थंद्रव्यं । उज्जिहीर्षेत् उत्कृष्टतयाऽपहर्तुमिच्छेत् । तत्रदृष्टांतमाह ॥ किंनोचुरिति ॥ अनंतवेदपदवाच्यस्य स्वपदैः स्सत्यज्ञानादिपदैः । अंधस्यभावः आंध्यं । अपदे पदप्रक्षेपणायोग्यकंटकादिस्थले ॥ ९९० ॥ अलक्षणं लक्षणव्यतिरिक्तंचंद्रस्वरूपमात्रं । सएवार्थःअभिधेयः ।

लक्षणोक्तेः प्रकृष्टप्रकाशइतिलक्षणोक्तेः अर्थःप्रतिपाद्यः। लक्षणं प्रकृष्टप्रकाशत्वरूपासाधारणधर्मः अर्थोनकिलेतिसंबंधः। एवं वदन् घटपदस्यघटोनार्थः। अपितु अघटःपटादिरेवार्थइतिवदन्निव अयंकइतिसामान्यप्रश्नस्य स्वरूपमात्रपरतांनिश्चित्य तद्बलाल्लक्षणोक्तिमन्यथीकुर्व न्विस्पष्टलक्षणोक्तिबलात्प्रश्नमेवलक्षणविषयंकुतोनब्रूते अतएवमहामूर्खइतिभावः। याव्यावर्तकोक्तिःलक्षणोक्तिः। व्यावृत्त्यै सजातीयविजायतीयव्यावृत्त्यैनभवतिकिल। सा व्यावर्तकवाग्भवतिकिल व्यावर्तकवाग्व्यावृत्तिरूपस्वफलंनोत्पादयति चेत् माताभवति सुतंनसूतइतिवद्व्याहतमितिभावः ॥९९१॥ स्वांनासामितिसंबंधः। सत्याद्ब्रह्मणःअन्यत् अनृतं जगत्किल। जगतः

नासांछित्वापिदुष्टस्स्वामन्यस्याशकुनंचरेत् ॥ सत्यादिपदमुख्यार्थस्सत्यादन्यत्किलानृतं ॥ ९९२ ॥
इच्छतावृद्धिमल्पस्यमूलंनष्टंभवेद्ध्रुवं ॥ सत्त्वादिमुंडने किंन लक्ष्यत्वाद्यैस्सखंडता ॥ ९९३ ॥ शांति
कर्मणिवेतालोत्थानंस्यादबुधस्यहि ॥ अखंडत्वाद्यभावेतुसैवायाद्धिसखंडता ॥ ९९४ ॥

स्वाभिमतमिथ्यात्वहानिंसोढ्वापिब्रह्मणःसत्यपदमुख्यार्थतायानिवारणादितिभावः ॥९९२॥ अल्पस्याभाग्यस्य वृद्धिमिच्छतःसत्त्वादिमुंडनेसत्यादिपदानांब्रह्मणिलक्षणांगीकारेणसत्त्वादिधर्मत्यागा दखंडत्वंसिषाधयिषतोमायावादिनःप्रक्रिययैव लक्ष्यत्वामुख्यार्थसंबंधाद्यैस्सखंडता नकिं नभवेत्किं। भवेदेवेत्यर्थः ॥९९३॥ यानिराकर्तुमभीप्सिता सैवसखंडता। अखंडत्वाद्यभावे अखंडत्वस्यापि धर्मत्वेन सखंडत्वभीत्या तस्याप्यभावांगीकारे द्वौनञौप्रकृतमर्थंसातिशयंगमयतइतिन्यायेनपुनस्सखंडतैवायाद्धि अतश्शांतिकर्मणिवेतालोत्थानमभूदितिभावः ॥ ९९४ ॥ अवाच्यपदलक्ष्यत्वे अवाच्यमितिपदेनलक्ष्यत्वे ब्रह्मणोलक्ष्यत्वांगीकारे लक्षणायामुख्यार्थबाधमूलत्वेन मुख्यभूतायाः पदाभिलषितावाच्यतायाएवक्षतेः। शस्त्रशिक्षाविचक्षणःपरायुधैःपरंछिंद्यादितिपूर्वेणान्वयः ॥ ९९५ ॥ अधुनागुणगुणिभावघटकत्वेनसंगतत्वात् स्वस्यापिसामर्थ्यरूपतयागुणांतःपातित्वाच्च विशेषंसमर्थयते ॥ विरुद्धयोरिति ॥ विरुद्धयोस्सतोर्विरोधिभूतयोरित्यर्थः। स्वमूलाघातिनोः घटकीभूतमूलशक्तेरविघातकयोरणुत्वमहत्त्वादिविरुद्धधर्मयोः अणोरेववामनस्यकार्यविशेषायमहत्त्वे महतएवनारायणस्यकृष्णादिरूपेणशिशुभावेच सामर्थ्यविशेषस्यैवदर्शनेन स्वमूलाघातिनो

परायुधैःपरंछिंद्याच्छस्त्रशिक्षाविचक्षणः ॥ अवाच्यपदलक्ष्यत्वेमुख्यार्थावाच्यताक्षतेः ॥ ९९५ ॥
विरुद्धयोस्सतोर्योगस्स्वमूलाघातिनोर्भवेत् ॥ ९९६ ॥ मुनेश्शक्त्याकिंनवनेवैरिणस्सहशेरते ॥
तच्छक्त्यापिनवैराग्यंकामेनसहतद्धृदि ॥ बहिर्वातपसोविघ्नकारिणस्संतिराक्षसाः ॥ ९९७ ॥

रनयोरेवगोब्रह्मणिभवेत्। नतु घटकशक्तेरेवघातकयोर्बद्धत्वमुक्तत्वादिरूपयोरितिभावः ॥९९६॥ उभयत्रापिदृष्टांतमाह ॥ मुनेश्शक्त्येदित्याना ॥ वैरिणः गजसिंहगोशार्दूलादयः। तच्छक्त्यामुनिशक्त्या। तद्धृदिमुनिहृदि। तपसःविघ्नकारिणोराक्षसाः मुनिनासहवनेसंतिकिमितिसंबंधः। यथामुनिरस्वतपश्शक्त्यविघातिनोगजसिंहादेस्स्वाश्रमेसहवासंघटयति नतुकामंवैराग्येणसह राक्षसान्स्वेनसह। प्रत्युत कामंस्वहृदयात् राक्षसान्स्वतपोवनाद्बहिष्करोति। एवंहरिरितिभावः ॥ ९९७ ॥ एतदेवविवेचयति

॥ अणुत्वंचेति ॥ तथैव गजसिंहादिवत् । ऐश्वर्यस्याविरोधीनि दुःखनीचैक्यादीनि । तथैव कामवत् राक्षसवच्च ॥ ९९८ ॥
नन्वणिम्नःकथमैश्वर्यत्वमित्यतआह ॥ अणिमेति ॥ यद्यस्मात् । अतः ऐश्वर्यरूपत्वात् । उपपादनंतुपूर्वमेवकृतं ॥ ९९९ ॥
गुणांतरेष्वपिविशेषकृतोपकारंदर्शयति ॥ अनंतसुगुणस्तोममिति ॥ तथापि अनंतत्वेपि तेषुगुणेषु ऐश्वर्यसिद्धितः गुणानाम
पीश्वरत्वप्राप्तेरित्यर्थः । निजैश्वर्याभिवृद्ध्यर्थं सर्वेश्वरात्मकानंतगुणवत्त्वाख्यनिजैश्वर्यसिद्ध्यर्थं शक्तितस्सामर्थ्यात् । शक्तिविशे

अणुत्वंचमहत्वंचतथैवघटयेच्छ्रुतं ॥ स्वैश्वर्यस्यविरोधीनिघटयेन्नात्मनिप्रभुः ॥ ९९८ ॥ अणि
मामहिमाचैवगरिमालघिमातैथा ॥ यदैश्वर्यमतश्शक्त्याघटयेदिदमात्मनि॥९९९॥ अनंतसुगु
णस्तोममनंताकारसौभगं ॥ तथाप्यनन्यतांतेषुसर्वेष्वैश्वर्यसिद्धितः ॥ निजैश्वर्याभिवृद्ध्य
र्थंघटयेच्छक्तितः प्रभुः ॥ १००० ॥ बलज्ञानक्रियादीनांसिसृक्षासंजिहीर्षयोः ॥ नित्यत्वेमाहि
मोन्नत्याशक्तिव्यक्त्यात्मनास्थितिं ॥ स्वसामर्थ्यविशेषेणघटयेत्सर्वमीदृशं ॥ १००१ ॥ भेदही
नेपिभेदस्यकार्येयोघटयेच्छ्रुतं ॥ ससामर्थ्यविशेषोहिविशेषइतिगीयते ॥ १००२ ॥

षस्यैवविशेषत्वद्योतनार्थमिदमुक्तं ॥ १००० ॥ सिसृक्षासंजिहीर्षयोः सिसृक्षा स्रष्टुमिच्छा।संजिहीर्षा संहर्तुमिच्छा । रावणहनना
दिक्रियायाःसदातनत्वस्य सिसृक्षाकालेसंजिहीर्षायाश्चविरोधंपरिहर्तुं फलकालेव्यक्त्यात्मना अन्यदाशक्त्यात्मना स्थितिं ॥ १३२ ॥
॥ १००१ ॥ विशेषस्यलक्षणमुक्त्वाश्रृंगग्राहकतयादर्शयति ॥ भेदहीनेति ॥ श्रुतं श्रुत्युक्तंकार्यं अनेन विशेषोस्तीतिकृत्वाय

स्यकस्यचिदप्रामाणिकस्यघटनान । किंतुप्रमाणसिद्धस्येतिसूचयति । अतोप्यप्रामाणिकानां दुःखजीवाभेदादीनां भगवतिविशेषतोपिनघटनेत्युक्तंभवति ॥ १००२ ॥ ननु विशेषस्यापिविशेषिणाऽभेदघटनायविशेषांतरगवेषणायामनवस्थास्यादित्याशंक्यदृष्टांतमुखेनविशेषस्यस्वनिर्वाहकतामुपपादयति ॥ परप्रकाशकइति ॥ १००३ ॥ स्वैश्वर्यस्यविरोधीनीति प्राक्सामान्येनोक्तमधुनाप्रपंचयति ॥ बंधमित्यादिना ॥ अन्यतः जीवजडात् । नृणांमहापापफलं बंधजननमरणादिकं । पापफलत्वाच्च निष्पापे

परप्रकाशकोदीपोनकिंस्वस्यप्रकाशकः ॥ विशेषोन्यत्रनिर्वाहीस्वनिर्वाहीकथंनसः ॥ १००३ ॥
बंधंमोक्षंसुखंदुःखंभिन्नाभिन्नत्वमन्यतः ॥ जन्मनित्यत्वमित्यादिमहापापफलंनृणां ॥ अति
नैच्यकरंस्वस्यघटयेत्कथमात्मनि ॥ १००४ ॥ शक्तस्वदोषंप्रदहेद्गृह्णीयाचेत्त्वशक्तता ॥ नृह
रेर्नखरक्रौर्यंकिंस्वोदरविदारणं ॥ १००५ ॥ अशान्ययोयोगहेतोरदृष्टौनह्ययोनतत् ॥ किंमृ
षा घटकादृष्टेर्बहुश्रुत्युक्तसद्गुणः ॥ १००६ ॥ ॥ ॥

परमात्मनिनैतेषांघटनेतिभावः । एवंच ऐश्वर्यविरोधित्वात्अप्रामाणिकत्वात्पापफलत्वाच्च भगवतिदुःखादीनांनघटनेत्युक्तंभवति ॥ १००४ ॥ अधुनादुःखादिघटनायां घटकशक्तेरेवाभावप्रसंगाच्चनदुःखादीनांघटनेत्याह ॥ शक्तइति ॥ दोषमित्यावर्त्यगृह्णीयादितियोजनीयं । तत्रदृष्टांतमाह ॥ नृहरेरिति ॥ नखराः नखाः ॥ १००५ ॥ अधुना विशेषप्रमाणाभावमाशंक्य दृष्टका

र्यान्यथानुपपत्तिरेवप्रमाणमिति गूढेनाभिसंधिना दृष्टांतमेवदार्ष्टांतिकीकुर्वन्नुपपादयति ॥ अशनीति ॥ अशन्ययोयोगहेतोः अशनेरयसश्चयोगहेतोःकार्वादेः । तत् अयोनेतिनहि । किंत्वदृष्टमेवहेत्वंतरमादाय तदयोभवत्येवेतियोजना । तत्रदृष्टांतमाह । ॥ किंमृषेति ॥ घटकादृष्टेः अभेदेगुणगुणिभावस्यघटकादृष्टेः बहुश्रुत्युक्तसद्गुणामृषाकिं नमृषेत्यर्थः । श्रुत्युक्तेतिहेतुगर्भविशेषणेन स्वोक्तविशेषसमर्थनस्यश्रौततयासुनिश्चितत्वात्दृष्टांतीकरणमित्यभिसंधिमुद्घाटयतिग्रंथकारः ॥ १००६ ॥ पूर्वोक्तरीत्या दार्ष्टांतिकांतरमाह ॥ अन्नमिति ॥ कांचित् दर्व्यभावेकाष्ठादिरूपां नतुप्रसिद्धदर्व्यभावात्अन्नमेवनददाति । तत्रदृष्टांतमाह

अन्नंददद्भिपुरुषोदर्वींकांचित्प्रकल्पयेत् ॥ अभिन्नधर्मतांवेदोयथातच्छक्तिकल्पकः ॥ १००७ ॥
मूलाभेदेपिकृष्णाद्यानानंताःकिं नसंतिकिं ॥ यथानंताश्चसंतश्चनभिन्नामूलसद्गुणाः ॥१००८॥
अन्यार्थशून्यावाक्केत्स्यादयुक्तार्थाऽऽर्थिकार्थवाक् ॥ यथेशाभिन्नगुणवागर्थाच्छक्तिविशेषवाक्॥१००९॥

॥ अभिन्नेति ॥ तच्छक्तिकल्पकः भगवच्छक्तिकल्पकः । गुणगुणिभावघटकभेदाभावेपि तत्प्रतिनिधिनाविशेषेण स्वोक्तगुणगुणिभावंयथानिर्वहतितथेत्यर्थः । अत्रापि वेदइत्यनेन वैदिकत्वेनास्यार्थस्यसुनिश्चितत्वमभिप्रैति ॥ १००७ ॥ अधुनांतरंगदृष्टांतमाह ॥ मूलाभेदेति ॥ मूलेन मूलरूपेणसहाभेदेपीत्यर्थः । कृष्णाद्याःअवताराःअनंतानकिं अनंताएव नसंतिकिं संत्येवेत्यर्थः । सर्वजनसंप्रतिपन्नत्वादस्यदृष्टांतीकरणं । दार्ष्टांतिकमाह ॥ तथेति ॥ मूलसद्गुणाः मूलरूपस्यनारायणस्यसद्गुणाः सार्वज्ञादिशोभनगुणाः नभिन्नाः मूलरूपेणान्योन्यंअभिन्नाश्च ॥ १००८ ॥ अधुना विशेषस्य श्रुत्युक्तेतिप्राक्सूचितंश्रौतार्थापत्तिसिद्धत्वंसप्र

पंचमुपपादयति ॥ अन्यार्थशून्येति ॥ वाक् वेदवाक् । अयुक्तार्था आपाततःअयुक्तार्था । आर्थिकार्थवाक् आर्थिकार्थस्योप पादकार्थस्य वाक्प्रमाणं । कुत्रेदंदृष्टमित्यतआह ॥ यथेति ॥ १००९ ॥ प्रामाणिकस्येति गुणत्वादेस्त्रितयस्यापिविशेषणं । सुखादिवत् ब्रह्माभिन्नेसुखेऽसाधारणतत्पदवाच्यत्वस्यशक्तिविशेषात्सिद्धिवदित्यर्थः । आदिपदेनज्ञानंगृह्यते ॥ १०१० ॥ सार्वज्ञादि गुणानांब्रह्मणश्चाभेदे धर्मधर्मिभावे धर्मबाहुल्येच स्पष्टांश्रुतिमाह ॥ यथोदकमिति ॥ विधावति विविधप्रकारेणाधःपतति ।

गुणत्वस्यगुणित्वस्यतदभेदस्यचेश्वरे ॥ प्रामाणिकस्यघटनाशक्त्यैवस्यात्सुखादिवत् ॥ १०१० ॥
यथोदकंदुर्गेवृष्टंपर्वतेषुविधावति ॥ एवंधर्मान्पृथक्पश्यंस्तानेवानुविधावति ॥ १०११ ॥ इतिश्रुति र्यतोधर्मबाहुल्यप्रतिपादिका ॥ निषेधातिपृथग्भावमात्रं सैवविशेषवाक् ॥ १०१२ ॥ आपातानुपपन्नार्थासोपपादकवाङ्नचेत् ॥ अमानंस्या न्नतद्युक्तमतस्तंचबलात्स्पृशेत् ॥ १०१३ ॥ ॥

तानेव धर्मभेदबोधानेव अनु अनुसृत्य विधावति तमसिविधावति । मिथ्याज्ञानतारतम्येनपततीत्यर्थः ॥ १०११ ॥ सैव उक्तेयं श्रुतिरेव विशेषवाक् विशेषसाधकवाक् ॥ १०१२ ॥ कथमित्यतस्तदुपपादयति ॥ आपातेति ॥ अभेदेधर्मधर्मिभावस्यानुपपन्नतयाप्रतीयमानत्वादापाततोनुपपन्नार्थाइयंश्रुतिः सोपपादकवाक् उपपादकशक्तिविशेषवाङ्नचेत् अमानंस्यादितिसंबंधः । अयुक्तार्थस्याग्निनासिंचेदित्यादिवाक्यवदप्रामाण्यापरिहारादितिभावः । त दपौरुषेयश्रुतेरप्रामाण्यं । अतः उक्ताभेदधर्मधर्मिभाव

योरप्रामाणिकत्वायोगात् । तं उपपादकभेदप्रतिनिधिभगवच्छक्तिविशेषं ॥ १०१३ ॥ तत्रप्राक्सूचितंश्रौतंदृष्टांतमाह ॥ त्रिक्ष
णेति ॥ त्रिक्षणावस्थायिकर्मात्मकयागनिष्ठकालांतरभाविस्वर्गसाधनत्वान्यथानुपपत्त्या स्पष्टप्रमाणादृष्टस्यापितद्घटकादृष्टस्यक
ल्पनवत् श्रुत्याऽऽम्रेडितगुणगुणिभावान्यथानुपपत्त्यैव घटकीभूतेश्वरशक्तिविशेषसिद्धिरितिभावः ॥ १०१४ ॥ लौकिकनीति
विरुद्धतयापिनैर्गुण्यवादमपहसति ॥ नसहेतेति ॥ खलः परगुणासहिष्णुर्दुर्जनः परेषांगुणप्रतिपादकश्लोकान्नसहेत । दोषप्र
तिपादकश्लोकानार्जयेत् प्रयत्नेनसंगृह्णाति । तत्कुत्रदृष्टमित्यतआह ॥ त्यक्तेति ॥ त्यक्ताः अनेकाः सार्वज्ञादिगुणोक्तयो यैस्ते

त्रिक्षणस्थायियागाख्यकर्मणस्स्वर्गहेतुतां ॥ कालक्षेपेपिशंसंतीयथार्थी सैवपुण्यवाक् ॥ १०१४ ॥
नसहेतगुणश्लोकान्दोषश्लोकान्खलोर्जयेत् ॥ त्यक्तानेकगुणोक्तीनांकिंनवैगुण्यवाग्भरः ॥ १०१५ ॥
निष्फलंजन्मिनांजन्मपरलोकफलंनचेत् ॥ यथात्रिगुणशून्यत्वाद्गुणपूर्णोपिनिर्गुणः ॥ १०१६ ॥ ज्ञा
नादिगुणशून्यत्वंचेतनस्यनहिक्कचित् ॥ अतोनिर्गुणवाक्यार्थोनसर्वगुणशून्यता ॥ १०१७ ॥ ॥

षां मायावादिनां नैर्गुण्यवाग्भरः निर्गुणत्वरूपदोषप्रतिपादकवाक्येआग्रहः ॥ १०१५ ॥ अधुना निर्गुणवाक्यस्यगुणत्रयनिषेध
परत्वंलोकनीत्योपपादयति ॥ निष्फलमिति ॥ जन्मिनांप्राणिनां यथाफलविशेषाभावमादायनिष्फलमितिसामान्यवचनं तथा
गुणत्रयाख्यगुणनिषेधमभिप्रेत्यनैर्गुण्योक्तिरितिभावः ॥ १०१६ ॥ इदानींसर्वैरपिनिर्गुणश्रुतेस्संकोचएवाश्रयणीयइतिभावेनाह
॥ ज्ञानादिगुणशून्यत्वमिति ॥ चेतनस्येतिहेतुगर्भविशेषणं । अन्यथाचेतनत्वहानेरितिभावः । अतः ज्ञानादिगुणानामाव

श्यकत्वात् ॥ १०१७ ॥ गुणसौरभप्रमेयमुपसंहरति ॥ तस्मादिति ॥ तस्मा त्सर्वगुणपूर्णत्वस्यश्रुतियुक्तिरूपसाधकसद्भावा
द्बाधकाभावाच्च सर्वदानित्याःसत्याश्चेतिसंबंधः । तेन बहुकालीनत्वरूपनित्यत्वं व्यावहारिकसत्यत्वंचव्यावर्त्यते । इति उक्तंस
र्वंप्रमेयं अतिमंगलं परममंगलं ॥ १०१८ ॥ इदानींग्रंथकारस्स्वकृतयुक्तिमल्लिकाप्रथमपरिच्छेदस्यगुणोचितंनामकुर्वन्भारतीकृप
यास्यग्रंथस्यकृतत्वाद्ग्रंथाभिमानिन्यातयैवतंपरिच्छेदार्थंहरावर्पयति ॥ वादिराजेति ॥ साधिता संपादिता । भारतीपक्षे स्ववा
ग्वैखरीप्रदत्वेनसंपादिता युक्तिमल्लिका ग्रंथः युक्तयोमल्लिकाइव बुधजनमनोवासयंत्योयस्यास्सेतिग्रंथाभिमानिनीभारतीच गुण

तस्माद्विष्णोर्गुणास्सर्वेनित्यास्सत्याश्चसर्वदा ॥ अनंताश्श्रुतिसद्युक्तिसिद्धाश्चेत्यतिमंगलं ॥ १०१८ ॥
वादिराजाख्ययतिनासाधितायुक्तिमल्लिका ॥ गुणसौरभसर्वस्वंमुदेविष्णोर्न्यवेदयत् ॥ १०१९ ॥
इतिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीमद्वादिराजपूज्यचरणविरचितायांयुक्तिमल्लिकायांगुणसौरभंसंपूर्णं॥१॥

सौरभसर्वस्वं गुणप्रतिपादकश्रौतपदवासनाभरितत्वात् गुणसौरभाख्यस्वप्रमेयपरिच्छेदसंपदं विष्णोर्न्यवेदयत् अनया त्वंप्रीतो
भवेतिविष्णवेनिवेदितवतीत्यर्थः । यथा हरिचरणसमर्पितामल्लिका स्वसौरभंहरयेसमर्पयति तथेतिरूपकांतर्लीनोपमाचध्वनितेति
द्रष्टव्यं ॥ १०१९ ॥ इतिश्रीमद्वादिराजतीर्थश्रीपादकृतयुक्तिमल्लिकाटीकायां सुरोत्तमतीर्थकृतायां भावविला
सिन्यां गुणसौरभसर्वस्वव्याख्यासंपूर्णा ॥ १ ॥ ॥ ॥ ॥

